उ॰ भुव इत्यन्तरिक्षं । सुव इत्यसौ लोकः ॥ १ ॥ मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतींꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि ॥ २ ॥ मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नं । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्च-

---

भा॰ दित्यादिभिर्लोकादयो महीयन्त इति । आत्मना ह्यङ्गानि महीयन्ते महनं वृद्धिरुपचयो महीयन्ते वर्द्धन्त इत्यर्थः ॥ अयं लोकोऽग्निर्ऋग्वेदः प्राण इति प्रथमा व्याहृतिर्भूरिति । एवमुत्तरोत्तरा एकैका चतुर्द्धा भवति ॥ १ ॥ २ ॥ मह इति ब्रह्म । ब्रह्मेत्योङ्कारः शब्दाधिकारेऽन्यस्यासम्भवादुक्तार्थमन्यत् ता वा एताश्चतस्रश्चतुर्द्धेति । ता वा एता भूर्भुवः सुवर्मह इति चतस्र एकैकशश्चतुर्धा चतुःप्रकाराः ।

---

व्या॰ वेत्युत्पत्तिविधिरुक्तः । इदानीमङ्गविशेषविधिः कथ्यते । भूरिति वा अयं लोक इत्यादिना ।

तत्रैकैका व्याहृतिश्चतुर्धा चतुःप्रकारा ध्यातव्येति तात्पर्यमाह । अयं लोक इत्यादिना । एकैका व्याहृतयो यदा चतुःप्रकाराश्चिन्त्यन्ते षोडशकलः पुरुष उपासितो भवतीत्यभिप्रेत्य

उ॰ तुर्थी । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥

---

भा॰ धाशब्दः प्रकारवचनः । चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः । तासां यथाक्लृप्तानां पुनरुपदेशस्तथैवोपासननियमार्थः । ता यथोक्तव्याहृतीर्यो वेद स वेद विजानाति । किं । ब्रह्म । ननु तद्ब्रह्म स आत्मेति ज्ञाते ब्रह्मणि न वक्तव्यमविज्ञातवत्स वेद ब्रह्मेति । न । तद्विशेषविवक्षुत्वाददोषः । सत्यं विज्ञातं चतुर्थव्याहृत्यात्मकं ब्रह्मेति न तु तद्विशेषो हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च । शान्तिसमृद्धमित्येवमन्तो विशेषणविशेष्यरूपो धर्मपूगो विज्ञायत इति । तद्विवक्षुर्हि शास्त्रमविज्ञातमिव ब्रह्म मत्वा स वेद ब्रह्मेत्याह । अतो न दोषः । यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद स वेद ब्रह्मेत्यभिप्रायः । अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्योभयोर्ह्यनुवाकयोरेकमुपासनं लिङ्गाच्च । भूरित्यग्नौ प्रतितिष्ठतीत्यादिकं लिङ्गमुपासनैकत्वे विधायकाभावाच्च । न हि वेदोपासितव्य इति विधायकः कश्चिच्छब्दोऽस्ति ।

---

था॰ सङ्क्षेपमाह । ता वा एता इति । स वेदब्रह्मेति । ब्रह्मवेदनं फलत्वेन न सङ्कीर्त्यतेऽधिकारविधिवाक्ये । किन्तु वक्ष्यमाणानुवाकेनास्मिन्नेव ब्रह्मोपासने गुणविधानं भविष्यतीति सूचयितुमित्याह । न तद्विशेषविवक्षुत्वादित्यादिना । यदि व्याहृत्यवयव एव ब्रह्मोपास्योपास्यते तदैवोपासकस्य प्रथमव्याहृत्यात्मकेऽग्नौ प्रतिष्ठाभिधानं घटते तस्माद्व्याहृत्यात्मकदेवताप्राप्त्यभिधानमुपासनैकत्वे लिङ्गमाह । लिङ्गाच्चेति । किञ्चैकत्र प्रधानविधावि-

उ० ३ ॥ असौ लोको यजूꣳषि वेद द्वे च ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं

---

भा० व्याहृत्यनुवाके ता यो वेदेति वक्ष्यमाणार्थत्वान्नोपासनभेदको वक्ष्यमाणार्थत्वस्य तद्विशेषविवक्षुत्वादित्यादिनोक्तं। सर्वे देवा अस्मै एवंविदुषेऽङ्गभूता आवहन्ति आनयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः॥३॥ इति पञ्चमोऽनुवाकः॥५॥

भूर्भुवः सुवःस्वरूपा मह इत्येतस्य हिरण्यगर्भस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्यदेवता इत्युक्तं। यस्य ताऽङ्गभूतास्तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थञ्च हृदयाकाशस्थानमुच्यते शालग्राम इव विष्णोः । तस्मिन् हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्मविशिष्टं साक्षादुपलभ्यते पाणाविवामलकं । मार्गश्च सर्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते ॥ स इति ॥ व्युत्क्रम्यायं पुरुष इत्यनेन सम्बध्यते। य एषोऽन्तर्हृदये हृदयस्यान्तर्हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽने-

---

आ० धिरपरश्च गुणविधिरित्येवमनुवाकभेदे चरितार्थेनानन्यथासिद्धं भेदकं प्रमाणमुपलभ्य इत्याह। विधायकाभावाच्चेति। विधायकाभावाच्च इति भिन्नविद्याबोधक इत्यर्थः। इति पञ्चमोऽनुवाकः ॥५॥

तदुपलभ्यत्वादिति ज्ञानाकारपरिणामिनि मनस्येवोपलभ्यत्वाद्धार्देरित्यर्थः*। तस्य मनसः प्रवृत्तिं दृष्ट्वा तदधिष्ठातृत्व

---

* ध्यानविशिष्टत्वार्थ इति पुस्तकान्तरपाठः। † सदसोऽपि पाठान्तरः।

उ॰ पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्त्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव

---

भा॰ कनाडीसुषिर ऊर्द्ध्वनालाधोमुखो विशस्यमाने पशौ प्रसिद्ध उपलभ्यते। तस्यान्तर्य्य एष आकाशः प्रसिद्ध एव करकाकाशवत्। तस्मिन् सोऽयं पुरुषः पुरि शयनात्पूर्णा वा भूरादयो लोका येनेति पुरुषो मनोमयः। मनो विज्ञानं। मनुतेर्ज्ञानकर्म्मणस्तन्मयस्तदुपलभ्यत्वात्। मनुतेऽनेनेति वा मनोऽन्तःकरणं तदभिमानी तन्मयस्तल्लिङ्गो वा। अमृतोऽमरणधर्म्मा। हिरण्मयो ज्योतिर्म्मयस्तस्यैवंलक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्येन्द्रस्य स्वरूपप्रतिपत्तये मार्गोऽभिधीयते। हृदयादूर्द्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु च प्रसिद्धा। सा चान्तरेण मध्ये प्रसिद्धे तालुके तालुकयोर्गता। यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डस्तस्य चान्तरेणेत्येतत्। यत्र केशान्तः केशानामन्तो मूलं विवर्त्तते विभागेन वर्त्तते मूर्द्धप्रदेश इत्यर्थः। तं देशं प्राप्य तत्र विनिःसृता व्यपोह्य विभज्य विदार्य्य शीर्षकपाले शिरःकपाले विनिर्गता या

---

घा॰ हिरण्मनाडी योगशास्त्रे बोध्यते *। तस्य शास्त्रे कारणाधिष्ठातृत्वेन

---

* हिरण्मयोऽनुमीयत इति पुस्तकान्तरपाठः।

उ॰ इति वायौ ॥ १ ॥ सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यं । आप्नोति मनसस्पतिं । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाश-

---

भा॰ मेन्द्रयोनिरिन्द्रस्य ब्रह्मणो योनिर्मार्गः स्वरूपप्रतिपत्तिद्वारमित्यर्थः । तथैव विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्यास्य लोकस्याधिष्ठाता भूरिति व्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतस्तस्मिन्नग्नौ प्रतितिष्ठत्यग्न्यात्मना इमं लोकमाप्नोतीत्यर्थः । तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ प्रतितिष्ठतीत्यनुवर्त्तते ॥ १ ॥ सुवरिति तृतीयव्याहृत्यात्मनि आदित्ये । मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति । तेष्वात्मभावेन स्थित्वाऽऽप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं स्वयमेव राजाधिपतिर्भवति अङ्गभूतानां देवानां यथा ब्रह्म । देवाश्च सर्वेऽस्मै बलिमावहन्त्यङ्गभूता यथा ब्रह्मणे ॥ आप्नोति मनसस्पतिं । सर्वेषां हि मनसां पतिः सर्वात्मकत्वाद्ब्रह्मणः । सर्वैर्हि मनोभिस्तन्मनुते । तदाप्नोत्येवं विद्वान् । किञ्च वाक्पतिः सर्वासां वाचां पतिर्भवति । तथैव चक्षुष्पतिश्चक्षुषां पतिः । श्रोत्रपतिः श्रोत्राणां पतिर्विज्ञानपतिर्विज्ञानानां पतिः । सर्वात्मकत्वात्सर्वप्रा-

---

आ॰ र्णियद्भवतीति शक्तिक्लृप्तमात्रमित्यर्थः । स्वाराज्यं निरङ्कुशमैश्वर्यं जगत्सृष्ट्यादिव्यापारं न भवतीत्याह । अङ्गभूतानां देवा-

उ॰ शरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दं । शान्तिसमृद्धममृतं । इति प्राचीनयोग्योपास्स्व ॥ २ ॥ वायावमृतमेकञ्च ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥

---

भा॰ णिनां करणैस्तद्वान् भवतीत्यर्थः । किञ्च ततोऽप्यधिकतरमेतद्भवति । किन्तत् । उच्यते । आकाशशरीरं आकाशः शरीरमस्य आकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरं । किन्तत्प्रकृतं ब्रह्म सत्यात्म सत्यं मूर्तामूर्तमवितथं स्वरूप-मात्मा स्वभावोऽस्य तदिदं सत्यात्म प्राणारामं प्राणेष्वा-रमणमाक्रीडा यस्य तत्प्राणारामं प्राणानां वाऽऽरामो यस्मिन् तत्प्राणारामं । मन आनन्दभूतं सुखकृदेव यस्य मनस्तन्मन आनन्दं । शान्तिसमृद्धं शान्तिरुपशमः शान्तिश्च तत्समृद्धं च शान्तिसमृद्धं । शान्त्या वा समृद्धं तदुपलभ्यत इति । शान्तिसमृद्धममरणधर्मि एतच्चाधिकतरं विशेषणं तत्रैव मनोमय इत्यादौ द्रष्टव्यमिति । एवं मनोमयत्वा-दिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य उपास्स्वेत्या-चार्यवचनोक्तिरादरार्था ॥ २ ॥ ॥ षष्ठोऽनुवाकः ॥ ६ ॥

---

घा॰ नामिति । सार्वाधिकमैश्वर्यमत एवाह । आप्नोतीत्यादिना । इति षष्ठोऽनुवाकः ॥ ६ ॥

उ॰ पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतयः । आकाश आत्मा । इत्यधिभूतं ॥ अथाध्यात्मं । प्राणोऽपानो व्यान उदानः समानः । चक्षुः श्रोत्रं मनो वाक्त्वक् । चर्म्म माꣳसꣳ स्नावास्थि

---

भा॰ यदेतद्व्याहृत्यात्मकं ब्रह्मोपास्यमुक्तं तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते । पञ्चसङ्ख्यायोगात्पङ्क्तिच्छन्दःसम्पत्तिस्ततः पाङ्क्तत्वं सर्व्वस्य । पाङ्क्तश्च यज्ञः पञ्चपदा पङ्क्तिः । पाङ्क्तो यज्ञ इति श्रुतेः । तेन यत्सर्व्वं लोकाद्यात्मान्तञ्च पाङ्क्तं परिकल्पयति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभिसम्पद्यते । तत्कथं पाङ्क्तमिदं सर्व्वमित्यत आह । पृथिव्यन्तरिक्षं द्यौर्दिशो वाऽन्तरदिश इति लोकपाङ्क्तं । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणीति देवतापाङ्क्तं । आप ओषधयो वनस्पतय आकाश आत्मेति भूतपाङ्क्तं । आत्मेति विराड्भूताधिकारादित्यधिभूतमित्यधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थं । लोकदेवतापाङ्क्तयोश्चाभिहितत्वात् । अथानन्तरमध्यात्मं

---

आ॰ उत्तरोऽप्यनुवाकः प्रकारान्तरेण हिरण्यगर्भोपासनविषय इत्याह । यदेतदित्यादिना । पृथिव्यादेः कथं पाङ्क्तत्वमित्याकाङ्क्षायां सङ्ख्यासाम्यात् छन्दसः सम्पादनादित्याह । पञ्चसङ्ख्येति । न केवलं पञ्चसङ्ख्यायोगात्पङ्क्तिच्छन्दःसम्पादनं यज्ञत्वसम्पादनमपि कर्तुं शक्यम् इत्याह । पाङ्क्तश्च यज्ञ इति । पत्नीयजमानदेव

उ॰ मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥ १ ॥ सर्वमेकञ्च ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥

ओमिति ब्रह्म । ओमितीदꣳ सर्वम् । ओमित्ये-

---

भा॰ पाङ्क्तत्रयमुच्यते। प्राणादि वायुपाङ्क्तम्। चक्षुरादीन्द्रियपाङ्क्तम्। चर्मादि धातुपाङ्क्तम्। एतावद्धीदं सर्वमध्यात्मं। बाह्यञ्च पाङ्क्तमेवेत्येतदेवं अधिविधाय परिकल्प्य ऋषिर्वेददर्शनसम्पन्नो वा कश्चिदृषिरवोचदुक्तवान् । किमित्याह । पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैवाध्यात्मिकेन सङ्ख्यासामान्यात्पाङ्क्तं बाह्यं स्पृणोति बलयति पूरयति । एकात्मतयोपलभ्यत इत्येतदेव पाङ्क्तमिदं सर्वमिति यो वेद स प्रजापत्यात्मैव भवतीत्यर्थः ॥ १ ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तं। अनन्तरं पाङ्क्तस्वरूपेणेदानीं सर्वोपासनाङ्गभूतस्योङ्कारस्योपासनं विधित्स्यते। परापरब्रह्मदृष्ट्या ह्युपास्यमान ओङ्कारः शब्दमात्रोऽपि परापरब्रह्मप्राप्तिसाधनं भवति । स ह्यालम्बनं

---

आ॰ मानुषवित्तैः पञ्चभिः सम्पादित इति यज्ञः पाङ्क्त इत्यर्थः । उत्कृष्टदृष्टिर्निकृष्टे फलवतीति न्यायाद्बाह्यपाङ्क्तरूपेणाध्यात्मिकपाङ्क्तमयमवगन्तव्यमित्यभिप्रेत्याह । एकात्मतयेति । इति सप्तमोऽनुवाकः ॥ ७ ॥

वृत्तानुवादपूर्वकमुत्तरानुवाकमवतारयति । व्याहृत्यात्मन इत्यादिना । वेदविदां हि सर्वाः क्रिया ओङ्कारमुच्चार्य प्रवर्तन्ते तस्य ब्रह्मप्रतीकत्वालम्बनत्वपरिहारेणोपदिष्टं ब्रह्म न बुद्धिमारोहेदत

उ॰ तदनुकृतिर्ह स्म वा अप्योश्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओंशोमिति शस्त्राणि शंसन्ति । ओमित्यध्वर्य्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति ॥ ओमित्यग्निहोत्रमनुजानाति । ओमिति

---

भा॰ ब्रह्मणः परस्यापरस्य च प्रतिमेव विष्णोः। एतेनैवायतनेनैकतरमन्वेतीति श्रुतेः। ओमिति। इतिशब्दः स्वरूपपरिच्छेदार्थः। ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेदुपासीत। यत ओमितीदं सर्व्वं हि शब्दरूपमोङ्कारेण व्याप्तं। तद्यथा शङ्कुना इति श्रुत्यन्तरात्। अभिधानतन्त्रं ह्यभिधेयमित्यत इदं सर्व्वमोङ्कार इत्युच्यते। ओङ्कारस्तुत्यर्थमुत्तरो ग्रन्थः। उपास्यत्वात्तस्य। ओमित्येतदनुकृतिरनुकरणं। करोमि यास्यामि चेति। कृतमुक्त ओमित्यनुकरोत्यन्यः। अत ओङ्कारोऽनुकृतिः। ह स्म वै इति प्रसिद्धार्थद्योतकाः। प्रसिद्धं ह्योङ्कारस्यानुकृतित्वं। अपि चोश्रावयेति तत्पूर्व्वकमाश्रावयति प्रतिश्रावयति। तथोमिति सामानि गायन्ति सामगाः। ओमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि। तथोमित्यध्वर्य्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौत्यनुजानाति। ओमित्यग्निहोत्रमनुजानाति जुहोमीत्युक्तः। ओमित्येवानुज्ञां प्रयच्छति। ओमित्येव ब्राह्मणः प्रवक्ष्यन्

---

आ॰ प्रमादाद्यैर्वोपासनं निर्धार्य्यत इत्यर्थः। मन्त्रोच्चारस्य शब्दमात्रस्यापेक्षणादहमनेनोपासित इति ज्ञानाभावात्कथं

उ॰ ब्राह्मणः प्रवक्ष्यन्नाह । ब्रह्मोपाप्नुवानीति । ब्रह्मैवोपाप्नोति ॥ १ ॥ ओं दश ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

ऋतञ्च स्वाध्यायप्रवचने च । सत्यञ्च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च ।

---

भा॰ प्रवचनं करिष्यन्नध्येष्यमाण ओमित्येवाह । ओमिति प्रतिपद्यतेऽध्येतुमित्यर्थः । ब्रह्म वेद उपाप्नुवानीति प्राप्नुयां ग्रहीष्यामीति । उपाप्नोत्येव ब्रह्म । अथवा ब्रह्म परमात्मा तमुपाप्नुवानीत्यात्मानं प्रवक्ष्यन् प्रापयिष्यन्नोमित्येवाह । स चेतनोङ्कारेण ब्रह्म प्राप्नोत्येव । ओङ्कारपूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्तस्मादोङ्कारं ब्रह्मोपासीतेति वाक्यार्थः ॥ १ ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

विज्ञानादेवाप्नोति स्वाराज्यमित्युक्तत्वात् श्रौतस्मार्तानां कर्मणामानर्थक्यं प्राप्तमित्येतन्मा प्रापदिति कर्मणां

---

घ्या॰ फलदातृत्वं स्यादित्याशङ्क्याह । परापरेति । प्रतिमाद्यर्चनमिव सर्वत्र ईश्वर एव फलदातेति भावः । ओङ्कारे ब्रह्मत्वाध्यासे किं सादृश्यमित्यत आह । ओमितीदमिति । सर्वात्मत्वमोङ्कारस्य ब्रह्मणा सादृश्यमित्यर्थः । शस्त्राणि गीतिरहिता ऋच उच्यन्ते । प्रतिगरमित्योंशोंसामो दैवेति शब्दमध्वर्युः प्रतिगृणाति होतुः शंसनं प्रति । प्रतिप्रसवमनुज्ञां करोतीत्यर्थः । प्रवक्ष्यन्निति । वच परिभाषण इत्यस्य रूपं प्रथमव्याख्याने । द्वितीये वह प्रापण इत्यस्य रूपं । १ । इत्यष्टमोऽनुवाकः । ८ ।

व्यवहितानुवाकेन सम्बन्धमाह । विज्ञानादेवेत्यादिना ॥ अपरविद्यासहकारितया तत्पक्षेनैव फलवत्त्वसिद्ध्यर्थमुत्तरानु

उ० दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्याय-प्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रञ्च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषञ्च स्वाध्यायप्रव-चने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च

---

भा० पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमिहोपन्यासः । ऋतमिति व्याख्यातं । स्वाध्यायोऽध्ययनं । प्रवचनमध्यापनं ब्रह्मयज्ञो वा । एतान्यृतादीनि अनुष्ठेयानीति वाक्यशेषः । सत्यं सत्य-वचनं यथा व्याख्यातार्थं वा । तपः कृच्छ्रादि । दमो बाह्य-करणोपशमः । अग्नय आधातव्याः । अग्निहोत्रं होतव्यं । अतिथयश्च पूज्याः । मानुषमिति लौकिकः संव्यवहारः । तच्च यथाप्राप्तमनुष्ठेयं । प्रजाश्चोत्पाद्याः । प्रजनश्च प्रजननमृतौ भार्य्यागमनमित्यर्थः । प्रजातिः पौत्रोत्पत्तिः पुत्रो निवेशयितव्य इत्येतत्सर्व्वैरेतैः कर्म्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्व्वेण सह स्वाध्यायप्रवचनग्रहणं । स्वाध्यायाधीनं हि अर्थज्ञानं । अर्थज्ञानायत्तं च परं श्रेयः प्रवचनञ्च तदविस्मरणार्थं धर्म्मवृद्ध्यर्थञ्च अतः स्वाध्यायप्रवचनयोरादरः कार्य्यः ॥

---

आ० वाक्यशेष इत्यर्थः । लौकिकसंव्यवहारो विवाहादिः । पुनःपुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्य्यमाह । सर्व्वैरेतैरिति । किमिति यत्नतोऽनुष्ठेये तत्राह । स्वाध्यायाधीनमिति ।

उ॰ स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपो नित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ १ ॥ प्रजा च स्वाध्यायप्रवचने च षट् च ॥ इति नवमोऽनुवाकः ॥ ९ ॥

---

भा॰ सत्यमिति सत्यमेवानुष्ठातव्यमिति । सत्यवचः सत्यमेव वचो यस्य सोऽयं सत्यवचा नाम वा तस्य । राथीतरः रथीतरस्य गोत्रो राथीतराचार्यो मन्यते । तप एव कर्त्तव्यमिति । तपोनित्यस्तपःपरस्तपो नित्य इति वा नाम । पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतो मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते । तद्धि तपस्तद्धि तपः । तद्धि तपो हि यस्मात्स्वाध्यायप्रवचने एव तपस्तस्मात्तेऽनुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थं ॥ १ ॥ इति नवमोऽनुवाकः ॥ ९ ॥

---

व्या॰ अथात्रामृषीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरेवादरं विदधाति । सत्यमित्यादिना । स्वाध्यायार्थं इति जपार्थः । इये सेति प्राप्तां क्रियतोतिवत् । इति नवमोऽनुवाकः ॥ ९ ॥

उ॰ दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रञ्च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषञ्च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च

---

भा॰ पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमिहोपन्यासः। ऋतमिति व्याख्यातं। स्वाध्यायोऽध्ययनं। प्रवचनमध्यापनं ब्रह्मयज्ञो वा। एतान्यृतादीनि अनुष्ठेयानीति वाक्यशेषः। सत्यं सत्यप्रवचनं यथा व्याख्यातार्थं वा। तपः कृच्छ्रादि। दमो बाह्यकरणोपशमः। शमश्च आधातव्याः। अग्निहोत्रं होतव्यं। अतिथयश्च पूज्याः। मानुषमिति लौकिकः संव्यवहारः। तच्च यथाप्राप्तमनुष्ठेयं। प्रजाश्चोत्पाद्याः। प्रजनश्च प्रजननमृतौ भार्य्यागमनमित्यर्थः। प्रजातिः पौत्रोत्पत्तिः पुत्रो निवेशयितव्य इत्येतत्सर्व्वैरेतैः कर्म्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्व्वेण सह स्वाध्यायप्रवचनग्रहणं। स्वाध्यायाधीनं हि अर्थज्ञानं। अर्थज्ञानायत्तं च परं श्रेयः प्रवचनञ्च तदविस्मरणार्थं धर्म्मवृद्ध्यर्थञ्च अतः स्वाध्यायप्रवचनयोरादरः कार्य्यः॥

---

था॰ वाक्यशेष इत्यर्थः। लौकिकसंव्यवहारो विवाहादिः। पुनःपुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्य्यमाह। सर्व्वैरेतैरिति। किमिति यत्नतोऽनुष्ठेये तत्राह। स्वाध्यायाधीनमिति।

उ० स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपो नित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ १ ॥ प्रजा च स्वाध्यायप्रवचने च षट् च ॥ इति नवमोऽनुवाकः ॥ ९ ॥

---

भा० सत्यमिति सत्यमेवानुष्ठातव्यमिति । सत्यवचः सत्यमेव वचो यस्य सोऽयं सत्यवचा नाम वा तस्य । राथीतरः रथीतरस्य गोत्रो राथीतराचार्यो मन्यते । तप एव कर्त्तव्यमिति । तपोनित्यस्तपःपरस्तपो नित्य इति वा नाम । पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतो मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते । तद्धि तपस्तद्धि तपः । तद्धि तपो हि यस्मात्स्वाध्यायप्रवचने एव तपस्तस्मात्तेऽनुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थं ॥ १ ॥ इति नवमोऽनुवाकः ॥ ९ ॥

---

भा० अथाधुनाल्पर्षीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरेवादरं विदधाति । सत्यमित्यादिना । स्वाध्यायार्थं इति जपार्थः । इत्येवेति आख्यां विनक्तीतिवत् । इति नवमोऽनुवाकः ॥ ९ ॥

उ० अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्द्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणं सवर्चसं। सुमेधा अमृतोक्षितः। इति त्रिशङ्को-

---

भा० अहं वृक्षस्य रेरिवेति स्वाध्यायार्थो मन्त्राम्नायः। स्वाध्यायश्च विद्योत्पत्तये प्रकरणात्। विद्यार्थं हि इदं प्रकरणं। न चान्यार्थत्वमवगम्यते। स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते। अहं वृक्षस्योच्छेदात्मकस्य संसार-वृक्षस्य रेरिवा प्रेरयिता अन्तर्याम्यात्मना। कीर्त्तिः ख्यातिर्गिरेः पृष्ठमिवोच्छ्रिता मम। ऊर्द्ध्वपवित्र ऊर्द्ध्वं कारणं पवित्रं पावनं ज्ञानं प्रकाश्यं पवित्रं परमं च ब्रह्म यस्य सर्वात्मनो मम सोऽहं ऊर्द्ध्वपवित्रो वाजिनीव वाजवतीव। वाजमन्नं तद्वति सवितरीत्यर्थः। यथा सवितरि अमृ-तमात्मतत्त्वं विशुद्धं श्रुतिस्मृतिशतेभ्यः एवं स्वमृतं शोभनं विशुद्धमात्मतत्त्वमस्मि भवामि। द्रविणं धनं सवर्चसं दीप्तिमत्तदेवात्मतत्त्वमस्मीत्यनुवर्त्तते। ब्रह्मज्ञानं वा आत्म-तत्त्वप्रकाशकत्वात्। सुवर्चसं द्रविणमिव द्रविणं मोक्षसुख-हेतुत्वात्। अस्मिन्पक्षे प्राप्तं मयेत्यध्याहारः कर्त्तव्यः। सुमेधाः शोभना मेधा सर्व्वज्ञलक्षणा यस्य मम सोऽहं सुमेधाः। संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्सुमेधस्त्वं। अत

---

आ० अन्यत्र विनियोजकश्रुत्यादिप्रमाणमपि नोपलभ्यत इत्याह। न चान्यार्थत्वमिति। आहिताग्न्यादिवदुपासनाविधिशेषत्वं वा वक्तुं न शक्यते। ज्ञानक्रियासाधनविधेः प्रक्रान्तत्वादित्यर्थः।

उ॰ वेदानुवचनं ॥ १ ॥ अहं षट् ॥ इति दशमोऽनुवाकः ॥ १० ॥

वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्म्मञ्चर ।

---

भा॰ एवामृतोऽमरणधर्मा अक्षितोऽक्षीणोऽव्ययः। उक्षितो वा अमृतेन वोक्षितः सिक्तोऽमृतोक्षितोऽहमित्यादि ब्राह्मणमिति। एवं त्रिशङ्कोरार्षेण ब्रह्मभूतस्य ब्रह्मविदो वेदानुवचनं। वेदो वेदनमात्मैकत्वविज्ञानं तस्य प्राप्तिमनुवचनं वेदानुवचनं। आत्मनः कृतकृत्यताख्यापनार्थं वामदेववत्त्रिशङ्कुनार्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाश इत्यर्थः। अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते॥ ऋतं चेत्यादिकर्मोपन्यासादनन्तरञ्च वेदानुवचनपाठादेतदवगम्यते। एवं श्रौतस्मार्त्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य परं ब्रह्म विविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणीति ॥ १ ॥ इति दशमोऽनुवाकः ॥ १० ॥

वेदमनूच्येत्येवमादिकर्त्तव्यतोपदेशारम्भः प्राग्ब्रह्मविज्ञानान्नियमेन कर्त्तव्यानि श्रौतस्मार्त्तकर्माणीत्येवमर्थः।

---

आ॰ अहं वृक्षस्येति मन्त्रस्य ऋषिस्त्रिशङ्कुः पङ्क्तिश्छन्दः परमात्मा देवता ब्रह्मविद्यार्थो जपे विनियोगः। न केवलमस्य जपो विद्यार्थः पूर्वोक्तानि कर्माण्यपीत्याह ऋतञ्चेत्यादिना ॥ १ ॥ इति दशमोऽनुवाकः ॥ १० ॥

उत्तरानुवाकस्य तात्पर्यमाह। वेदमनूच्येत्यादिना। विद्योत्पत्त्यर्थं नित्यनैमित्तिकान्यनुष्ठेयानीत्येको नियम उक्तः। प्रागेव तान्यनुष्ठेयानीति नियमान्तरमाह। प्रागिति। प्रागुपन्यासाच्च

भा० अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्। संस्कृतस्य हि विशु-द्धसत्त्वस्यात्मज्ञानमञ्जसैवोपपद्यते। तपसा कल्मषं हन्ति विद्य-याऽमृतमश्नुत इति स्मृतिः। वक्ष्यति च। तपसा ब्रह्म विजि-ज्ञासस्वेति। अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्म्माणि। अनु-शास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः। प्रागुपन्यासाच्च कर्म्मणां केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्म्मा-ण्युपन्यस्तानि। उदितायाञ्च विद्यायामभयं प्रतिष्ठां विन्दते। न बिभेति कुतश्चनेति। किमहं साधु नाकरवमित्येवमादिना कर्म्मनैष्किञ्चन्यं दर्शयिष्यतीत्यतोऽवगम्यते। पूर्वोपचितदु-रितक्षयद्वारेण विद्योत्पत्त्यर्थानि निष्कर्म्माणीति मन्त्रवर्णाच्च। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति. ऋता-दीनां पूर्व्वत्रोपदेशआनर्थक्यपरिहारार्थः। इह तु ज्ञानो-त्पत्त्यर्थत्वात्कर्त्तव्यनियमार्थः। वेदमनूच्याध्याप्याचार्यो ऽन्तेवासिनमनुशास्ति ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः। अतोऽवगम्यते अधीतवेदस्य धर्म्मजिज्ञासा-मकृत्वा गुरुकुलान्न समावर्त्तितव्यमिति बुद्धा कर्म्माणि चारभेदिति स्मृतेश्च। कथमनुशास्तीत्याह। सत्यं वद

---

आ० कर्म्मणामिति षष्ठ्यन्तपाठं विवक्षोरिति। केवलेत्यादिना। अवि-द्यया कर्म्मणा मृत्युं तीर्त्वेति मन्त्रोऽपि विद्योत्पत्तेः प्रागेव कर्म्मा-नुष्ठानं सूचयतीत्यर्थः। ऋतञ्च स्वाध्यायप्रवचने चेत्यादिना पूर्वत्र कर्म्मानुष्ठानमुक्तमेवातः पुनरुक्तमित्याशङ्क्याह। ऋतादीना-मिति। विचारमकृत्वा गुरुकुलान्न निवर्त्तितव्यं। किन्त्वध्ययनविधे-रर्थावबोधपर्यन्तत्वात् पुरुषार्थपर्यवसायिनामिज्यर्थमहरहरध्या-क्षरमर्थावबोधे प्रयतितव्यमित्याह। यज्ञयदृच्याद्विति।

उ॰ स्वाध्यायान्मा प्रमदः । आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यं । धर्म्मान्न प्रमदितव्यं । कुशलान्न प्रमदितव्यं । भूत्यै न प्रमदितव्यं । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं ॥ १ ॥ देवपितृकार्य्याभ्यां न प्रमदितव्यं । मातृदेवो भव । पितृ-

---

भा॰ यथा प्रमाणावगतं तत्त्वं वद । तद्धर्म्मं चर । धर्म्म इत्यनुष्ठेयानां सामान्यवचनं सत्यादिविशेषनिर्द्देशात् ॥ स्वाध्यायादध्ययनान्मा प्रमदः प्रमादं माकार्षीः । आचार्य्यायाऽऽचार्य्यार्थं प्रियमिष्टं धनमाहृत्यानीय दत्त्वा विद्यानिष्क्रियार्थमाचार्य्येण चानुज्ञातोऽनुरूपान्दारानाहृत्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः प्रजासन्ततेर्विच्छित्तिर्न कर्त्तव्या । अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्म्मणा तदुत्पत्तौ यत्नः कर्त्तव्य इत्यभिप्रायः । प्रजा प्रजनप्रजातित्रयनिर्द्देशसामर्थ्यात् । अन्यथा प्रजनश्चेत्येतदेकमेवावक्ष्यत् । सत्यान्न प्रमदितव्यं प्रमादो न कर्त्तव्यः । सत्याच्च प्रमदनमनृतप्रसङ्गः । प्रमादशब्दसामर्थ्यात् । विस्मृत्याप्यनृतं न कर्त्तव्यमित्यर्थः । अन्यथाऽसत्यवदनप्रतिषेध एव स्यात् । धर्म्मान्न प्रमदितव्यं । धर्म्मश्च-

---

व्या॰ वेदमधीत्य स्नायादिति स्मृतिरप्येतच्छ्रुतिनिबद्धेत्याह । अतोऽवगम्यत इति । वक्तव्यमिति वचनार्थं परस्य हितमित्यर्थः ॥

उ० देवो भव । आचार्य्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्म्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ॥ २ ॥ नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां

---

भा० स्यानुष्ठेयविषयत्वात् । अननुष्ठानं प्रमादः स न कर्त्तव्यो-ऽनुष्ठातव्य एव । कुशलादात्मरक्षार्थात् कर्म्मणो न प्रमदितव्यं । भूतिर्विभूतिस्तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्म्मणो न प्रमदितव्यं । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं । ते हि नियमेन कर्त्तव्ये इत्यर्थः । देवपितृकार्य्याभ्यां न प्रमदितव्यं दैवपित्र्ये कर्म्मणी कर्त्तव्ये। मातृदेवो माता देवो यस्य स त्वं भव स्याः । एवं पितृदेवः । आचार्य्यदेवोऽतिथिदेवो भव। देवतावदुपास्या एते इत्यर्थः । यान्यपि चान्यान्यनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्म्माणि तानि सेवितव्यानि कर्त्तव्यानि त्वया नो कर्त्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि। यान्यस्माकमाचार्य्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि तान्येव त्वयोपास्यानि अदृष्टार्थान्यनुष्ठेयानि नियमेन कर्त्तव्यानीत्येतत्। नो इतराणि विपरीतान्याचार्य्यकृतान्यपि । ये के च विशेषिता आचार्य्यत्वादिधर्म्मैरस्मादस्मत्तः श्रेयांसः

---

सर्व्वमेतत् स्यादिति । एवं कर्त्तव्यमर्थमुपदिश्यानुष्ठानकाले

उ॰ त्वयासनेन प्रश्वसितव्यं । श्रद्धया देयं । अश्रद्धया-
ऽदेयं । श्रिया देयं । ह्रिया देयं । भिया देयं ।
संविदा देयं । अथ यदि ते कर्म्मविचिकित्सा
वा वृत्तविचिकित्सा वा स्यात् ॥ ३ ॥ ये
तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः ।
अलूक्षा धर्म्मकामाः स्युः । यथा ते तत्र वर्त्तेरन् ।
तथा तत्र वर्त्तेथाः । अथाभ्याख्यातेषु । ये तत्र
ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा

---

भा॰ प्रशस्ततरास्ते च ब्राह्मणा न चाचार्य्यास्तेषामासनेनाऽऽस-
नदानादिना त्वया प्रश्वसितव्यं प्रश्वसनं प्रश्वासः श्रमाप-
नयस्तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः । तेषां वाऽऽसने
गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यं । प्रश्वासो-
ऽपि न कर्त्तव्यः केवलं तदुक्तसारग्राहिणा भवितव्यं ।
किञ्च यत्किञ्चिद्देयं तच्छ्रद्धयैव देयं । अश्रद्धयाऽदेयं न
दातव्यं । श्रिया विभूत्या देयं दातव्यं । ह्रिया लज्जया च
देयं । भिया च भयेन देयं । संविदा च । संविन्मित्रादिकार्य्यं ।
अथैवं वर्त्तमाने त्वयि यदि कदाचित्ते तव श्रौते स्मार्त्ते
वा कर्म्मणि वृत्ते वा आचारलक्षणे विचिकित्सा संशयः
स्याद्भवेत् । ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र
कर्म्मादौ युक्ता इति व्यवहितेन सम्बन्धः कर्त्तव्यः । सम्म-

---

पा॰ समुत्पन्नसंशयनिरासार्थं शिष्टाचारः प्रमाणयितव्य इत्याह । यथ-

उ॰ धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनं। एवमुपासितव्यं। एवमुचैतदुपास्यं॥ ४॥ स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि विचिकित्सा वा स्यात्तेषु वर्तेरन् सप्त च॥ इत्येकादशोऽनुवाकः॥ ११॥

भा॰ शिनो विचारक्षमाः। युक्ता अभियुक्ताः कर्म्मणि वृत्ते वा। आयुक्ता अपरप्रयुक्ताः। अलूक्षा अरूक्षा अक्रूरमतयः। धर्म्मकामा अदृष्टार्थिन अकामहता इत्येतत्। ते यथा तत्र तस्मिन् कर्म्मणि वृत्ते वा वर्त्तेरन् तथा त्वमपि वर्त्तेथाः। अथाभ्याख्यातेष्वभ्युक्तदोषेण सन्दिह्यमानेन संयोजिताः केनचित्तेषु च यथोक्तं सर्व्वमुपनयेत् ये तत्रेत्यादि। एष आदेशो विधिः। एष उपदेशः पुत्रादीनां। एषा वेदोपनिषदेदरहस्यं वेदार्थ इत्येतत्। एतदेवानुशासनमीश्वरवचनं। आदेशवाक्यस्य विधेरुक्तत्वात्सर्व्वेषां वा प्रमाणभूतानामनुशासनमेतत्। यस्मादेवं तस्मादेवं यथोक्तं सर्व्वमुपासितव्यं कर्त्तव्यं। एवमु चैतदुपास्यमेव चैतच्चानुपास्यमित्यादरार्थं पुनर्वचनं॥ इत्येकादशोऽनुवाकः॥ ११ ॥

* अभियादिना। इत्येकादशोऽनुवाकः॥ ११॥

उ॰ शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्य्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषं । ऋतमवादिषं । सत्यमवादिषं । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्मां । आवीद्वक्तारं ॥ १ ॥ सत्यमवादिषं पञ्च च ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति द्वादशोऽनुवाकः ॥ १२ ॥

---

भा॰ अतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिं पठति । शन्नो मित्र इति । व्याख्यातमेतत्पूर्वं । अधुनेतच्चिन्त्यते विद्याकर्मणोर्विवेकार्थं । किं कर्मभ्य एव केवलेभ्यः परं श्रेय उत विद्यासव्यपेक्षेभ्यः । आहोस्विद्विद्याकर्मभ्यां संहताभ्यां विद्याया वा कर्मापेक्षाया उत केवलाया एव विद्याया इति । तत्र केवलेभ्य एव कर्मभ्यः स्यात् समस्तवेदार्थज्ञानवतः कर्माधिकाराद्वेदः कृत्स्नोऽधिगन्तव्यः । सरहस्यो द्विजन्मनेति स्मरणात् । अधिगमश्च सहोपनिषदर्थमात्मज्ञानादिना । विद्वान् यजते विद्वान् याजयति इति

---

व्या॰ अपरप्रयुक्ता इति स्वकृता इत्यर्थः । ग्रन्थादौ ब्रह्मवादे केवलाया विद्याया निःश्रेयसहेतुत्वमुक्तमपि स्फुटीकर्तुं कर्मविधिमुपलभ्य प्रसङ्गात् पुनर्विचारयितुमुपक्रमते । अधुनेतच्चिन्त्यत इत्यादिना । विवेकार्थमिति पृथक्फलताज्ञापनार्थमित्यर्थः । भूतं भव्यायोपदिश्यत इति न्यायेन ज्ञानस्यापि कर्मकर्तुः संस्कारत्वेन कर्मविधिशेषत्वाच्छ्रुतस्यापि फलस्यार्थवादमात्रत्वात्कर्मभ्य एव परोऽर्थ इति पूर्वपक्षसिद्धान्तमाह । नित्य-

उ॰ शन्नः शीक्षाएं मह नो यश्छन्दसां भूः स यः पृथिवीमित्यृतञ्चाहं वेदमनूच्य शन्नो द्वादश ॥ १२ ॥ शन्नो मह इत्यादित्यो नो दशराणि त्रयोविंशतिः ॥ २३ ॥ हरिः ॐ ॥ शन्नो यन्मारं ॥ इति शिक्षाध्यायः ॥ प्रथमा वल्ली ॥ ॥

---

भा॰ च विदुष एव कर्मण्यधिकारः प्रदर्श्यते। सर्वत्र ज्ञात्वानुष्ठानमिति च। स्वर्गाय वेदः कर्मार्थ इति हि मन्यन्ते। केचित्कर्मभ्यश्चेत्परं श्रेयो नावाप्यते वेदोऽनर्थकः स्याच्च। नित्यत्वान्मोक्षस्य। नित्यो हि मोक्ष इष्यते। कर्मकार्यस्यानित्यत्वं प्रसिद्धं। लोके कर्मभ्यश्चेच्छ्रेयोऽनित्यं स्यात् तच्चानिष्टं काम्यप्रतिषिद्धयोरनारम्भात्। आरब्धस्य च कर्मण उपभोगेन क्षयान्नित्यानुष्ठानाच्च प्रत्यवायानुपपत्तेर्ज्ञाननिरपेक्ष एव मोक्ष इति चेत्। तच्च न। शेषकर्मसम्भवात्। तन्निमित्तशरीरान्तरोत्पत्तिः प्राप्नोतीत्युक्तं। कर्मशेषस्य च नित्यानुष्ठानेनाविरोधात्क्षयानुपपत्तिरिति च। यदुक्तं समस्तवेदार्थज्ञानवतः कर्माधिकारादित्यादि। तच्च न।

---

आ॰ स्वादिवाक्यादिना। यद्यप्यध्ययनविधिप्रयुक्तः सत्स्नो वेदार्थे एवेन विचारितव्यतयाध्ययनविधौ प्रतिपत्त्यध्ययनं प्रतिवाक्यार्थ-विचारस्य चापरमेदात्प्रयुक्ताभ्युदयकामस्य कर्मोपयोगिवाक्यार्थज्ञानवत्त्वमात्रेण कर्मण्यधिकारसम्भवादुपासाद्यास्कारस्य तत्रानुपयोगित्वाच्च समस्तवेदार्थज्ञानवतः कर्माधिकारे प्रमाणमस्तीत्याह। तच्च नेति। यद्यपि चाध्ययनविधिप्रयुक्तो वेदान्त-विचारोऽपि सतो गुरुकुल एव तथापि न समस्तवेदार्थज्ञान-

भा॰ श्रुतज्ञानव्यतिरेकादुपासनस्य। श्रुतज्ञानमात्रेण हि कर्म्म-
ण्यधिक्रियते नोपासनमपेक्षते। उपासनञ्च श्रुतज्ञाना-
दर्थान्तरं विधीयते। मोक्षफलं अर्थान्तरप्रसिद्धञ्च स्यात्
श्रोतव्येत्युक्त्वा तद्व्यतिरेकेण मन्तव्यो निदिध्यासितव्य इति
यत्नान्तरविधानान्मनननिदिध्यासनयोश्च प्रसिद्धं श्रवण-
ज्ञानादर्थान्तरत्वं। एवं तर्हि विद्यासव्यपेक्षेभ्यः कर्म्मभ्यः
स्यान्मोक्षः। विद्यासहितानाञ्च कर्म्मणां भवेत्कार्य्यान्तरार-
म्भसामर्थ्यं। यथा स्वतोऽमरणज्वरादिकार्य्यारम्भसामर्थ्या-
नामपि विषदध्यादीनां मन्त्रशर्करादिसंयुक्तानां कार्य्यान्त-
रारम्भसामर्थ्यं। एवं विद्यासहितैः कर्म्मभिर्मोक्ष आरभ्यत
इति चेन्न। आरभ्यस्यानित्यत्वादित्युक्तदोषः। वचनादार-
भ्योऽपि नित्य एवेति चेत्। न। ज्ञापकत्वाद्वचनस्य। वचनं

---

व्या॰ वतोऽधिकारः। उपासनासाध्यस्य ब्रह्मसाक्षात्कारस्य पृथग्भा-
वादित्यर्थः। श्रुतज्ञानेति। श्रुताद्गुरुकुले विचारिताद्वाक्या-
दनुष्ठानोपयोगि यज्ञज्ञानं तावन्मात्रेण कर्म्मण्यधिक्रियते न ब्रह्म-
साक्षात्कारफलमुपासनमपेक्षते व्यतिरेकाभावादित्यर्थः। अध्या-
पनविधिव्यापारोपरमेऽनुष्ठेयतया भूतब्रह्मोपासनमेव नास्ति
मानाभावादिति न वक्तव्यमित्याह। उपासनञ्चेति। एतच्च
कर्म्ममीमांसान्यायाङ्गीकारमात्रेणोक्तं। वस्तुतस्तु श्रोतव्यविधि-
प्रयुक्त एवोपनिषद्विचारारम्भो भिन्नाधिकारः। कर्म्मकाण्डवि-
चारोऽप्युत्तरविधिप्रयुक्त एवेति प्रकटार्थे प्रतिष्ठितं। केवलं
कर्म्म मोक्षसाधनमिति पक्षं निरस्य विद्यासमुच्चितं मोक्षसा-
धनमिति पक्षान्तरमाशङ्क्य निषेधति। एवं तर्हीत्यादिना।
न स पुनरावर्त्तत इति वचनादारभ्योऽपि मोक्षो नित्य इति न
शक्यं वक्तुं। प्रसिद्धपदार्थयोग्यत्वमुपादाय वचनस्य संसर्गज्ञा-
पकत्वात्। न चारभ्यस्य नित्यत्वयोग्यत्वं प्रसिद्धं। अन्यथा वचनस्य

भा॰ नाम यथा भूतस्यार्थस्य ज्ञापकं नाविद्यमानस्य कर्तृ। न हि
वचनशतेनापि नित्यमारभ्यते आरब्धं वा विनाशि भवेत्।

एतेन विद्याकर्म्मणोः संहतयोर्मोक्षारम्भकत्वं प्रत्युक्तं।
विद्याकर्म्मणी मोक्षप्रतिबन्धहेतुनिवर्त्तके इति चेत्। न।
कर्म्मणः फलान्तरदर्शनात्। उत्पत्तिसंस्कारविकाराप्तयो
हि फलं कर्म्मणो दृश्यते। उत्पत्त्यादिफलविपरीतश्च मोक्षो
गतिश्रुतेराप्य इति चेत् सूर्य्यद्वारेण तयोर्द्ध्वमायन्नित्येव-
मादिगतिश्रुतिभ्यः प्राप्यो मोक्ष इति चेत्। न। सर्व्वगतत्वा-
द्गन्तृभिश्चानन्यत्वादाकाशादिकारणत्वात्सर्व्वगतं ब्रह्म। ब्रह्म
व्यतिरिक्ताश्च सर्व्वे विज्ञानात्मानोऽतो नाप्यो मोक्षः।
गन्तुरन्यद्विभिन्नं देशं भवति गन्तव्यं। न हि येनैवा-
व्यतिरिक्तं यत्तेनैव गम्यते तदनन्यत्वप्रसिद्धेश्च। तत्सृष्ट्वा तदे-
वानुप्राविशत्। क्षेत्रज्ञं चापि मां विद्धि। इत्येवमादिश्रुति-
स्मृतिशतेभ्यः। गत्यैश्वर्य्यादिश्रुतिविरोध इति चेत्। अथापि

---

टी॰ कारकत्वप्रसङ्गात्। अन्धो मणिमविन्ददित्यादिष्वपि योग्यताक-
ल्पनप्रसङ्गादित्याह। न ज्ञापकत्वादित्यादिना।

कर्म्म प्रधानं विद्या चोपसर्जनमिति समसमुच्चय इति तस्य समु-
च्चयेऽतिदिशति। एतेनेति। अनित्यत्वादिदोषप्रसङ्गेनेत्यर्थः।
मोक्षेति। मोक्षस्य प्रतिबन्धहेतुरविद्याऽधर्म्मादिस्तन्निवर्त्तके
विद्याकर्म्मणी न स्वरूपोत्पादिके। ततः स्वरूपावस्थानस्य नित्यत्वं।
प्रध्वंसस्य च जन्यस्यापि नित्यत्वं प्रसिद्धमित्यर्थः। भिद्यते हृदय-
ग्रन्थिरित्यादिश्रुतेः। केवलविद्यासाध्यैवाविद्यानिवृत्तिः। न तत्र
विद्यायाः सहकार्य्यपेक्षा। कर्म्मफलत्वादेव प्रसिद्धमित्याह।
न कर्म्मण इति। उत्पत्तिः पुरोडाशादेः। संस्कारो व्रीह्यादेः।
विकारः सोमस्य। आप्तिर्वेदस्य। कर्म्मफलं प्रसिद्धं। आत्मस्वरूपस्य

भा० स्त्र्याद्यप्राप्यो मोक्षो गतिश्रुतीनां च एकधा च यदि पितृलोककामो भवति स्त्रीभिर्वा यानैर्वा इत्यादिश्रुतीनाञ्च कोपः स्यादिति चेन्न। कार्य्यब्रह्मविषयत्वात्तासां। कार्य्ये हि ब्रह्मणि स्त्र्यादयः स्युर्न कारणे। एकमेवाद्वितीयं यत्र नान्यत्पश्यति तत्केन कं पश्येदित्यादिश्रुतिभ्यो विरोधाच्च। विद्याकर्म्मणोः समुच्चयानुपपत्तिः। प्रविलीनकर्त्रादि-कारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारक-साध्येन कर्म्मणा विरुध्यते। न ह्येकं वस्तु परमार्थतः कर्त्रादि-विशेषवत् तच्छून्यञ्चेत्युभयथा द्रष्टुं शक्यते। अवश्यं ह्यन्यतर-न्मिथ्या स्यादन्यतरस्य च मिथ्यात्वप्रसङ्गे युक्तं यत्स्वाभाविका-ज्ञानविषयस्य द्वैतस्य मिथ्यात्वं। यत्र हि द्वैतमिव भवति मृत्योः स मृत्युमाप्नोति। अथ यत्रान्यत् पश्यति तदल्पं। अन्योऽसावन्योऽहमस्मि। उदरमन्तरं कुरुते। अथ तस्य भयं भवतीत्यादिश्रुतिशतेभ्यः। सत्यत्वं चैकत्वस्यैकधैवानुद्रष्टव्य-

---

व्या० तु मोक्षस्यानादित्वादनादिप्रातिभ्यत्वादविकार्य्यत्वान्नित्यत्वाच्च कर्म्मफलाद्वैपरीत्यमित्यर्थः। गतिश्रुतेरिति। अर्च्चिरादिगति-श्रवणाद्ब्रह्मलोकादिस्थितप्राप्यप्राप्तिर्मोक्षस्य नित्यसत्त्वमप्रसिद्ध-मित्यर्थः। तथा प्राप्तिः किं संयोगलक्षणा तादात्म्यलक्षणा वा नोभयथापीत्याह। न सर्व्वगतत्वादिति। श्रुत्यादिश्रुतेस्तात्पर्य्यं शङ्कापूर्व्वकं दर्शयति। शक्त्यैश्वर्य्यैरित्यादिना। समुच्चयमभ्युपगम्य कर्म्मकार्य्यं किञ्चिन्मोक्षे न सम्भवतीत्युक्तं। सोऽपि न सम्भवती-त्याह। विरोधाच्चेत्यादिना।

यदि कर्त्रादिकारकभेदस्य सत्यत्वोभययोर्ब्रह्मज्ञानमुप-दिश्यते तदा मिथ्यार्थत्वात्कर्म्मविधीनामप्रामाण्यं स्यादित्याह। विहितत्वादिति। शङ्कां निरस्यति। यदीत्यादिना। अध्ययनवि-

भा० मेकमेवाद्वितीयं। ब्रह्मैवेदं सर्व्वमात्मैवेदं सर्व्वमित्यादि-
श्रुतिभ्यः । न च सम्प्रदानादिकारकभेदादर्शने कर्म्मोपप-
द्यते। अन्ये त्वदर्शनापवादाश्च विद्याविषये सहस्रशः श्रूयन्ते।
अतो विरोधो विद्याकर्म्मणोः । अतश्च समुच्चयानुपपत्तिः ।
तत्र यदुक्तं संहिताभ्यां विद्याकर्म्मभ्यां मोक्ष इति । अनुपपन्नं
तत्। विहितत्वात्कर्म्मणां । श्रुतिविरोध इति चेत् यद्युपमृद्य
कर्त्रादिकारकविशेषमात्मैकत्वविज्ञानं विधीयते। सर्पादि
भ्रान्तिज्ञानोपमर्द्दकरज्ज्वादिविषयविज्ञानवत्प्राप्तः कर्म्मवि-
धिश्रुतीनां निर्विषयत्वाद्विरोधः। विहितानि च कर्म्माणि।
स च विरोधो न युक्तः । प्रमाणत्वाच्छ्रुतीनामिति
चेत् न। पुरुषार्थोपदेशपरत्वाच्छ्रुतीनां। विद्योपदेशपरा
तावच्छ्रुतिः। संसारात्पुरुषो मोचयितव्य इति संसारहे-
तोरविद्याया निवृत्तिः कर्त्तव्येति विद्याप्रकाशकत्वेन प्रवृ-
त्तेति न विरोधः। एवमपि कर्त्रादिकारकसद्भावप्रतिपा-
दनपरं शास्त्रं विरुध्यत एवेति चेन्न। यथा प्राप्तमेव कार-
कास्तित्वमुपादायोपात्तदुरितक्षयार्थं कर्म्माणि विदध-
च्छास्त्रं मुमुक्षूणां फलार्थिनाञ्च फलसाधनं न कारका-
स्तित्वे व्याप्रियते। उपचितदुरितप्रतिबन्धस्य हि विद्यो-
त्पत्तिर्नावकल्पते। तत्क्षये च विद्योत्पत्तिः स्यात्ततश्चावि-

---

आ० निरपेक्षाणां श्रुतीनां पुरुषार्थोपदेशकत्वेन प्रामाण्यं वाच्यं।
अनु भेदस्य सत्यत्वेन ततः प्रसिद्धिसिद्धं कारकादिभेदमर्थं क्रिया-
समर्थमादाय प्रवृत्तानां प्रामाण्यं न विरुध्यत इत्याह । न पुरु-
षार्थेति । तद्भुववाक्यं निरस्यति । विद्योपदेशपरा तावदित्या-

भा॰ द्यानिवृत्तिस्तत आत्यन्तिकसंसारोपरमः। अपि च नात्मदर्शिनो ह्यनात्मविषयः कामः। कामयमानश्च करोति कर्माणि। तत्फलोपभोगाय शरीराद्युपादानलक्षणं संसारः। तद्व्यतिरिक्तात्मैकत्वदर्शिनो विषयाभावात् कामानुपपत्तिः। आत्मनि चानन्यत्वात्कामानुपपत्तौ स्वात्मन्यवस्थानं मोक्ष इत्यतोऽपि विद्याकर्मणोर्विरोधः॥

विरोधादेव च विद्या मोक्षं प्रति न कर्माण्यपेक्षते। स्वात्मलाभे तु पूर्वोपचितप्रतिबन्धापनयनद्वारेण विद्याहेतुत्वं प्रतिपद्यन्ते कर्माणि नित्यानीति। अत एवास्मिन् प्रकरणे उपन्यस्तानि कर्माणीत्यवोचाम। एवञ्चाविरोधः कर्मविधिश्रुतीनां। अतः केवलाया एव विद्यायाः परं श्रेय इति सिद्धं। एवं तर्ह्याश्रमान्तरानुपपत्तिः। कर्मनिमित्तत्वाद्विद्योत्पत्तेः। गार्हस्थ्ये च विहितानि कर्माणीत्यैकाश्रम्यमेव। अतश्च यावज्जीवादिश्रुतयोऽनुकूलतराः स्युः। न कर्मानेकत्वात्। न ह्यग्निहोत्रादीन्येव कर्माणि। ब्रह्मचर्यं तपः सत्यवदनं शमो दमोऽहिंसा इत्येवमादीन्यपि कर्माणीतराश्रम-

---

टी॰ दिना॥ पूर्वं सत्यमिथ्याविषयत्वेन विद्याकर्मणोर्विरोधमादाय समुच्चयो निरस्तः इदानीं काम्याकामिविषयत्वेनाविरोधमाह। अपि चेत्यादिना॥

समसमुच्चयं निरस्य गुणप्रधानभावेनापि तं निरस्यति। विरोधादेव चेति॥ विद्या चेत्कर्माणि स्वरूपफलेनापेक्षते विरुद्धत्वात्सिदयिद्धर्मवदनुगमनं कथं तर्हि विद्यासन्निधाने कर्मणां पाठ इत्यत आह। स्वात्मलाभे त्विति॥ कर्मणां विद्यासाधनत्वं श्रुत्वा गार्हस्थ्यमेवैकमनुष्ठेयमिति प्रत्यवतिष्ठन्ते धर्मजडाः।

भा॰ प्रसिद्धानि विद्योत्पत्तौ साधकतमान्यसङ्कीर्णत्वादिधनो ध्यानधारणादिलक्षणादीनि च। वक्ष्यति च। तपसा ब्रह्म-विजिज्ञासस्वेति। जन्मान्तरकृतकर्मभ्यश्च प्रागपि गार्हस्थ्याद्विद्योत्पत्तिसम्भवात् कर्मार्थत्वाच्च गार्हस्थ्यप्रतिपत्तेः कर्म-साध्यायाश्च विद्यायां सत्यां गार्हस्थ्यप्रतिपत्तिरनर्थिकैव। लोकार्थत्वाच्च पुत्रादीनां। पुत्रादिसाध्येभ्यश्चायं लोकः पितृलोक इत्येतेभ्यो व्यावृत्तकामस्य नित्यसिद्धात्मदर्शिनः कर्मणि प्रयोजनमपश्यतः कथं प्रवृत्तिरुपपद्यते। प्रतिपन्न-गार्हस्थ्यस्यापि विद्योत्पत्तौ विद्यापरिपाकाद्विरक्तस्य कर्मसु प्रयोजनमपश्यतः कर्मभ्यो निवृत्तिरेव स्यात्। प्रव्रजिष्यन् वा अरेऽहमस्मात् स्थानादस्मीत्येवमादिश्रुतिलिङ्ग-दर्शनात्। कर्मप्रतिश्रुतेर्यत्नाधिक्यदर्शनादयुक्तमिति चेद्-अग्निहोत्रादिकर्मप्रतिश्रुतेरधिको यत्नो महांश्च कर्मण्या-यासोऽनेकसाधनसाध्यत्वादग्निहोत्रादीनां। तपो ब्रह्म-चर्यादीनाञ्चेतराश्रमकर्मणां गार्हस्थ्येऽपि समानत्वादल्प-साधनापेक्षत्वाच्चेतरेषां न युक्तस्तुल्यवद्विकल्प आश्रमि-

---

टी॰ एवं सतीति। श्रुतिस्मृत्यन्तराणामपि विहितत्वाविशेषाद्दीप-कर्मसु कर्मत्वाविशेषाच्च साध्यधर्मान्तराणामेवैतच्चोद्यमित्याह। न कर्मानेकत्वादिति। असङ्कीर्णत्वादिति। हिंसाद्यमिश्रित-त्वादित्यर्थः। इतश्च विद्याकर्मणोः साधनत्वेऽपि न गार्हस्थ्य-मावश्यकमित्याह। जन्मान्तरेति। कामिनो गार्हस्थ्यस्यानुष्ठे-यत्वेऽपि न सर्वैरनुष्ठेयत्वमित्यत्र हेत्वन्तरमाह। लोकार्थत्वाच्चे-त्यादिना। गार्हस्थ्यस्यानापेक्ष्यत्वेन वैकल्पिकमनुष्ठानमुक्तं तच्चानुपपन्नत्वेन विकल्पमाक्षिपति। कर्मप्रतिश्रुतेरिति। जन्मा

भा० भिसत्येति चेन्न । जन्मान्तरकृतानुग्रहात् । यदुक्तं कर्माणि श्रुतेरधिको यत्न इत्यादि । नाऽसौ दोषः ॥

यतो जन्मान्तरकृतमग्निहोत्रादिलक्षणं ब्रह्मचर्य्यादिलक्षणञ्चानुग्राहकं भवति विद्योत्पत्तिं प्रति । ये च जन्मनैव विरक्ता दृश्यन्ते केचित् । केचित्तु कर्मसु प्रवृत्ता अविरक्ता विद्याविद्वेषिणस्तस्माज्जन्मान्तरकृतसंस्कारेभ्यो विरक्तानामाश्रमान्तरप्रतिपत्तिरेवेष्यते कर्मफलबाहुल्याच्च पुत्रस्वर्गब्रह्मवर्चसादिलक्षणस्य कर्मफलस्यासंख्येयत्वात् । तच्च प्रतिपुरुषाणां कामबाहुल्यात्तदर्थः श्रुतेरधिको यत्नः कर्मसूपपद्यते । आशिषां बाहुल्यदर्शनादिदं मे स्यादिदं मे स्यादित्युपायत्वाच्च । उपायभूतानि हि कर्माणि विद्यां प्रतीत्यवोचाम । उपायेऽधिको यत्नः कर्त्तव्यो नोपेये । कर्मनिमित्तत्वाद्विद्याया यत्नान्तरानर्थक्यमिति चेत्कर्मभ्य एव पूर्वोपचितदुरितप्रतिबन्धक्षयाद्विद्योत्पद्यते चेत् कर्मभ्यः पृथगुपनिषच्छ्रवणादियत्नोऽनर्थक इति चेत् नियमाभावात् । नहि प्रतिबन्धक्षयादेव विद्योत्पद्यते नत्वी-

---

आ० न्तरकृतानुग्रहादिति परिहाराय भाष्यं विवृणोति । यदुक्तमित्यादिना । कर्माणि यत्नाधिक्यमन्यथासिद्धत्वादिफलस्य विद्योत-कत्वं न सम्भवतीत्यर्थः ।

इदानीं गृहस्थाश्रमकर्मणां बहिरङ्गत्वं सन्न्यासाश्रमकर्मणामन्तरङ्गत्वं विद्यासाधनत्वमिति विशेषं दर्शयितुं चोद्यमुद्भावयति । कर्मनिमित्तत्वादित्यादिना । शान्तिवचसामपौनरुक्त्यमाह । शन्नो मित्र इति । तदपरं ब्रह्म मामवतु विद्यार्थिनमावीदरक्षदित्यर्थः । इति द्वादशोऽनुवाकः ॥ १२ ॥ इति श्रीपरमहंस परि-

॥

उ॰ हरिः ॐ। सह नाववतु। सह नौ भुनक्तु। सह वीर्य्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः॥

---

भा॰ स्वप्रसादनया ध्यानाद्यनुष्ठानादिति नियमोऽस्ति अहिंसाब्रह्मचर्य्यादीनाञ्च विद्यां प्रत्युपकारकत्वाच्छ्रावादेव कारणत्वाच्छ्रवणमननिदिध्यासनानां। अतः सिद्धान्याश्रमान्तराणि सर्व्वेषाञ्चाधिकारो विद्यायां परञ्च श्रेयः केवलाया विद्याया एवेति सिद्धं। शन्नो मित्र इत्यादि पूर्व्ववत् सर्व्वं॥ इति द्वादशोऽनुवाकः॥ १२॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य शङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये प्रथमोऽध्यायः शिक्षावल्ली॥ ॥ ॐ तत्सत्॥

अतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिः पठिता। इदानीन्तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्तिः पठ्यते। सह नाववत्विति॥ सह नाववतु नौ शिष्याचार्य्यौ सहैवावतु रक्षतु। सह नौ भुनक्तु भोजयतु। सह वीर्य्यं विद्यानिमित्तं सामर्थ्यं करवावहै निर्व्वर्त्तयावहै। तेजस्वि नौ आवयोस्तेजस्विनोरधीतं स्वधीतमस्त्वर्थज्ञानयोग्यमस्त्वित्यर्थः। मा विद्विषावहै विद्याग्रहणनिमित्तं शिष्यस्या-

---

आ॰ शङ्कराचार्य्यं श्रीमच्छुद्धानन्दपूज्यपादशिष्य श्रीभगवदानन्दज्ञानविरचितायां तैत्तिरीयोपनिषद्भाष्यटीकायां प्रथमोऽध्यायः॥ १। इदानीं परविद्यार्थिनमप्यवतु साधारण्येन यथा पूर्व्वं प्रार्थित

भा॰ चार्यस्य वा प्रमादकृतादन्यायाद्विद्वेषः प्राप्तस्तच्छमनायेयमाशीर्मा विद्विषावहा इति । मैवेतरेतरं विद्वेषमापद्यावहै । शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमुक्तार्थं वक्ष्यमाणविद्याविघ्नप्रशमनार्थञ्चेयं शान्तिः । अविघ्नेनात्मविद्याप्राप्तिराशास्यते । तन्मूलं हि परं श्रेय इति ॥

संहितादिविषयाणि कर्मभिरविरुद्धान्युपासनान्युक्तानि । अनन्तरञ्चान्तः सोपाधिकात्मदर्शनमुक्तं व्याहृतिद्वारेण स्वाराज्यफलेन च । एतावताऽशेषतः संसारबीजस्योपशमनमस्तीत्यतोऽशेषोपद्रवबीजस्याज्ञानस्य निवृत्त्यर्थं विधूतसर्व्वोपाधिविशेषात्मदर्शनार्थमिदमारभ्यते । ब्रह्मविदाप्नोति परमित्यादि ॥ प्रयोजनञ्चास्या ब्रह्मविद्याया अविद्यानिवृत्तिस्तत आत्यन्तिकः संसाराभावः । वक्ष्यति च विद्वान्न बिभेति कुतश्चनेति । संसारनिमित्ते च सत्यभयं प्रतिष्ठाञ्च विन्दत इत्यनुपपन्नं । कृताकृते पुण्यपापे न तपत

---

आ॰ त्वादित्यर्थः । असाधारणत्वेन परविद्योपसर्गशान्त्यर्थमाह । सह नाववत्विति । नौ आवयोस्तेजस्विनोरधीतं तेजस्व्यस्त्विति ॥

वृत्तानुवादपूर्व्वकमानन्दवल्ल्यास्तात्पर्यमाह । संहितादीत्यादिना । ननु यथापूर्व्वमाप्नोति स्वाराज्यमित्यपरविद्याफलमुक्तं संसारगोचरमेव तथाऽपरविद्याफलमपि । सोऽश्नुते सर्व्वान् कामानिति सर्व्वविषयसाध्यानन्दान् संसारगोचरानेव दर्शयिष्यन् कथमात्यन्तिकसंसाराभाव इत्यत आह । प्रयोजनञ्चास्या इति । सर्व्वकामशब्देन निरतिशयानन्दाभिव्यक्तिर्विवक्षिता ।

भा॰ इति च । अतोऽवगम्यतेऽस्माद्विज्ञानात्सर्व्वात्मब्रह्मविषया-
दात्यन्तिकः संसाराभाव इति स्वयमेव प्रयोजनमाह ।
ब्रह्मविदाप्नोति परमित्यादावेव सम्बन्धप्रयोजनज्ञापनार्थं ।
निर्ज्ञातयोर्हि सम्बन्धप्रयोजनयोर्विद्याश्रवणग्रहणधारणा-
भ्यासार्थं प्रवर्त्तते । श्रवणादिपूर्व्वकं हि विद्याफलं ।
श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुत्यन्तरेभ्यः ।
ब्रह्मविद्ब्रह्मेति वक्ष्यमाणलक्षणं । बृहत्तमत्वाद्ब्रह्म तद्वेत्ति
विजानातीति ब्रह्मविदाप्नोति परं निरतिशयं तदेव
ब्रह्म परं । न ह्यन्यस्य विज्ञानादन्यस्य प्राप्तिः । स्पष्टञ्च
श्रुत्यन्तरं ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्शयति स यो ह वै
तत्परमं ब्रह्म वेद ब्रह्मैव भवतीत्यादि ॥

ननु सर्व्वगतं सर्व्वस्यात्मभूतं ब्रह्म वक्ष्यति अतो नाप्यं
प्राप्तिश्चान्यस्यान्येन परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा ।
अपरिच्छिन्नं सर्व्वात्मकञ्च ब्रह्मेत्यतः परिच्छिन्नवदना-

---

आ॰ सा च स्वभावानन्दाभिव्यक्तिरूपाविद्यानिवृत्तिरेवेति संसार-
गोचरफलमित्यर्थः । आद्यवाक्यव्याख्यानान्तरतात्पर्य्यमाह । स्वय-
मेवेति । विद्ययैव केवलया मोक्षः साधयितुं शक्यते ।
ब्रह्मविदिति विशेषणात्सम्बन्धज्ञानस्य पुनराकाङ्क्षाविषयतया
परप्राप्तिः प्रयोजनं विद्याया इति । ज्ञानस्य वा पुरुषोपयोग
स्वाध्याय यज्ञादिपरित्यागेन वेदान्तश्रवणादावेव मुमुक्षुणा
प्रवर्त्तितव्यमित्याह । निर्ज्ञातयोर्हीति । परशब्देनोत्कृष्टमुच्यते ।
कथं ब्रह्मेति व्याख्यायते तत्राह । न हीति ।

आप्नोतिशब्दस्यौपचारिकमर्थं दर्शयितुं शङ्कामुखेन मुख्यार्थे
बाधकमाह । ननु सर्व्वगतमित्यादिना । परमार्थतो ब्रह्मस्वरूप-
स्यापि सतो जीवस्याविद्यया ब्रह्मानाप्तं स्यादिति सम्बन्धः ।

भा॰ त्मत्वाच्च तस्याप्तिरनुपपन्ना। नायं दोषः। कथं दर्शनादर्शनापेक्षत्वाद्ब्रह्मण आप्त्यनाप्त्योः परमार्थतो ब्रह्मरूपस्यापि सतोऽस्य जीवस्य भूतमात्राकृतबाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिनस्तदासक्तचेतसः प्रकृतसङ्ख्यापूरणस्यात्मनोऽव्यवहितस्यापि बाह्यसङ्ख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत्परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणयाऽविद्ययाऽन्नमयादीन् बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वादन्नमयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते। एवमविद्ययाऽऽत्मभूतमपि ब्रह्म नाप्तं स्यात्। तस्यैवमविद्ययाऽनाप्तब्रह्मस्वरूपस्य प्रकृतसङ्ख्यापूरणस्यात्मनोऽविद्ययाऽनाप्तस्य सतः केनचित्स्मारितस्य पुनस्तस्यैव विद्ययाऽऽप्तिर्यथा तथा श्रुत्युपदिष्टस्य सर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव। ब्रह्मविदाप्नोति

---

आ॰ भूतमात्राभिर्मूर्तामूर्तैः कृता ये बाह्याः परिच्छिन्नाश्चान्नमयादयस्तदात्मत्वदर्शिन इत्यविद्याया विशेषणत्वमुक्तं परमार्थब्रह्मरूपं नास्तीत्यभावदर्शनमावरणलक्षणं लिङ्गं यस्याः सा तथोक्ता॥ स्वरूपेऽप्यवाप्त्यनवाप्ती भवत इत्यत्र दृष्टान्तमाह। प्रकृतेति॥ प्रकृतसङ्ख्यापूरणस्य दशमस्य नवैव वयं वर्तामह इति विपर्ययस्वरूपदर्शनस्य यथेत्यर्थः। अदर्शननिमित्तामनाप्तिं विविच्य दर्शननिमित्तामाप्तिं विवृणोति। तस्यैवमिति॥ आद्यं ब्राह्मणवाक्यं व्याख्यायोत्तरं मन्त्रं संक्षेपतोऽर्थकथनेनावतारयति। ब्रह्मविदाप्नोतीत्यादिना॥ सर्वतो व्यावृत्तो यः स्वरूपविशेषस्तद्गर्भस्य समर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणायैषा ऋगुदाह्रियत इति सम्बन्धः। बृहत्त्वाद्ब्रह्मेति व्युत्पत्तिबलेनास्ति किमपि महद्वस्त्वविशेषेण प्रतीयते। ततो वक्ष्य-

भा०परमिति वाक्यं सूत्रभूतं सर्व्वस्य वल्ल्यर्थस्य ब्रह्मविदाप्नोति परमित्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणोऽनिर्धारितस्वरूपविशेषस्य सर्व्वतो व्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय अविशेषेण चोक्तवेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतया अनन्यरूपेण विज्ञेयत्वाय ब्रह्मविद्याफलस्य ब्रह्मविदो यत्परब्रह्मप्राप्तिलक्षणमुक्तं॥

स सर्व्वात्मभावः सर्व्वसंसारधर्मातीतब्रह्मस्वरूपत्वमेव नान्यदित्येतत् प्रदर्शनायैषा ऋगुदाह्रियते तदेषाभ्युक्तेति। तत्तस्मिन्नेव ब्राह्मणवाक्योक्तेऽर्थे एषा ऋगभ्युक्ताऽऽम्नाता सत्यं ज्ञानमनन्तं ब्रह्मेति। ब्रह्मणो लक्षणार्थं वाक्यं। सत्यादीनि हि त्रीणि विशेषणार्थानि पदानि विशेष्यस्य ब्रह्मणो विशेष्यं

---

आ० देशेन लक्षणविधानमिति प्रसिद्धिरुपपद्यते। द्रव्यान्तरादि ब्रह्मशब्दवाच्यतया सजातीयं घटादि विजातीयं। तस्मात्सजातीयविजातीयव्यावर्त्तकतया सत्यादिलक्षणस्य लक्षणत्वप्रसिद्धिरुपपद्यते। लक्षणाभिधानद्वारेण स्वरूपविशेषप्रतिपादने तात्पर्य्यमिति वाक्यस्य पार्थक्यदोषः परिहृतः। पूर्व्वत्र ब्रह्मविदित्यनेनाविशेषेणोक्तं वेदनं यस्य ब्रह्मणस्तस्य यो वेद निहितं गुहायामित्यनेन प्रत्यगात्मतया वेदनं वाक्यमित्येवमर्थाम् ऋगुदाह्रियत इत्याह। अविशेषेण चेति॥

वाक्यार्थप्रतिपत्त्यर्थं विशेषणविशेष्यभावमादाय पदानि विभजते। सत्यादीनि हि त्रीणीति। विशेषणार्थानीति व्याख्येयानि। कुतो विशेषणविशेष्यभावप्रतीतिरित्यत आह। विशेषणविशे-

भा० ब्रह्म विवक्षितत्वाद्वेद्यतया वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितं तस्माद्विशेष्यं विज्ञेयं। यतोऽन्यस्माद्विशेषणविशेष्यत्वादेव सत्यादीन्येकविभक्त्यन्तानि पदानि समानाधिकरणानि सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाणं ब्रह्म विशेष्यान्तरेभ्यो निर्धार्यते। एवं हि तज्ज्ञातं भवति यदन्येभ्यो निर्द्धारितं। यथा लोके नीलं महत्सुगन्ध्युत्पलमिति। ननु विशेष्यं विशेषणान्तरं व्यभिचरद्विशेष्यते। यथा नीलं रक्तञ्चोत्पलमिति। यदा ह्यनेकानि द्रव्याण्येकजातीयान्यनेकविशेषणयोगीनि तदा विशेषणस्यार्थवत्त्वं। न ह्येकस्मिन्नेव वस्तुनि विशेषणान्तरायोगाद्यथाऽसावेक आदित्य इति तथैकमेव च ब्रह्म न ब्रह्मान्तराणि येभ्यो विशेष्येत नीलोत्पलवत्। न लक्षणार्थत्वाद्विशेषणानां। नायं दोषः। कस्मात् लक्षणार्थप्रधानानि विशेषणानि न विशेषणप्रधानान्येव कः पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्ययोर्वा विशेष इत्युच्यते

---

आ० सत्यादेवेति। नीलं महत्सुगन्ध्युत्पलमित्यादौ सत्येव विशेषणविशेष्यभावे समानाधिकरणत्वस्यैकविभक्त्यन्तानि प्रसिद्धान्येतान्यपि च तथाभूतानि नानार्थगतविशेषणविशेष्यभावनिबन्धनानीति गम्यत इत्यर्थः। विशेषणविशेष्यभावस्य फलमाह। एवं हीति। विशेषणविशेष्यभावमाक्षिपति। नन्विति। नीलत्वं व्यभिचरदुत्पलं रक्तमपि सम्भवतीति नीलं विशेषणं घटते न तथा सत्यत्वादिकं व्यभिचरद्ब्रह्मान्तरं लोकप्रसिद्धं। अतः सजातीयव्यवच्छेद्याभावाद्विशेषणविशेष्यभावो न घटत इत्यर्थः। विशेषणविशेष्यभावस्य तात्पर्येण प्रतिपाद्यत्वादव्याहतादिशाखीयवाक्यपदार्थव्यवच्छेदेनाभिधाय विशेषणविशेष्यभावसम्भवात्प्रहारेण ब्रह्मलक्षणं विवक्षितमित्याह। नेति। सङ्क्षेपवाक्यं विवृणोति।

भा॰ समानजातीयेभ्य एव निवर्त्तकानि विशेषणानि विशेष्यस्य लक्षणं तु सर्वत एव यथावकाशप्रदात्राकाशमिति लक्षणार्थञ्च वाक्यमित्यवोचाम ॥

सत्यादिशब्दा न परस्परं सम्बध्यन्ते परार्थत्वाद्विशेष्यार्था हि ते अत एकैको विशेषणशब्दः परस्परं निरपेक्षो ब्रह्मशब्देन सम्बध्यते। सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तं ब्रह्मेति सत्यमिति यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यं यद्रूपेण निश्चितं यत्तद्रूपं व्यभिचरदनृतमित्युच्यते। अतो विकारोऽनृतं वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं। एवं सदेव सत्यमित्यवधारणादतः सत्यं

---

टी॰ सार्थं दोष इत्यादिना। सर्वत एवेति। सजातीयाद्विजातीयाच्च यथा सर्वाभूतत्वेन सदृशः पृथिव्यादेर्विसदृशाच्चात्मादेराकाशस्य व्यावर्त्तकमवकाशप्रदातृत्वमित्यर्थः॥

एतदुक्तं भवति अविद्याद्यादिरहितो व्यावर्त्तको धर्मो लक्षणं न्यायविशेषमीमांसकाः ब्रह्मपदव्युत्पत्तिवशेन पदविशेषतः प्रतिपन्नं किञ्चिन्महदस्तीति सत्यत्वं ज्ञानमनन्तत्वमप्यजडपरिच्छेदविरोधित्वरूपमिति विशेषतः प्रतिपत्तव्यमिति विशेषावगतिविशेषभूतं लक्षणं। प्रमितिस्तु प्रमाणादेवेति तार्किकाः। पुनर्लक्षणं केवलव्यतिरेकानुमानमाचक्षते तदा लक्षणादेव स्वभावविशेषप्रमितिः। यथा गुणवद्द्रव्यमिति लक्षणाद्गुणाश्रयत्वयोग्यस्वभावविशेषस्य प्रमितिः सामान्यप्रतिपन्नस्य द्रव्यपदाभिधेयस्य भवति। यदा व्यवहारसिद्धिः फलं गुणवद्द्रव्यमिति व्यवहर्त्तव्यं गुणवत्त्वात् यन्नैवं न तदेवं यथा रूपं तथा सत्यत्वादिमद् ब्रह्मेति व्यवहर्त्तव्यं। सत्यत्वादिमत्त्वात् यन्नैवं न तदेवं यथा घटादय इति एतच्च लक्ष-

भा॰ ब्रह्मेति ब्रह्मविकारान्निवर्त्तयति । अतः कारणत्वं प्राप्तं ब्रह्मणः । कारणस्य च कारकत्वं वस्तुत्वात् मृद्वच्चिद्रूपता च प्राप्ताऽत इदमुच्यते ज्ञानं ब्रह्मेति । ज्ञानं ज्ञप्तिरवबोधो भावसाधनो ज्ञानशब्दो ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह । न हि सत्यताऽनन्तता च ज्ञानकर्तृत्वे सत्युपपद्येते । ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तञ्च । यद्धि न कुतश्चित्प्रविभज्यते तदनन्तं । ज्ञानकर्तृत्वे च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता न स्यात् । यत्र नान्यद्विजानाति स भूमा अथ यत्रान्यद्विजानाति तदल्पमिति श्रुत्यन्तरात् । नान्यद्विजानातीति विशेषप्रतिषेधादात्मानं विजानातीति चेन्न । भूमलक्षणविधिपरत्वाद्वाक्यस्य । यत्र नान्यत्पश्यतीत्यादि भूम्नो लक्षणविधिपरं वाक्यं । यथा प्रसिद्धमेवान्योऽन्यत्पश्यतीत्येतदुपादाय यत्र तन्नास्ति स भूमेति

---

टी॰ न पृथक्‌ऽसहमानमपि व्यवहाराङ्गं भवतीति नातीव सूक्ष्मशङ्का कार्य्या पुनर्विशेषणविशेष्यभावं पश्चादयमवलम्ब्याह । सत्यादिशब्दा इति । सत्यं ब्रह्मेत्युक्ते जाड्यव्यावृत्तिः परिच्छेदव्यावृत्तिश्च यद्यपि लभ्यते जडस्य परिच्छिन्नस्य सर्वस्यानृतत्वात् ज्ञानं ब्रह्मेत्युक्तेनान्तपरिच्छेदव्यावृत्तिर्लभ्यते स्वप्रकाशस्य बोधाविषयत्वात्परिच्छेदग्राहकस्य प्रमाणाविषयत्वाच्च लक्षणमपि चानेकं वैकल्पिकमदुष्टं । तथापि मन्दमतिव्युत्पादनाय यथासत्यादिपदार्थव्याख्यानपूर्व्वकं प्रत्येकं व्यावर्त्यमाह । सत्यमिति । यद्रूपेणेत्यादिना भावसाधन इति भावव्युत्पत्तिः । क्रियासामान्यं यद्यप्यन्यत्र भाव उच्यते तथाप्यत्र निर्विशेषं चिन्मात्रं भावव्युत्पत्त्या लभ्यते सत्यादिशब्दसन्निधानादिति द्रष्टव्यं । विशेषनिषेधः शेषाभ्यनुज्ञाविषय इति न्यायेन प्रासङ्गिकं स्वज्ञातृत्वे तात्पर्य्यमाशङ्क्य निषेधति ।

भा॰भूमस्वरूपं नच ज्ञायते अन्ययहणस्य प्राप्तिप्रतिषेधार्थ-
त्वाच्च स्वात्मनि क्रियाविलपरं वाक्यं। स्वात्मनि च भेदा-
भावादिज्ञानानुपपत्तिः। आत्मनश्च विज्ञेयत्वे ज्ञात्रभाव-
प्रसङ्गः। ज्ञेयत्वेनैव विनियुक्तत्वात्॥

एक एवात्मा ज्ञेयत्वेन चोभयथा भवतीति चेन्न। युग-
पदनंशत्वात्। न हि निरवयवस्य युगपज्ज्ञातृत्वोपपत्तिः।
आत्मनश्च घटादिवद्विज्ञेयत्वे ज्ञानोपदेशानर्थक्यं। न हि
घटादिवत्प्रसिद्धस्य ज्ञानोपदेशोऽर्थवान्। तस्माज्ज्ञातृत्वे
सत्यानन्त्यानुपपत्तिः। सन्मात्रत्वञ्चानुपपन्नं ज्ञानकर्तृत्वादि-
विशेषवत्त्वे सति सन्मात्रत्वञ्च सत्यं। सत्यस्य सत्यमिति श्रुत्यन्तरात्॥
तस्मात्सत्यानन्तशब्दाभ्यां सह विशेषणत्वेन ज्ञानशब्दस्य
प्रयोगाद्भाववचनो ज्ञानशब्दः। ज्ञानं ब्रह्मेति कर्तृत्वा-
दिकारकनिवृत्त्यर्थं मृदादिवदचिद्रूपतानिवृत्त्यर्थञ्च प्रयु-

---

भा॰ नान्यद्विजानातीत्यादिना। कर्तृत्वं कर्मत्वं चैकक्रियावच्छिन्नधर्म-
द्वयं भिन्नाधिकरणं प्रसिद्धं। स्वात्मनि च भेदाभावान्निरुपपत्तिके
स्वज्ञातृत्वे तात्पर्यं कल्पयितुं न शक्यत इत्याह। स्वात्मनि चेति।

सत्यादीनि वाक्यार्थानीत्युक्तं तच्च शंकते। सत्यादीनामिति।
प्रमाणान्तरसिद्धमुत्पलादिविशेषणं दृष्टं अत्र तु प्रमाणान्तरासिद्धं।
पदमानस्याप्रमाणत्वात्सत्यादीनां च व्यावर्त्यार्थत्वादसमर्थं वाक्यं
स्यादित्यर्थः। सिद्धत्वमात्रेण विशेष्यत्वे सम्भवति प्रमाणान्तर-
विशेषणमनर्थकं केवलव्यतिरेकाभावान्मिथ्यार्थस्य रज्जुसर्पादेः
सदधिष्ठानत्वदर्शनात्प्रपञ्चस्यापि दृश्यत्वादिहेतुभिर्मिथ्यात्वेनाव-
गतस्य सदधिष्ठानत्वं सम्भाव्यते तस्य प्रपञ्चाधिष्ठानतया सम्भावि-
तस्य स्वरूपविशेषणद्वारार्थमिदं वाक्यं अतो नासदर्थत्वमित्याह।
न सदर्थत्वादिति। विशेषणार्थत्वमभ्युपगम्याह। विशेषणा-

ज्यत । ज्ञानं ब्रह्मेति वचनाज्ज्ञानमन्तवत्त्वं । लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात् । अतस्तन्निवृत्त्यर्थमाह । अनन्तमिति ॥ सत्यादीनामनृतादिधर्मनिवृत्तिपरत्वाद्विशेष्यस्य ब्रह्मण उत्पलादिवदप्रसिद्धत्वात् । मृगतृष्णाम्भसि स्नातः । खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धर इति वच्छून्यार्थतैव प्राप्ता सत्यादिवाक्यस्येति चेन्न । लक्षणार्थत्वात् । विशेषणत्वेऽपि सत्यादीनां लक्षणार्थप्राधान्यमित्यवोचाम । शून्ये हि लक्ष्येऽनर्थकं लक्षणवचनं लक्षणार्थत्वान्मन्यामहे न शून्यार्थतेति । विशेषणार्थत्वेऽपि च सत्यादीनां स्वार्थापरित्याग एव । शून्यार्थत्वे हि सत्यादिशब्दानां विशेष्यनियन्तृत्वानुपपत्तिः । सत्याद्यर्थैरर्थवत्त्वे तु तद्विपरीतधर्मवद्भ्यो विशेष्येभ्यो ब्रह्मणो विशेष्यस्य नियन्तृत्वमुपपद्यते ब्रह्मशब्दोऽपि स्वार्थेनार्थवानेव । तत्रा-

---

र्थत्वेऽपि चेति । नीलं महत्सुगन्धमिति विशेषणपदानि स्वार्थसमर्पणेन तद्विरुद्धव्यावर्त्तकानि प्रसिद्धानि । तथा सत्यशब्दोऽप्यबाधितसत्त्वे ज्ञानशब्दः स्वप्रकाशे विषयसंवेदनेऽनन्तोपमाकाश इत्यादावनन्तशब्दो व्यापके । ततः स्वार्थसमर्पणेन विरोधिव्यावर्त्तकत्वान्न व्यावृत्तिमात्रपर्य्यवसानमित्यर्थः । किञ्च विशेषणस्य व्यावर्त्तकत्वं सति व्यावर्त्ये घटतेऽतोऽविशेषणतामुपपत्त्यैव सदर्थत्वं वाच्यमित्याह । शून्यार्थत्वे हीति ॥ यच्चोक्तं ब्रह्मशब्दोऽप्रसिद्धार्थ इति तत्राह । ब्रह्मशब्दोऽपीति ॥ वृहि वृद्धाविति धातोर्बृंहतिशब्दो निष्पन्नो वृद्धौ महत्त्वे च वर्त्तते । तच्च महत्त्वं देशतः कालतो वस्तुतश्चानवच्छिन्नत्वं सङ्कोचे मानान्तराभावात् निरतिशयमहत्त्वे सम्पन्ने धर्म्मिणि पर्य्यवस्यति । ततो वन्ध्यासु-

भा० अनन्तशब्दोऽन्तवत्त्वप्रतिषेधद्वारेण विशेषणं। सत्यज्ञानशब्दौ
तु स्वार्थसमर्पणेनैव विशेषणे भवतः॥

तस्माद्वा एतस्मादात्मन इति ब्रह्मण्येवात्मशब्दप्रयो-
गाद्वेदितुरात्मैव ब्रह्म। एतमानन्दमयमात्मानमुपसंक्राम-
तीति च श्रुतेश्च। तत्सृष्ट्वा तदेवानुप्राविशदिति च।
तस्यैव जीवरूपेण शरीरप्रवेशं दर्शयति। अतो वेदितुः
स्वरूपं ब्रह्म। एवं तर्ह्यात्मत्वाज्ज्ञानकर्तृत्वमात्मा ज्ञातेति हि
प्रसिद्धं। सोऽकामयत इति च कामिनो ज्ञानकर्तृत्वं
प्रसिद्धं। अतो ज्ञानकर्तृत्वाज्ज्ञप्तिर्ब्रह्मेत्ययुक्तमनित्यत्वप्रस-
ङ्गाच्च। यदि नाम ज्ञप्तिर्ज्ञानमिति भावरूपता ब्रह्मणस्त-
थाप्यनित्यत्वं प्रसज्यते पारतन्त्र्यञ्च। धात्वर्थानां कारका-
पेक्षत्वात्। ज्ञानञ्च धात्वर्थोऽतोऽस्यानित्यत्वं परतन्त्रता च।
न स्वरूपाव्यतिरेकेण कार्यत्वोपचारात्। आत्मनः स्वरूपं
ज्ञप्तिर्न ततो व्यतिरिच्यतेऽतो नित्यैव तथापि बुद्धेरुपा-
धिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारपरिणामिन्या ये

---

आ० तादिशब्दविलक्षणो ब्रह्मशब्द इत्यर्थः। सत्यादिषु त्रिषु विशेष-
णेष्ववान्तरभेदमाह। अनन्तेति॥

अनन्तमित्ययमेव चात्मैक्यं ब्रह्मण उक्तमभिप्रेत्यैक्ये प्रमाणान्तरं
दर्शयति। तस्माद्वा इत्यादिना॥ ब्रह्मणश्चात्मैक्यं चेद्विवक्षितं
तर्हि ज्ञानशब्दस्य भावसाधनत्वव्याख्या चोद्यते इत्याह। एवं
तर्हीति॥ इतश्च भावव्युत्पत्तिरसङ्गतेत्याह। अनित्यत्वप्रसङ्गा-
च्चेति॥ वृत्तिमदन्तःकरणोपहितस्येवात्मनो ज्ञातृत्वं न स्वतः कार्य-
त्वं च ज्ञानस्यान्तःकरणवृत्त्युपहितत्वेन तत्र चात्माभिव्यक्तेऽपि
ब्रह्मणो न ज्ञानकर्तृत्वं नापि कार्यत्वं प्रसज्यत इत्याह। न स्वरू-
पेति॥ नित्यचेज्ज्ञानं तर्हि तत्र ब्रह्मणः कर्तृत्वाभावे कथं सर्व-

भा० शब्दाद्याकारावभासाश्च आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एवात्मविज्ञानेन व्याप्ता उत्पद्यन्ते। तस्मादात्मविज्ञानावभास्याश्च ते विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्मा विक्रियारूपा इत्यविवेकिभिः परिकल्प्यन्ते। यत्तु तद्ब्रह्मणो विज्ञानं तत्सवितृप्रकाशवदग्न्युष्णवच्च ब्रह्मस्वरूपाव्यतिरिक्तं स्वरूपमेव तन्न तत्कारणान्तरसव्यपेक्षं नित्यस्वरूपत्वात्। सर्वभावानां च तेनाविभक्तदेशकालाकाशादिकारणत्वाच्च निरतिशयसूक्ष्मत्वाच्च न तस्यान्यदविज्ञेयं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतभवद्भविष्यद्वास्ति तस्मात्सर्वज्ञं तद्ब्रह्म। मन्त्रवर्णाच्च। अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयोऽस्तीत्यादिश्रुतेश्च। विज्ञातृस्वरूपाव्यतिरेकात्करणादिनिमित्तानपेक्षितत्वाच्च ब्रह्मणो

---

आ० चलमित्यत आह। सर्वभावानाञ्चेति। संविदव्यवधानेनैव बहिर्विषयस्य सिद्धिः सर्वस्य संवित्स्वभावेन ब्रह्मणा व्यवहितमिति सर्वज्ञं ब्रह्मोपपद्यत इत्यर्थः। नित्यं ज्ञानं ब्रह्मणि विद्यत इत्यत्र मन्त्रसम्मतिमाह। मन्त्रवर्णाच्चेति। ब्रह्म नित्यं ज्ञानत्वाल्लौकिकज्ञानवदित्यादि चोद्यमुक्तन्यायेन निरस्तमित्याह। विज्ञातृस्वरूपेति। लौकिकज्ञानस्य करणादिसापेक्षत्वादनित्यत्वं। आत्मस्वरूपन्तु ज्ञानं न करणादिसापेक्षं तस्य करणव्यापारोपरमेऽपि सुषुप्ते भावादन्यथा सुषुप्तिसिद्ध्यनुपपत्तेः परामर्शासम्भवप्रसङ्गादतः श्रुतितात्पर्यगम्येऽर्थे न सामान्यतो दृष्टस्य प्रवेश इति भावः। आत्मस्वरूपभूतं ज्ञानं कारकसाध्यं धात्वर्थत्वादिति

उ॰ यो वेद निहितं गुहायां परमे व्योमन् ।

---

भा॰ ज्ञानस्वरूपत्वेऽपि नित्यत्वप्रसिद्धिरतो नैव धात्वर्थस्तदक्रियारूपत्वात् ॥

अत एव च न ज्ञानकर्तृ तस्मादेव च न ज्ञानशब्दवाच्यमपि तद्ब्रह्म तथापि तदाभासवाचकेन बुद्धिधर्मविशेषेण ज्ञानशब्देन तल्लक्ष्यते . नतूच्यते शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात्तथा सत्यशब्देनापि सर्वविशेषप्रत्यस्तमितस्वरूपत्वाद्ब्रह्मणो बाह्यसत्तासामान्यविषयेण सत्यशब्देन लक्ष्यते सत्यं ब्रह्मेति नतु सत्यशब्दवाच्यं ब्रह्म। एवं सत्यादिशब्दा इतरेतरसन्निधावन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्यत्वान्निवर्त्तका ब्रह्मणो लक्षणार्थाश्च

---

टी॰ प्रसिद्धनित्यत्वाच्च । अत इति । नित्यात्मस्वरूपत्वादेवेत्यर्थः ॥

अतएव चेति नित्यत्वादेव ज्ञानस्य न तत्कर्तृत्वमपि ब्रह्मण आपादयितुं शक्यते लौकिकानित्यज्ञानविलक्षणत्वादेव ज्ञानशब्दवाच्यमपि ब्रह्म न भवतीत्याह । तस्मादेव चेति । कथं तर्हि ज्ञानं ब्रह्मेति प्रयोगस्तत्राह । तथापीति । शब्दस्य प्रवृत्तिहेतवो जात्यादिधर्मा गौः शुक्ल इत्यादौ तदभावाच्छब्दान्तरेणापि वाच्यं न भवतीत्याह । तथेति । तथा सत्यशब्देनापि न वाच्यं ब्रह्मेति शेषः । एतत्स्फोरयति । सर्वविशेषेति । सत्ता यस्यास्ति तत्सत्यमिति लोकरूढिः । सत्ता चानुगतरूपं सामान्यं बाह्यतः सत्ताविशेषः । स चायमनुवृत्तव्यावृत्तभावेनावस्तुपरस्परापेक्षसिद्धत्वादतो यस्मिन्नयं व्यावृत्तानुवृत्तभावकल्पनास्थानमनुगतं ब्रह्म लक्ष्यत इत्यर्थः । एवमेकैकस्य शब्दस्यार्थमुक्त्वा वाक्यार्थमाह । एवं सत्यादीति । यद्यपि सत्यादिशब्दानां प्रथमा मुख्योऽन्वयस्तथाप्यावच्छेदकत्वान्यादिवत्पार्ष्ठिकान्वयेनेतरेतरसन्निधावन्योन्याप-

उ० सोऽश्नुते सर्व्वान् कामान् सह । ब्रह्मणा विपश्चितेति

---

भा० भवन्ति इत्यतः सिद्धं । यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहाऽनिरुक्तेऽनिलयनेनेति चावाच्यत्वं नीलोत्पलवद्वाक्यार्थत्वं च ब्रह्मणस्तद्यथा व्याख्यातं ब्रह्म यो वेद विजानाति निहितं स्थितं गुहायां । गुहतेःसंवरणार्थस्य निगूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिर्गूढावस्यां भोगापवर्गौ पुरुषार्थाविति वा तस्यां परमे प्रकृष्टे व्योमन् व्योम्न्याकाशेऽव्याकृताख्ये ॥

तद्धि परमं व्योम एतस्मिन् खल्वक्षरे गार्ग्याकाश इत्यक्षरसन्निकर्षाद्गुहायां व्योम्नीति वा सामानाधिकरण्यादव्याकृताकाशमेव गुहा तत्रापि निगूढाः सर्व्वे पदार्थास्त्रिषु कालेषु कारणत्वात् सूक्ष्मत्वाच्च तस्मिन्नन्तर्हितं ब्रह्म

---

व्या० निर्नियामका भवन्ति ज्ञानेन विशेष्यत्वात्सत्यशब्दो न जडे कार्ये वर्त्तते सत्येन विशेषणाज्ज्ञानशब्दो न विषयसम्बन्धे ज्ञाने वर्त्तते । ज्ञानेन विशेष्यमाणानन्तशब्दो ज्ञात्यपरिच्छिन्ने वर्त्तते । ततश्च सत्यादिशब्देन लौकिकं वाच्यं वदितव्यत्वेन भवितव्यमिति सम्भावयन्तः सकललौकिकाध्यासाधिष्ठानं ब्रह्मलिङ्ग लक्षयन्तीत्यर्थः । ततः किं फलतीत्यत आह । अतः सिद्धमिति । वाचकशक्त्या बोधकत्वानङ्गीकारादवाच्यत्वं सकलानिष्टव्यवच्छेदेनैकस्यैव लक्ष्यत्वाभ्युपगमाच्च गुणगुण्यादिसम्बन्धरूपवाक्यार्थवैलक्षण्यं च ब्रह्मणः सिद्धमित्यर्थः ।

बुद्धौ कार्य्ये यदनुगतं परमं व्योमाव्याकृताख्यं तस्मिन्निहितमिति सप्तमीद्वयं वैयधिकरण्येन व्याख्यातं । व्योमशब्दस्य भूताकाशे रूढिं परित्यज्य किमित्यव्याकृतविषयत्वं व्याख्यातं तत्राह । तद्धीति । भूताकाशस्य कार्य्यत्वेनापरत्वादव्याकृताकाशस्य कारण-

भा॰ हार्दमेव तु परमं व्योमेति न्याय्यं विज्ञानाङ्गत्वेन व्योम्नो विवक्षितत्वात्। यो वै स बहिर्धा पुरुषाकाशो यो वै सोऽन्तःपुरुषाकाशः सोऽयमन्तर्हृदयाकाश इति श्रुत्यन्तराच्च सिद्धं हार्दस्य व्योम्नः परमं तत्त्वं तस्मिन्हार्दे व्योम्नि या बुद्धिर्गुहा तस्यां निहितं ब्रह्म तद्वृत्त्या विविक्ततयोपलभ्यत इति। न ह्यन्यथा विशिष्टदेशकालसम्बन्धोऽस्ति ब्रह्मणः सर्व्वगतत्वान्निर्विशेषत्वाच्च। स एवं ब्रह्म विजानन् किमित्याह। अश्नुते भुङ्क्ते सर्व्वान्निर्विशेषान् कामान् भोगानित्यर्थः। किमस्मदादिवत्पुत्रस्वर्गादीन् पर्य्यायेणेत्याह। सह युगपदेकक्षणोपारूढानेवैकयोपलब्ध्या सवितृप्रकाशवन्नित्यया ब्रह्मस्वरूपया व्यतिरिक्तया यामवोचाम सत्यं ज्ञानमिति। एतत्तदुच्यते। ब्रह्मणा सहेति॥ ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्व्वान् कामान् सहाश्नुते न यथोपाधिकृतेन स्वरूपेणात्मना जलसूर्य्याकाशादिवत्प्रतिबिम्बभूतेन सांसारिकेण धर्म्मादिनिमित्तापेक्षांश्चक्षुरादिकरणापेक्षांश्च कामान्

---

आ॰ तेन परमत्वविशेषणसम्भवाद्बाह्याकाशान्तरङ्गत्वे चाक्षरेण ब्रह्मणा सामीप्यावगमादव्याकृतं व्योमशब्देन लक्ष्यत इत्यर्थः। एवं मता-भिप्रायेण व्याख्याय स्वाभिप्रायं व्याचष्टे। हार्दमेव त्विति। हृदयावच्छिन्ने भूताकाशे या गुहा तस्यां बुद्धौ साक्षितया निहितमभिव्यक्तं ब्रह्मेति व्याख्यानं युक्तं। स्वरूपभेदेन ब्रह्मण श्चापरोक्षत्वाभावादन्यथासमधिगम्योऽव्याकृते मायातत्त्वेऽवस्थितं ब्रह्मेत्युक्ते ब्रह्मणः पारोक्ष्यं प्रसज्येत पारोक्ष्येण च ज्ञानं नापरोक्षसंसाराध्यासनिवर्त्तकं। तस्मादपरोक्षप्रत्यक्चैतन्याभेदेन ब्रह्मणः स्वहृदये प्रत्यक्तया विवक्षितत्वात् हृदयाकाशमेव विज्ञानप्रयोगभूतं विवक्षितमित्यर्थः। यदुक्तं भूताकाशस्य परमत्वानुपपत्तिरिति तत्राह।

भा॰ पर्य्यायेणाश्नुते लोके। कथं तर्हि यथोक्तेन प्रकारेण सर्व्वज्ञेन सर्व्वात्मना नित्यब्रह्मात्मस्वरूपेण धर्म्मादिनिमित्तानपेक्षांश्चक्षुरादिनिरपेक्षांश्च सर्व्वान् कामान् सहैवाश्नुत इत्यर्थः। विपश्चिता मेधाविना सर्व्वज्ञेन। तद्धि वैपश्चित्यं यत्सर्व्वज्ञस्वरूपेण ब्रह्मणाऽश्नुत इति। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। सर्व्व एव वल्ल्यर्थो ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्येन सूत्रितोऽर्थः संक्षेपतो मन्त्रेण व्याख्यातः पुनस्तस्यैव विस्तरेण निर्णयः कर्त्तव्य इत्युत्तरस्तद्वृत्तिस्थानीयो ग्रन्थ आरभ्यते तस्माद्वा एतस्मादित्यादिः॥ तत्र च सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तं मन्त्रादौ तत्कथं सत्यं ज्ञानमनन्तञ्चेत्यत आह। त्रिविधं ह्यानन्त्यं देशतः कालतो वस्तुतश्चेति। तद्यथा देशतोऽनन्त आकाशो न हि देशतस्तस्य परिच्छेदोऽस्ति। न तु कालतश्चानन्त्यं वस्तुतश्चाकाशस्य। कस्मात्कार्य्यत्वात्। नैवं ब्रह्मण आकाशवत्कालतोऽप्यन्तवत्त्वमकार्य्यत्वात्। कार्य्यं हि वस्तु कालेन परिच्छिद्यते। अकार्य्यञ्च ब्रह्म। तस्मात्कालतोऽप्यनन्तं। तथा

---

आ॰ यो वै इति॥ ननु निहितशब्दः स्थितिं ब्रूते कथं विविक्ततया स्फुटतयोपलम्भाभिप्रायेण व्याख्यायते तत्राह। न हीति॥ अन्यथेत्युपलम्भव्यतिरेकेणाविद्यावस्थायां ये सुखविशेषा हिरण्यगर्भाद्युपाधिषु भोग्यत्वेनाभिमतास्तेषां सर्व्वेषां ब्रह्मानन्दाद्व्यतिरेकाद्ब्रह्मीभूतो विद्वान् सर्व्वानेवानन्दानश्नुत इत्युपचारेण बहुवचनमित्यर्थः। उक्तमनुवदन्नुत्तरग्रन्थावतारणाय सर्व्व एवेत्यादिना आकाशादिकारणत्वाभिधानेनानन्त्यप्रपञ्चः क्रियत इति समनन्तरग्रन्थतात्पर्य्यं दर्शयितुं पूर्व्वोक्तमर्थविशेषमनुवदति। तत्र चेति॥ वस्तुत आनन्त्यं व्याख्यातुं वस्तुतोऽन्तवत्त्वं तावदाह। भिन्नं

भा॰ वस्तुतः । कथं पुनर्वस्तुत आनन्त्यं सर्वानन्यत्वात् । भिन्नं हि वस्तु वस्त्वन्तरस्यान्तो भवति वस्त्वन्तरबुद्धिर्हि प्रसक्ता वस्त्वन्तरान्निवर्त्तते । यतो यतो यस्य बुद्धेर्निवृत्तिः स तस्यान्तः । तद्यथा गोत्वबुद्धिरश्वत्वान्निवर्त्तत इत्यश्वत्वान्तं गोत्वमित्यन्तवदेव भवति । स चान्तो भिन्नेषु वस्तुषु दृष्टो नैवं ब्रह्मणो भेदोऽतो वस्तुतोऽप्यानन्त्यं कथं पुनः सर्वानन्यत्वं ब्रह्मण इत्युच्यते सर्ववस्तुकारणत्वात् । सर्वेषां हि वस्तूनां कालाकाशादीनां कारणं ब्रह्म । कार्यापेक्षया वस्तुतोऽन्तवत्त्वमिति चेन्न । अनृतत्वात्कार्यवस्तुनः । न हि कारणव्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति । यतः कारणबुद्धिर्निवर्त्तेत । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सदेव सत्यमिति श्रुत्यन्तरात् । तस्मादाकाशादिकारणत्वाद्देशतस्तावदनन्तं ब्रह्म । आकाशो ह्यनन्त इति प्रसिद्धं देशतस्तस्येदं कारणं तस्मात्सिद्धं देशत आत्मन आनन्त्यं । न हि सर्वगतादसर्वगतमुत्पद्यमानं क्वचिद्दृश्यतेऽतो निरतिशयमात्मन आनन्त्यं देशतस्तथाऽकार्यत्वात्कालतस्तद्भिन्नवस्त्वन्तराभावाच्च वस्तुत अत एव निरतिशयसत्यत्वं ॥

---

आ॰ कालादिना । विशेषतो ब्रह्मानन्त्यं सङ्क्षिप्याह । तस्मात्सिद्धमिति । देशतोऽनवच्छिन्नस्याकाशस्य कारणत्वाद्व्यापकत्वान्निरतिशयमात्मनो देशत आनन्त्यमकार्यत्वाच्च कालत आनन्त्यं यद्वस्तुतोऽप्यावर्त्तत तस्य पृथगसत्त्वात्कार्यस्योपादानादन्यत्र सत्त्वायोगाद्वस्तुतोऽप्यानन्त्यं सिद्धमित्यर्थः । अत एव निरतिशयानन्त्यादेव सत्यत्वमपि सिद्धमन्तवत्त्व एव रज्जुसर्पादिवदसत्यत्वादित्यर्थः ॥

उ॰ तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः।

---

भा॰ तस्मादिति मूलवाक्यसूत्रितं ब्रह्म परामृश्यते। एतस्मादिति। मन्त्रवाक्येन अनन्तरं यथा लक्षितं यद्ब्रह्मैव ब्राह्मणवाक्येन सूचितं। यच्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तरमेव लक्षितं तस्मादेतस्माद्ब्रह्मण आत्मन आत्मशब्दवाच्यत्वात्। आत्मा हि तत्सर्व्वस्य तत्सत्यं स आत्मेतिश्रुत्यन्तरादतो ब्रह्मात्मा। तस्मादेतस्माद्ब्रह्मण आत्मस्वरूपादाकाशः सम्भूतः समुत्पन्नः। आकाशो नाम शब्दगुणोऽवकाशकरो मूर्त्तद्रव्याणां तस्मादाकाशात्स्वेन स्पर्शगुणेन पूर्व्वेण च कारणगुणेन शब्देन द्विगुणो वायुः सम्भूत इत्यनुवर्त्तते वायोश्च स्वेन रूपगुणेन पूर्व्वाभ्याञ्च त्रिगुणोऽग्निः सम्भूतः। अग्नेः स्वेन रसगुणेन पूर्व्वैश्च त्रिभिश्चतुर्गुणा आपः सम्भूताः। अद्भ्यः स्वेन गन्धगुणेन पूर्व्वैश्चतुर्भिः पञ्चगुणा पृथिवी सम्भूता। पृथिव्या ओषधयः। ओषधीभ्योऽन्नं। अन्नाद्रेतोरूपेण परिणतात्पुरुषः शिरःपाण्याद्याकृतिमान्। स वा एष पुरुषोऽन्नरसमयोऽन्नरस-

---

धा॰ एवं स्थितवाक्यतात्पर्य्यमुक्त्वा पदानि विभजते। तस्मादित्यादिना। अन्त्यकार्य्यपर्य्यन्तं परमात्मनः सर्व्वत्रोपादानत्वादाकाशभावापन्नात्परमात्मन एव वायुः सम्भूतोऽत एव तद्गुणस्योपरत्रानुवृत्तिर्गुणशब्दप्रयोगोऽपि भेदकल्पनया तत्त्वं। तत्त्वाभिप्रायेण न वैशेषिकपक्षवत्तत्त्वभेदाभिप्रायेण तत्त्वतो भेदे प्रमाणाभावादिति

उ॰ अग्नेः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नं। अन्नाद्रेतः। रेतसः पुरुषः। स वा एष पुरुषोऽन्नरसमयः।

---

भा॰ विकारः। पुरुषाकृतिभावितं हि सर्व्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतं रेतो बीजं तस्माद्यो जायते सोऽपि तथा पुरुषाकृतिरेव स्यात् सर्व्वजातिषु जायमानानां जनकाकृतिनियमदर्शनात् सर्व्वेषामप्यन्नरसविकारत्वे ब्रह्मवंश्यत्वे चाविशिष्टे कस्मात्पुरुष एव गृह्यते प्राधान्यात्। किं पुनः प्राधान्यं कर्म्मज्ञानाधिकारः पुरुषएव हि शक्तत्वादर्थित्वाच्च अर्थी विद्वान् समर्थः कर्म्मज्ञानयोरधिक्रियते। पुरुषे वाऽविस्तरात्मा स हि विज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्त्येनामृतमीप्सतीत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञानमित्यादिश्रुत्यन्तरदर्शनात्॥

---

आ॰ स्वरसं। पुरुषग्रहणस्य तात्पर्य्यमाह। सर्व्वेषामपीति। प्राधान्यादिति विधिनिषेधविवेकसामर्थ्यापेक्षत्वादित्युक्तं सहैतरेयकश्रुतिसम्मतिमाह। पुरुषे त्वेवेति। ब्राह्मण्यादिजातिमति मनुष्यादिदेहे चाविस्तरामतिशयेन प्रकट आत्मा ज्ञानातिशयदर्शनादित्यर्थः। मर्त्त्येन ज्ञानकर्म्मादिसाधनेनाक्षयफलं प्राप्तुमिच्छतीत्यर्थः। येन विवेकज्ञानेन पुरुषस्य प्राधान्यं विवक्षितं तत्पश्वादीनां नास्तीत्याह। अथेतरेषामिति॥

उ॰ तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ इति प्रथमोऽनुवाकः॥ १॥

---

भा॰ स हि पुरुष इह विद्ययान्तरतमं ब्रह्म सङ्क्रामयितुमिष्टस्तस्य च बाह्याकारविशेषेष्वनात्मस्वात्मभाविता बुद्धिरनालम्बनविशेषं कञ्चित्सहसान्तरतमप्रत्यगात्मविषया निरालम्बना च कर्तुमशक्येति दृष्टशरीरात्मसामान्यकल्पनया शाखाचन्द्रनिदर्शनवदन्तः प्रवेशयन्नाह। तस्येदमेव शिरः। तस्यास्य पुरुषस्यान्नरसमयस्येदमेव शिरः प्रसिद्धं। प्राणमयादिष्वशिरसां शिरस्त्वदर्शनादिहापि तत्प्रसङ्गो मा भूदितीदमेव शिर इत्युच्यते। एवं पक्षादिषु योजना। अयं दक्षिणो बाहुः पूर्वाभिमुखस्य दक्षिणः पक्षोऽयं सव्यो बाहुरुत्तरः पक्षोऽयं मध्यमो देहभाग आत्माऽङ्गानां। मध्यं ह्येषामङ्गानामात्मेतिश्रुतेः। इदमिति नाभेरधस्ताद्यदङ्गं तत्पुच्छं प्रतिष्ठा। प्रतितिष्ठत्यनयेति प्रतिष्ठा पुच्छमिव पुच्छमधोलम्बनसामान्याद्यथा गोः पुच्छं। एतत्प्रकृत्योत्तरेषां प्राणमयादीनां रूपकत्वसिद्धिः। मूषानिषिक्तद्रुतताम्रप्रतिमावत्। तदप्येष श्लोको भवति। तत्तस्मिन्नेवार्थे

---

था॰ कोशपञ्चकोपन्यासस्य तात्पर्यमाह। स हीत्यादिना॥ पक्षपुच्छशब्दप्रयोगात्पक्ष्याकारकॢप्तिं दर्शयति। उत्तरत्र तत्कल्पनया बाह्यविषयासक्त्यपोढचेतोबुद्धेरात्मनि स्थिरीकरणार्थं

उ॰ अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठं । तस्मात्सर्वौषधमुच्यते ।

---

भा॰ ब्राह्मणोक्तेऽन्नमयात्मप्रकाशक एष श्लोको मन्त्रो भवति॥ इति प्रथमोऽनुवाकः ॥ १ ॥

अन्नाद्रसादिभावपरिणतात् । वै इति स्मरणार्थः । प्रजाः स्थावरजङ्गमात्मकाः प्रजायन्ते। याः काश्चाविशिष्टाः पृथिवीं श्रिताः पृथिवीमाश्रितास्ताः सर्व्वा अन्नादेव प्रजायन्ते । अथोऽपि जाता अन्नेनैव जीवन्ति प्राणान्धारयन्ति वर्द्धन्त इत्यर्थः । अथाप्येनदन्नमपि यन्त्यपिगच्छन्ति । अपिशब्दः प्रतिशब्दार्थेऽन्नं प्रति प्रलीयन्त इत्यर्थः । अन्ततोऽन्ते जीवनलक्षणाया वृत्तेः परिसमाप्तौ । कस्मादन्नं । हि यस्माद्भूतानां प्राणिनां ज्येष्ठं प्रथमजं । अन्नमयादीनां हीतरेषां भूतानां कारणमन्नमतोऽन्नप्रभवा अन्नजीवना अन्नप्रलयाश्च सर्व्वाः प्रजाः । यस्माच्चैवं तस्मात्सर्व्वौषधं सर्व्वप्राणिनां देहदाहप्रशमनमन्नमुच्यते ॥

---

था॰ शेषासनविधानमिह विवक्षितं । इति प्रथमोऽनुवाकः ॥ १ ॥

उपक्रमोपसंहारयोर्ब्रह्मात्मैकत्वप्रतिपादनेनैवोपक्षयात् मध्ये भन्नस्योपासनविधौ तात्पर्य्ये च वाक्यभेदप्रसङ्गादत एवाङ्गे स्तुतिपरार्थत्वादिति न्यायेन यथा प्रयाजादिफलश्रवणमर्थवादरूपामग्न्यादिप्रतिपत्त्यैवरादि फलश्रवणमर्थवाद एव तत्तद्बुद्धिस्थिरीकारस्य पूर्व्वपूर्व्वबुद्धिविलापनेनात्मनः प्रतिपत्तिश्रेयस्त्वादिति द्रष्टव्यं । इति द्वितीयोऽनुवाकः ॥ २ ॥

उ० सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते ।
अन्नꣳ हि भूतानां ज्येष्ठं । तस्मात्सर्वौषधमुच्यते ।
अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्द्धन्ते ।
अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ।

---

भा० अन्नब्रह्मविदः फलमुच्यते । सर्वं वै ते समस्तमन्नजातमाप्नुवन्ति । के । येऽन्नं ब्रह्म यथोक्तमुपासते । कथमन्नजोऽन्नात्मान्नप्रलयोऽहं तस्मादन्नं ब्रह्मेति । कुतः पुनः सर्वान्नप्राप्तिफलमन्नात्मोपासनमित्युच्यते । अन्नं हि भूतानां ज्येष्ठं । भूतेभ्यः पूर्वं निष्पन्नत्वाज्ज्येष्ठं हि यस्मात्तस्मात्सर्वौषधमुच्यते । तस्मादुपपन्ना सर्वान्नात्मोपासकस्य सर्वान्नप्राप्तिः । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्द्धन्त इत्युपसंहारार्थं पुनर्वचनं । इदानीमन्ननिर्वचनमुच्यते । अद्यते चैव यद्भूतैरन्नमत्ति च भूतानि स्वयं तस्मादन्नं तदुच्यते । इतिशब्दः प्रथमकोशपरिसमाप्त्यर्थः ॥ अन्नमयादिभ्य आनन्दमयान्तेभ्य आत्मभ्योऽभ्यन्तरतमं ब्रह्म विद्यया प्रत्यगात्मत्वेन दिदर्शयिषुः शास्त्रमविद्याकृतं पञ्चकोशापनयनेनानेकतुषकोद्रववितुषीकरणेनेव तण्डुलान् प्रस्तौति । तस्माद्वा एतस्मादन्नरसमयादित्यादि । तस्मादेतस्माद्यथोक्तादन्नरसमयात्पिण्डादन्यो व्यतिरिक्तोऽन्तरोऽभ्यन्तर आत्मा पिण्डवदेव मिथ्यापरिकल्पित आत्मत्वेन प्राणमयः । प्राणो वायुस्तन्मयस्तत्प्रायस्तेन प्राणमयेनान्नरसमय आत्मा एष पूर्णो वायुनेव दृतिः । स वा

उ॰ तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तरात्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतां । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश

भा॰ एष प्राणमय आत्मा पुरुषविध एव पुरुषाकार एव शिरःपक्षादिभिः किं स्वत एव नेत्याह। प्रसिद्धं तावदन्नमयस्यात्मनः पुरुषविधत्वं। तस्यान्नरसस्य पुरुषविधतां पुरुषाकारतां । अन्वयं प्राणमयः पुरुषविधो मूषानिषिक्तप्रतिमावन्न स्वत एव। एवं पूर्व्वस्य पूर्व्वस्य पुरुषविधतामनूत्तरोत्तरः पुरुषविधो भवति पूर्व्वः पूर्व्वश्चोत्तरोत्तरेण पूर्णः। कथं पुनः पुरुषविधताऽस्येत्युच्यते । तस्य प्राणमयस्य प्राण एव शिरः प्राणमयस्य वायुविकारस्य प्राणो मुखनासिकानिःसरणो वृत्तिविशेषः शिर इव परिकल्प्यते वचनात्। सर्व्वत्र वचनादेव पक्षादिकल्पना। व्यानो व्यानवृत्तिर्दक्षिणः पक्षः। अपान उत्तरः पक्षः । आकाश आत्मा य आकाशस्थो वृत्तिविशेषः स समानाख्यः स आत्मेवात्मा प्राणवृत्त्यधिकारान्मध्यस्थत्वादितराः पर्य्यन्ता वृत्तीरपेक्ष्यात्मा । मध्यं ह्येषामङ्गानामात्मेति प्रसिद्धं मध्यमस्यात्मत्वं । पृथिवीपुच्छं प्रतिष्ठा । पृथिवीति पृथिवीदेवताऽऽध्यात्मिकस्य प्राणस्य धारयित्री स्थितिहेतुत्वात्सैषा पुरुषस्यापानमवष्टभ्येति हि श्रुत्यन्तरं । अन्यथा-

उ॰ आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुष-

---

भा॰ दानहस्त्योर्द्ध्वगमनं गुरुत्वाच्च पतनं वा स्याच्छरीरस्य तस्मात्पृथिवी देवता पुच्छं प्रतिष्ठा प्राणमयस्यात्मनः ॥ तत्तस्मिन्नेवार्थे प्राणमयात्मविषय एष श्लोको भवति ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

प्राणं देवा अनुप्राणन्ति । अग्न्यादयः प्राणं वाय्वात्मानं प्राणनशक्तिमन्तमनु तदात्मभूताः सन्तः प्राणन्ति प्राणनकर्म कुर्वन्ति प्राणनक्रियया क्रियावन्तो भवन्ति । अध्यात्माधिकाराद्देवा इन्द्रियाणि प्राणमनुप्राणन्ति मुख्यप्राणमनुचेष्टन्त इति वा । तथा मनुष्याः पशवश्च ये ते प्राणनकर्मणैव चेष्टावन्तो भवन्ति । अतश्च नान्नमयेनैव परिच्छिन्नेनात्मना आत्मवन्तः प्राणिनः। किन्तर्हि तदन्तर्गतेन प्राणमयेनापि साधारणेनैव सर्व्वपिण्डव्यापिनात्मवन्तो मनुष्यादयः। एवं मनोमयादिभिः पूर्व्वपूर्व्वव्यापि-

---

व्या॰ पूर्व्वपूर्व्वकोशस्योत्तरोत्तरः कोश एवात्मेति व्याख्यातमायातदर्शनेन । तदसत् ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

आत्मशब्दस्यामुख्यार्थत्वप्रसङ्गात् प्रकृतपरामर्शकेतच्छब्दसोपाधातः सर्व्वकोशाध्यासाधिष्ठानभूतश्चिदात्मैवात्रात्मशब्देन विवक्षित इति तात्पर्य्यमाह । तथा स्वाभाविकेनेति । अर्थादिश्यात्मशब्दसामर्थ्यात्कल्पितस्याधिष्ठानत्वानुपपत्तेश्चेत्यर्थः । यथा-

उ॰ मुच्यते । सर्व्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मो-पासते । प्राणो हि भूतानामायुः । तस्मात्सर्व्वा-युषमुच्यत इति । तस्यैष एव शारीर आत्मा ।

---

भा॰ भिरुत्तरोत्तरैः सूक्ष्मैरानन्दमयान्तैराकाशादिभूतारब्धै-रविद्याकृतैरात्मवन्तः सर्व्वे प्राणिनः । तथा स्वाभाविकेना-प्याकाशादिकारणेन नित्येनाविकृतेन सर्व्वगतेन सत्यज्ञा-नानन्तलक्षणेन पञ्चकोशातिगेन सर्व्वात्मनात्मवन्तः । स हि परमार्थत आत्मा सर्व्वेषामित्येतदर्थादुक्तं भवति । प्राणं देवा अनुप्राणन्तीत्युक्तं । तत्कस्मादित्याह । प्राणो हि यस्माद्भूतानां प्राणिनामायुर्जीवनं यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरिति श्रुत्यन्तरात् । तस्मात्सर्व्वायुषं । सर्व्वेषामायुः सर्व्वायुः सर्व्वायुरेव सर्व्वायुषमित्युच्यते । प्राणापगमे मरणप्रसिद्धेः । प्रसिद्धं हि लोके सर्व्वायुष्ट्वं प्राणस्य । अतोऽस्माद्बाह्यादसाधारणादन्नमयादात्मनोऽप-क्रम्यान्तः साधारणं प्राणमयमात्मानं ब्रह्मोपासते येऽह-मस्मि प्राणः सर्व्वभूतानामात्मायुर्जीवनहेतुत्वादिति ते सर्व्वमेवायुरस्मिँल्लोके यन्ति नापमृत्युना म्रियन्ते प्राक्प्राप्ता-दायुष इत्यर्थः । शतं वर्षाणीति तु युक्तं । सर्व्वमायुरिति

---

आ॰ बाह्यादिति । बाह्यत्वस्य [illegible] तथात्मबुद्धिं हित्वेत्यर्थः । साधारणमिति सर्व्वेन्द्रियसाधारणं । प्राणस्य तदभावादिना सर्व्वेषां मृत्यादिदर्शनादित्यर्थः । सर्व्वभूतानामात्मेति सूत्रात्मना मूर्त्तस्य च आत्मा [illegible] एव यस्य प्राणमयकोशस्येति [illegible]

५० यः पूर्वस्य । तस्माद्वा एतस्मात्प्राणमयात् ।
अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः ।
स वा एष पुरुषविध एव । तस्य पुरुषविधतां ।

---

भा० श्रुतिप्रसिद्धेः । किं कारणं प्राणो हि भूतानामायुस्त-
स्मात्सर्वायुषमुच्यत इति । यो यद्गुणकं ब्रह्मोपास्ते
स तद्गुणभाग्भवतीति विद्याफलप्राप्तेर्हेत्वर्थं पुनर्वचनं
प्राणो हीत्यादि । तस्य पूर्वस्यान्नमयस्यैष शरीरेऽन्न-
मये भवः शारीर आत्मा । क एषः । प्राणमयः ॥
तस्माद्वा एतस्मादित्युक्तार्थमन्यत् । अन्योऽन्तर आत्मा मनो-
मयः । मन इति सङ्कल्पविकल्पात्मकमन्तःकरणं तन्मयो
मनोमयः । सोऽयं प्राणमयस्याभ्यन्तर आत्मा । तस्य यजु-
रेव शिरः । यजुरित्यनियताक्षरपादावसानो मन्त्रविशेषस्त-
ज्जातीयवचनो यजुःशब्दस्तस्य शिरस्त्वं प्राधान्यात् । प्राधा-
न्यञ्च यागादौ सन्निपत्योपकारात् । यजुषा हि हविर्दी-
यते स्वाहाकारादिना वाचनिको वा शिरआदिकल्पना ।
सर्वत्र मनसो हि स्थानप्रयत्ननादस्वरपूर्णपदवाक्यविषया

---

था० यजुःशब्देन वाच्यो यजुर्वेद उच्यते । तस्य कथमान्तरं मनोमयं
प्रति शिरस्त्वमित्याशङ्क्याह । मनसो हीति ॥ यद्यपि यजुःशब्दो
वाच्ये शब्दराशौ रूढस्तथापि श्रुतेरनतिशङ्कनीयत्वात्तत्सामर्थ्या-
दिदमिदमनोवृत्तिर्यजुःसञ्ज्ञाविषयभूता यजुर्वेदमधीमहे एत-
त्क्रमका वर्णा यजुर्वेदतयाऽध्येतव्या इत्येवं सङ्कल्परूपा याज्ञे-
त्यर्थः । श्रुत्यनुग्राहिकां युक्तिमप्याह । सर्वत्रेति ॥ अन्यथा तेषा-
म्बानां घटादिवद्बाह्यत्वे मनोविषयत्वासम्भवान्मनसो वाह्य-

उ० अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश

---

भा० तत्सङ्कल्पात्मिका तद्भाविता वृत्तिः श्रोत्रादिकरणद्वारा यजुःसङ्केतेन विशिष्टा यजुरित्युच्यते । एवमृगेवं साम । एवञ्च मनोवृत्तित्वे मन्त्राणां वृत्तिरेवावर्त्त्यत इति मानसो जप उपपद्यते । अन्यथा विषयत्वान्मन्त्रो नावर्त्तयितुं शक्यो घटादिवदिति मानसो जपो नोपपद्यते । मन्त्रावृत्तिश्चोद्यते बहुशः कर्मस्वक्षरविषयस्मृत्यावृत्त्या मन्त्रावृत्तिः स्यादिति चेन्न । मुख्यार्थासम्भवात् । त्रिः प्रथमामन्वाह त्रिरुत्तमामिति ऋगावृत्तिः श्रूयते । तत्रर्चो विषयत्वे तद्विषयस्मृत्यावृत्त्या मन्त्रावृत्तौ च क्रियमाणायां त्रिःप्रथमामन्वाहेति ऋगावृत्तिर्मुख्योऽर्थस्त्यादितः परि-

---

आ० ईर्युक्तमन्यथा मानसो जपो न स्यादित्यर्थः। इतश्च मनोवृत्तित्वं मन्त्राणां वाच्यमित्याह। मन्त्रावृत्तिश्चेति। अन्यथा घटादिवद्बाह्यत्वे मन्त्राणां घटादिवदावृत्तिर्विषयत्वेन क्रियैव स्यादर्थेन स्वात्कृतिसिद्धानुपपत्त्याऽभिप्रायेण वाच्यमित्युक्तं। तत्रान्यथाप्युपपत्तिमाशङ्कते। अक्षरविषयेति। मन्त्रेभ्यः स्मृतेरन्यत्वादन्याऽऽवृत्तिरन्यत्र प्रसज्यते अतो वाक्याप्युपपत्तिविरुद्धमेतदिति स्फुटयति। त्रिः प्रथमामित्यादिना। सामिधेन्यः समिधो यदा आध्वर्युणा अग्नौ यदा प्रक्षिप्यन्ते अभिचव इत्यत्रादन्त्यं दृष्टं होता शंसति ताश्चावर्ची मध्ये प्रथमामृचं सकृत्स्यान्त्यामपि होता त्रिरनुब्रूयादित्यावृत्तिः श्रूयत इत्यर्थः। मन्त्राणां मनोवृत्तित्वमुक्त्वा मनोवृत्तीनां यदा विद्यात्मत्वेनैव सिद्धेश्चिदात्मकताभाव। तस्मादिति।

उ॰ आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

---

भा॰ व्यक्तः स्यात् । तस्मान्मनोवृत्त्युपाधिपरिच्छिन्नं मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुःशब्दवाच्यमात्मविज्ञानं मन्त्रा इति । एवं च नित्यत्वोपपत्तिर्वेदानाम् । अन्यथा विषयत्वे रूपादिवदनित्यत्वं च स्यान्नैतद्युक्तम् । सर्वे वेदा यत्रैकं भवन्ति स मानसीन आत्मेति च श्रुतिर्नित्यात्मनैकत्वं ब्रुवन्ती ऋगादीनां नित्यत्वे समञ्जसा स्यात् । ऋचोऽक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुरिति च मन्त्रवर्णः । आदेशोऽत्र ब्राह्मणमादेष्टव्यविशेषानादिशतीति । अथर्वाङ्गिरसा च दृष्टा मन्त्रा ब्राह्मणं च शान्तिकपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्पुच्छं प्रतिष्ठा तद-

---

व्या॰ मन्त्राणां मनोवृत्तित्वेनाभिव्यक्तिर्घटते । परम्परया चिदात्मत्वेन नित्यत्वमपि घटत इत्याह । एवञ्चेति ॥ अन्यथेति ॥ स्वप्रकाशचिदात्मत्वानङ्गीकारे रूपादिवद्विषयत्वादनित्यत्वमपि प्रसज्येत । कालिदासादिवाक्यानामप्येतेन न्यायेन नित्यत्वापाताद्युक्ताभासमेतत् । यत्त्वनित्यमिति । न वाच्यमित्याह । नैतद्युक्तमिति ॥ वाचा विरूपनित्ययेति श्रुत्या नित्यत्वस्यावेदितत्वाद्वेदानित्यत्वं युक्तं न भवतीत्यर्थः । वेदानां जडत्वे स्वप्रकाशेनात्मना एकत्वं न सम्भवति जडाजडयोर्विरोधादतो मनोवृत्तिव्यापकचिदात्मत्वं ह्युचितमित्यर्थः । साक्षितया मनसि भवो मानसीनोऽक्षरे परमे व्योमकल्पे प्रत्यक्चिति ऋचो विधिनिषेधरूपा निषेदुस्तादात्म्येन व्यवस्थिता इति मन्त्रवर्णः एकत्वं दर्शयतीत्यर्थः । आदेष्टव्यवि-

उ॰ यतो वाचो निवर्त्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्व्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स

---

भा॰ प्येष श्लोको भवति ॥ मनोमयात्मप्रकाशकः पूर्व्ववत् ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेत्यादि । तस्य पूर्व्वस्य प्राणमयस्यैष एवात्मा शारीरः । शरीरे प्राणमये भवः शारीरः । कः । य एष मनोमयः । तस्माद्वा एतस्मादिति पूर्व्ववत् । अन्योऽन्तर आत्मा विज्ञानमयो मनोमयस्याभ्यन्तरो विज्ञानमयो मनोमयो वेदात्मा उक्तः । वेदार्थविषया बुद्धिर्निश्चयात्मिका विज्ञानं तच्चाध्यवसायलक्षणमन्तःकरणस्य धर्म्मः । तन्मयो निश्चयविज्ञानैः प्रमाणस्वरूपैर्निर्वर्त्तित आत्मा विज्ञानमयः । प्रमाणविज्ञानपूर्व्वको हि यज्ञादिस्तायते । यज्ञादिहेतुत्वञ्च वक्ष्यति श्लोकेन । निश्चयविज्ञानवतो हि कर्त्तव्येष्वर्थेषु पूर्व्वं श्रद्धोपपद्यते । सा सर्व्वकर्त्तव्यानां प्राथम्याच्छिर

---

आ॰ श्रेयान् कर्त्तव्यविशेषादिदमेवं कर्त्तव्यमित्युपदिशतीत्यर्थः । इति तृतीयोऽनुवाकः । ३ ।

वाङ्मनसगोचरत्वं नोपपद्यते स्वात्मनि वृत्तिविरोधादतो वाङ्मनोविषयिण्यान्मनोमयाद्वाचो मनसा सह निवर्त्तन्त इत्यर्थः । तस्य

उ॰ वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ इति चतुर्थोऽनुवाकः॥ ४॥

---

भा॰ द्धैव शिरः। ऋतसत्ये यथा व्याख्याते एव। योगो युक्तिः समाधानं। आत्मैवात्मा। आत्मवतो हि युक्तस्य समाधानवतोऽङ्गानीव श्रद्धादीनि यथार्थप्रतिपत्तिक्षमाणि भवन्ति तस्मात्समाधानं। योग आत्मा विज्ञानमयस्य। महः पुच्छं प्रतिष्ठा। मह इति महत्त्वं प्रथमजं। महद्यक्षं प्रथमजमिति श्रुत्यन्तरात्। पुच्छं प्रतिष्ठाकारणात्। कारणं हि कार्याणां प्रतिष्ठा। यथा वृक्षवीरुधां पृथिवी। सर्व्वबुद्धिविज्ञानानां महत्त्वं कारणं। तेन तद्विज्ञानात्मा यस्यात्मनः प्रतिष्ठा। तदप्येष श्लोको भवति पूर्व्ववत्। यथान्नमयादीनां ब्राह्मणोक्तानां प्रकाशकाः श्लोका एवं विज्ञानमयस्यापि॥ इति चतुर्थोऽनुवाकः॥ ४॥

---

व्या॰ च मनोमयस्य ब्रह्मण उपासनफलभूतमधिदैविकमानन्दं विद्वान्न बिभेति गर्भवासादिदुःखादित्यर्थः। वेदार्थेति। तथा व्यवसायलक्षणं लौकिकमपि ज्ञानं ग्राह्यमित्यर्थः। इति चतुर्थोऽनुवाकः॥ ४॥

उ॰ विज्ञानं यज्ञं तनुते । कर्म्माणि तनुतेऽपि च । विज्ञानं देवाः सर्व्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्व्वान् कामान्त्समश्नुत

---

भा॰ विज्ञानं यज्ञं तनुते विज्ञानवान् हि यज्ञं तनोति श्रद्धादिपूर्व्वकं। अतो विज्ञानस्य कर्तृत्वं। तनुत इति कर्म्माणि च तनुते। यस्माद्विज्ञानकर्तृत्वं सर्व्वं। तस्माद्युक्तं विज्ञानमय आत्मा ब्रह्मेति। किञ्च विज्ञानं ब्रह्म सर्व्वे देवा इन्द्रादयो ज्येष्ठं प्रथमजत्वात् सर्व्वप्रवृत्तीनां वा तत्पूर्व्वकत्वात्प्रथमजं विज्ञानं ब्रह्म उपासते ध्यायन्ति तस्मिन्विज्ञानमये ब्रह्मण्य-भिमानं कृत्वोपासत इत्यर्थः। तस्मात्ते महतो ब्रह्मण उपासनाज्ज्ञानैश्वर्य्यवन्तो भवन्ति। तच्च विज्ञानं ब्रह्म चेद्यदि वेद विजानाति न केवलं वेदैव तस्माद्ब्रह्मणश्चेन्न प्रमाद्यति बाह्येष्वनात्मस्वात्मभावितत्वात् प्राप्तं विज्ञा-नमये ब्रह्मण्यात्मभावनायाः प्रमदनं तन्निवृत्त्यर्थमुच्यते तस्माच्चेन्न प्रमाद्यतीति अन्नमयादिष्वात्मभावं हित्वा केवले विज्ञानमये ब्रह्मण्यात्मत्वं भावयन्नास्ते चेदित्यर्थः। ततः किं स्यादित्युच्यते। शरीरे पाप्मनो हित्वा शरीराभिमा-

---

था॰ प्रथमजत्वादिति हिरण्यगर्भाभेदेनेत्यर्थः। आनन्दमयः पर-मात्मेति वृत्तिकारैरुक्तं तन्निषेधेन व्याचष्टे। कार्य्यात्मप्रतीतिरि-त्यादिना। ब्रह्मप्रतीत्येवमतिकामतीत्यभिप्रायेण व्याख्यातं। प्रात्यभिप्रायं कथमाह व्याख्यायत इत्यत आह। न चात्मन

उ॰ इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर

---

भा॰ ननिमित्ता हि सर्वे पाप्मानस्तेषां च विज्ञानमये ब्रह्मण्यात्माभिमाननिमित्तापाये हानमुपपद्यते। छत्रापाय इव छायायाः। तस्माच्छरीराभिमाननिमित्तान् सर्वान् पाप्मनः शरीरे प्रभवान् शरीरे एव हित्वा विज्ञानमयब्रह्मस्वरूपापन्नस्तत्स्थान् सर्वान् कामान् विज्ञानमयेनैवात्मना समश्नुते सम्यक् भुङ्क्त इत्यर्थः। तस्य पूर्वस्य मनोमयस्यात्मा एष एव शरीरे मनोमये भवः शारीरः। कः। य एष विज्ञानमयः। तस्माद्वा एतस्मादित्युक्तार्थं॥ आनन्दमय इति कार्यात्मप्रतीतिरधिकारान्मयट्शब्दाच्च। अन्नादिमया हि कार्यात्मानो भौतिका इहाधिकृताः। तदधिकारपतितश्चायमानन्दमयः। मयट् चात्र विकारार्थे दृष्टः। यथान्नमय इत्यत्र। तस्मात्कार्यात्माऽऽनन्दमयः प्रत्येतव्यः। संक्रमणाच्चानन्दमयमात्मानमुपसंक्रामतीति वक्ष्यति। कार्यात्मनां च संक्रमणमनात्मनां दृष्टं। संक्रमणकर्मत्वेन चानन्दमय आत्मा श्रूयते। यथान्नमय-

---

आ॰ एवेति॥ अन्नमयादीनामतिक्रमणीयतया प्रकृतत्वादेतस्य कर्तृत्वकर्मत्वासम्भवाच्च प्राप्तिः संक्रमणं न भवतीत्यर्थः॥ आनन्दमयस्य परमात्मत्वासम्भवे हेत्वन्तराण्याह। प्रिय इत्यादीत्यादिना॥ आनन्दमयस्य परमात्मत्वविवक्षायां मन्त्रतः तस्यैवासत्त्वाशङ्का वक्तव्या॥ तदसम्भवाच्च नानन्दमयः परमात्मतया प्रतिपद्यत इत्याह। मन्त्रोदाहरणानुपपत्तेश्चेति॥ न हि मन्त्रोदाहरणमुप-

उ॰ आत्मानन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतां। अन्वयं पुरु-

भा॰ मात्मानमुपसङ्क्रामतीति। न चात्मन एवोपसङ्क्रमणं। अधिकारविरोधादसम्भवाच्च। न ह्यात्मनैवात्मन उपसङ्क्रमणं सम्भवति। स्वात्मनि भेदाभावात्। आत्मभूतञ्च ब्रह्म। सङ्क्रमितुः शिरआदिकल्पनानुपपत्तेश्च। न हि यथोक्तलक्षण आकाशादिकारणेऽकार्य्यपतिते शिरआद्यवयवरूपकल्पनोपपद्यते। अदृश्येऽनात्म्येऽनिलयनेऽनिरुक्तेऽस्थूलमनणु नेति नेत्यादिविशेषापोहश्रुतिभ्यश्च। मन्त्रोदाहरणानुपपत्तेश्च। न हि प्रियशिरआद्यवयवविशिष्टे प्रत्यक्षतोऽनुभूयमान आनन्दमय आत्मनि ब्रह्मणि नास्ति ब्रह्मेत्याशङ्काभावात् असन्नेव भवति। असद्ब्रह्मेति वेद चेदिति मन्त्रोदाहरणमुपपद्यते। ब्रह्म पुच्छं प्रतिष्ठेत्यपि चानुपपन्नं। पृथग्ब्रह्मणः प्रतिष्ठात्वेन ग्रहणं। तस्मात्कार्य्यपतित एवानन्दमयो न पर एवात्मा। आनन्द इति विद्याकर्म्मणोः फलं। तद्विकार आनन्दमयः। स च विज्ञानमयादन्तरः। यज्ञादिहेतो-र्विज्ञानमयस्यान्तरत्वश्रुतेः। ज्ञानकर्म्मणोर्हि फलं भोक्त्रर्थ-

था॰ पद्यत इति सम्बन्धः। विशिष्टस्य विशेषणकार्य्यत्वात्तस्य च मिथ-प्रत्यक्षमानो भोक्ता चानन्दमय इत्युक्तं। कथं तस्य विज्ञानमया-दान्तरत्वमित्युक्त आह। स चेति। कर्मसेवया भोक्तृत्वस्यान्तर-भावित्वं प्रसिद्धमेव बुद्धेस्तत्त्वमित्यर्थः। एतत् स्फुटयति। ज्ञान-कर्म्मणोर्हीति। शरीरादिभ्य आनन्दसाधनेभ्यः सकाशात्ताभ्या-मानन्देन विशिष्टोऽन्तरतमः प्रसिद्धश्चेत्यर्थः। किञ्च प्रियं तत्-

उ० षविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा ।

---

भा० स्यादन्तरतमं स्यात् । अन्तरतमश्चानन्दमय आत्मा पूर्वेभ्यः । विद्याकर्मणोः प्रियाद्यर्थत्वाच्च । प्रियादिप्रयुक्ते हि विद्याकर्मणी । तस्मात्प्रियादीनां फलरूपाणामात्मसंनिकर्षाद्विज्ञानमयस्याभ्यन्तरत्वमुपपद्यते । प्रियादिवासनानिर्वर्त्तितो ह्यानन्दमयो विज्ञानमयाश्रितः स्वप्न उपलभ्यते ॥ तस्याप्यानन्दमयस्यात्मन इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः प्राधान्यात् । मोद इति प्रियलाभनिमित्तो हर्षः । स एव च प्रकृष्टो हर्षः । प्रमोद आनन्द इति सुखसामान्यमात्मा प्रियादीनां सुखावयवानां तेष्वनुस्यूतत्वादानन्द इति परं ब्रह्म । तद्धि शुभकर्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधावन्तःकरणवृत्तिविशेषे तमसा प्रच्छाद्यमाने प्रसन्नेऽभिव्यज्यते । तद्विषयसुखमिति प्रसिद्धं लोके । तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्मणोऽनवस्थितत्वा-

---

या० साधनत्वेनोद्दिश्य कर्त्ता विज्ञानमयोऽनुतिष्ठते । तत उद्देश्यत्वादस्यानन्तर्यं सिद्धमित्यर्थः । विद्याकर्मणोरिति । प्रियादिविशिष्टस्य स्वप्ने साक्षित्वेनोपलभ्यत्वाच्च न मुख्यात्मत्वमित्यर्थः । प्रियादिवासनेति । यदुक्तं ज्ञानकर्मणोः फलभूत आनन्दमयस्तस्य साध्यत्वमौपाधिकं स्वमतानुसारेणार्थः । आनन्द इति परमिति । कथं तर्हि विषयसुखस्य क्षणिकत्वं सातिशयत्वं च ब्रह्मणोऽभिव्यक्तिनिबन्धनमित्यर्थः । तद्वृत्तिविशेषेति । ब्रह्मण आनन्दस्वभावत्व एव किं प्रमाणमित्यत आह । वक्ष्यति चेति । अन्तःकरण-

उ॰ ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥
इति पञ्चमोऽनुवाकः ॥ ५ ॥

---

भा॰ सुखस्य चणिकत्वं। तद्यदन्तःकरणं तपसा तमोघ्नेन विद्यया ब्रह्मचर्येण श्रद्धया च निर्मलत्वमापद्यते यावत्तावद्विविक्ते प्रसन्नेऽन्तःकरणविशेष आनन्द उत्कृष्यते विपुलीभवति। वक्ष्यति च। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। एष ह्येवानन्दयाति एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरात्। एवञ्च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते। एवञ्चोत्कृष्यमाणस्यानन्दमयस्यात्मनः परमार्थब्रह्मविद्यानापेक्षया ब्रह्म परमेव यत्प्रकृतं सत्यज्ञानानन्तलक्षणं यस्य च प्रतिपत्त्यर्थे पञ्चान्नादिमयाः कोशा उपन्यस्ताः। यच्च तेभ्योऽभ्यन्तरं येन च ते सर्वे आत्मवन्तस्तद्ब्रह्म पुच्छं प्रतिष्ठा। तदेव च सर्वस्याविद्यापरिकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा। आनन्दमयस्य एकत्वावसानत्वात्। अस्ति तदेकमविद्याकल्पितस्य द्वैतस्यावसानभूतमद्वैतं

---

आ॰ कर्मोत्कर्षादेवानन्दस्य सातिशयत्वमित्यत्र लिङ्गमाह। एवञ्चेति। यदि विषयविशेषजन्यस्यैवानन्दोत्कर्षस्तदा निःकामस्य विषयविशेषोपभोगासम्भवादानन्दोत्कर्षो न श्रूयेत। आत्मस्वभावस्यैवानन्दस्य स्वच्छान्तःकरणसमुद्भूतोत्कर्षो इष्येत तु सति अकामहतत्वोत्कर्षः सम्भाव्यत इत्यर्थः। उक्तप्रकारेण विषयानन्दस्य सातिशयत्वे सति तद्विशिष्टस्यानन्दमयस्याब्रह्मत्वे सिद्धे। सातिशयत्वेन प्रियशरीरादि भिन्नत्वात्। ब्रह्म तु तदध्यासाधिष्ठानम-

उ॰ असन्नेव भवति । असद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति ।

---

भा॰ ब्रह्म प्रतिष्ठा पुच्छं तदेतस्मिन्नर्थे म एष श्लोको भवति ॥
इति पञ्चमोऽनुवाकः ॥ ५ ॥

असन्नेवासत्सम एव यथा ऽसन् पुरुषार्थसम्बन्धी एवं स भवति । अपुरुषार्थसम्बन्धी कोऽसौ । यो ऽसदविद्यमानं ब्रह्मेति वेद विजानाति चेद्यदि तद्विपर्य्ययेण यत्सर्व्वविकल्पास्पदं सर्व्वप्रवृत्तिबीजं सर्व्वविशेषप्रत्यस्तमितमप्यस्ति तद्ब्रह्मेति वेद चेत् । का पुनः शङ्का । तत्रास्तित्वे व्यवहारातीतत्वं ब्रह्मण इति ब्रूमः । व्यवहारविषये हि वाचारम्भणमात्रेऽस्तित्वभाविता बुद्धिस्तद्विपरीते व्यवहारातीते नास्तित्वमपि प्रतिपद्यते । यथा घटादिर्व्यवहारविषयतयोपपन्नः संस्तद्विपरीतोऽसन्निति प्रसिद्धं । एवं तत्सामान्यादिहापि स्याद्ब्रह्मणो नास्तित्वप्रत्याशङ्का । तस्मादुच्यते अस्ति ब्रह्मेति चेद्वेदेति । किं पुनः स्यात्तदस्तीति विजानतस्तदाह । सन्तं विद्यमानब्रह्मस्वरूपेण परमार्थसदात्मापन्नमेनमेवंविदं विदुर्ब्रह्मविदस्ततस्तस्मादस्तित्ववेदनात्सोऽन्येषां ब्रह्मवद्विज्ञेयो भवतीत्यर्थः । अथवा यो नास्ति ब्रह्मेति

---

आ॰ द्वितीयमित्याह । एवचेति । एतस्मिन्नर्थ इति आनन्दमयस्य प्रतिष्ठाभूतब्रह्मप्रकाशनपरे इत्यर्थः ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥
आनन्दमयस्य प्रकाशकोऽयं श्लोक इति केचन तान्प्रत्याह । तं प्रतीति ॥ सविशेषतया प्रत्यक्षत्वादित्यर्थः । सर्व्वेषां साधा-

उ॰ तस्यैष एव शारीर आत्मा । यः पूर्व्वस्य ।
अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य ।

भा॰ मन्यते स सर्व्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्य नास्तित्वं प्रतिपद्यते। ब्रह्मप्रतिपत्त्यर्थत्वात्तस्य। अतो नास्तिकः सोऽसन्नसाधुरुच्यते लोके । तद्विपरीतः सन् योऽस्ति ब्रह्मेति चेद्वेद स तद्ब्रह्मप्रतिपत्तिहेतुं सन्मार्गंवर्णाश्रमादिव्यवस्था-लक्षणंश्रद्दधानतया यथावत्प्रतिपद्यते यस्मात्ततस्तस्मात्सन्तं साधुमार्गस्थमेनं विदुः साधवः। तस्मादस्तीत्येव ब्रह्म प्रत्ये-तव्यमिति वाक्यार्थः। तस्य पूर्व्वस्य विज्ञानमयस्यैष एव शरीरे विज्ञानमये भवः शारीर आत्मा। कोऽसौ। य एष आनन्दमयस्तं प्रति नास्त्याशङ्का नाऽस्तत्वपूर्व्वास्तित्वेऽपोढः। सर्व्वविशेषत्वात्तु ब्रह्मणो नास्तित्वमित्याशङ्का युक्ता। सर्व्व-सामान्याच्च ब्रह्मणः यस्मादेवमतस्तस्मात्। अथानन्तरं श्रोतुः शिष्यस्यानुप्रश्नाः आचार्य्योक्तिमनु एते प्रश्नाः। सामान्यं हि ब्रह्माकाशादिकारणत्वाद्विदुषोऽविदुषश्च। तस्मादवि-दुषोऽपि ब्रह्मप्राप्तिराशङ्क्यते। उत अपि अविद्वानमुं लोकं परमात्मानमितः प्रेत्य कश्चन चशब्दोऽप्यर्थे विद्वानपि गच्छति प्राप्नोति किंवा न गच्छतीति द्वितीयोऽपि प्रश्नो द्रष्टव्यो-

आ॰ इयत्ताच ब्रह्मणो व्यवहार्य्यत्वं सर्व्वान् प्रति भवेत्स च दृश्यते तस्मोऽपि नास्तित्वाशङ्का आयत इत्यर्थः। आकाशादिकारणत्वा-दिति भूतभौतिकसर्व्वजीवकारणत्वादित्यर्थः। अस्य सामर्थ्येन प्राप्तं प्रश्नान्तरमित्यत आह। चशब्देति। केच्छन्दास्याचिक-

कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता३ उ। सोऽकामयत। बहु स्यां प्रजा-

---

शा० अनुप्रश्ना इति बहुवचनाद्विद्वांसं प्रत्यन्यौ प्रश्नौ। यद्यविद्वान् सामान्यं कारणमपि ब्रह्म न गच्छति ततो विदुषोऽपि ब्रह्मागमनमाशङ्क्यते अतस्तं प्रति प्रश्नः आहो विद्वानिति। विद्वान् ब्रह्मविदपि कश्चिदितः प्रेत्यामुं लोकं समश्नुते उ इत्येवं स्थिते अयादेशे यलोपे च कृतेऽकारस्य प्लुतिः समश्नुता उ इति विद्वान् समश्नुतेऽमुं लोकं। किंवा यथाऽविद्वानेवं विद्वानपि न समश्नुते इत्यपरः प्रश्नः। द्वावेव वा प्रश्नौ विद्वदविद्वद्विषयौ। बहुवचनन्तु सामर्थ्यप्राप्तप्रश्नान्तरापेक्षया घटते। असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेदेति श्रवणादस्ति नास्तीति संशयस्ततोऽर्थप्राप्तः किमस्ति नास्तीति प्रथमोऽनुप्रश्नः। ब्रह्मणोऽपक्षपातित्वादविद्वान् गच्छति न गच्छतीति द्वितीयः। ब्रह्मणः समत्वेऽप्यविदुष इव विदुषोऽप्यगमनमाशङ्क्यते। किं विद्वान् समश्नुते न समश्नुत इति तृतीयोऽनुप्रश्नः। एतेषां प्रतिवचनार्थमुत्तरग्रन्थ आरभ्यते। तत्रास्तित्वमेव तावदुच्यते। यच्चोक्तं सत्यं ज्ञानमनन्तं ब्रह्मेति। तत्र कथं सत्यत्वमित्येतद्वक्तव्यमितीदमुच्यते सत्त्वोक्त्यैव सत्यत्वमुच्यते। उक्तं हि सदेव सत्यमिति। तस्मात्सत्त्वोक्त्यैव सत्यत्वमुच्यते। कथमेवमर्थता-

---

आ० सत्त्वावगमसामर्थ्यादित्यर्थः। सत्त्वं चेदुपपन्नं सत्यत्वमपि तावत्तैव

भा॰ वगम्यतेऽस्य ग्रन्थस्य शब्दानुगमादनेनैव ह्यर्थेनान्वितान्युत्तराणि वाक्यानि । तत्सत्यमित्याचक्षते यदेष आकाश आनन्दो न स्यादित्यादीनि ॥

तत्रासदेव ब्रह्मेत्याशङ्क्यते । कस्मात् यदस्ति तद्विशेषतो गृह्यते यथा घटादि । यन्नास्ति तन्नोपलभ्यते यथा शशविषाणादि । तथा नोपलभ्यते ब्रह्म । तस्माद्विशेषतोऽग्रहणान्नास्तीति । तन्नाकाशादिकारणत्वाद्ब्रह्मणः । नास्ति ब्रह्म कस्मादाकाशादि हि सर्वं कार्यं ब्रह्मणो जातं गृह्यते। यस्माच्च जायते किञ्चित्तदस्तीति। दृष्टं लोके घटाङ्कुरादिकारणं मृद्बीजादि। तस्मादाकाशादिकारणत्वादस्ति ब्रह्म। नचासतो जातं किञ्चिद्गृह्यते लोके कार्यं। असतश्चेन्नामरूपादिकार्यं निरात्मकत्वान्नोपलभ्येत उपलभ्यते तु तस्मादस्ति ब्रह्म। असतश्चेत्कार्यं गृह्यमाणमप्यसदन्वितमेव तत् स्यात्। नचैवं तस्मादस्ति ब्रह्म। तत्कथमसतः सज्जायेतेति श्रुत्यन्तरं। असतः सज्जन्मासम्भवमाचष्टे न्यायतश्च । तस्मा-

---

था॰ सत्यत्वं सिद्ध्यति सतो बाधासम्भवादित्यर्थः। एवमर्थेति सत्त्वोपपादनेन सत्यवस्तुविषयत्वेत्यर्थः ॥

ब्रह्मणः सत्त्वसाधनं प्रमाणसत्त्वव्यतिरेकेणाभिप्रेत्यासत्त्वशङ्कामुद्भावयति । तत्रासदेवेति ॥ विप्रतिपन्नमाकाशादि सत्पूर्वं कार्यत्वात् घटवदिति लौकिकन्यायावष्टम्भेन सत्कारणं तावत्सिद्धं । तस्य च देशादिकारणत्वेन देशाद्यनवच्छिन्नत्वात् ब्रह्मपदवाच्यत्वं सिद्धं। तस्य विशेषतोऽनुपलम्भेनासत्त्वशङ्का जायते सा कारणत्वेन व्यावर्त्यते न तु कारणत्वात्सत्त्वं साध्यते आश्रयासिद्धिप्रसङ्गादिति भावः॥ इतोऽपि जगदुपादानेनासत्त्वाशङ्का कार्यत्वाच्च । न चासत इति ॥ असदन्वयादिदर्शनादिति ॥

उ॰ इदꣳ सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविशत् ।

---

भा॰ स्वात्मव्यतिरिक्तकार्यकरणसाधनान्तरापेक्षाच्च न तथा ब्रह्मणो निमित्ताद्यपेक्षत्वं किन्तर्हि स्वात्मनोऽनन्यात्तदेतदाह । सोऽकामयत स आत्मा । यस्मादाकाशः सम्भूतोऽकामयत कामितवान् । कथं बहु प्रभूतं स्यां भवेयं । कथमेकस्यार्थान्तराननुप्रवेशे बहुत्वं स्यादित्युच्यते । प्रजायेयोत्पद्येय । नहि पुत्रोत्पत्त्येवार्थान्तरविषयं बहुभवनं कथं तर्ह्यात्मस्थाऽनभिव्यक्तं नामरूपाभिव्यक्त्या । यदात्मस्थे ऽनभिव्यक्ते नामरूपे व्याक्रियेते तदा नामरूपापरित्यागेनैव ब्रह्मणोऽप्रविभक्ते देशकालसर्वावस्थासु व्याक्रियेते तदा तन्नामरूपव्याकरणं ब्रह्मणो बहुभवनं । नान्यथा निरवयवस्य ब्रह्मणो बहुत्वापत्तिरुपपद्यतेऽल्पत्वं वा । यथाकाशस्याल्पत्वं बहुत्वञ्च वस्त्वन्तरकृतमेव । अतस्तद्द्वारेणैवात्मा बहु भवति । न ह्यात्मनोऽन्यदनात्मभूतं तत्प्रवि-

---

आ॰ क्त्विति । कामस्य शरीरादिसम्बन्धजन्यत्वप्रसिद्धेर्ब्रह्मणः शरीरादिमत्त्वप्रसङ्ग इति नाशङ्कनीयमित्याह । साधनान्तरानपेक्षत्वाच्चेति । कामसंस्काररूपया मायया अज्ञातादाख्यया तत्परिणामात्मा मद्ज्ञानादाख्यात् शरीरनिमित्तापेक्षास्तीत्यर्थः । तद्द्वारेणैवेति । नामरूपव्याकृतात्मकमायापरिणामद्वारेणैव नामरूपप्रपञ्चात्मिका स्वरूपा माया यद्यङ्गीकृता चेत्तर्हि सा प्रधानवत् पृथक् सतीत्यद्वैतहानिरित्याशङ्क्याह । न हीति । आत्मातिरिक्तं किं स्वतः सिध्यति परतो वा । नाद्यः । जाड्यहानेरतिरेकहानेश्च । न द्वितीयः । प्रमासंसर्गानिरूपणात् । नहि भिन्नदेशकालयोः संयो-

भा॰ भक्तदेशकालं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भवद्भविष्यद्वास्तु विद्यते । अतो नामरूपे सर्व्वावस्थे ब्रह्मणैवात्मवती न ब्रह्म तदात्मकं । ते तत्प्रत्याख्यानेन न एवेति तदात्मके उच्येते । ताभ्यासोपाधिभ्यां ज्ञातृज्ञेयज्ञानशब्दार्थादि सर्व्वसंव्यवहारभाग्ब्रह्म स आत्मा । सऽएवंकामः सन्तपो-ऽतप्यत । तपऽइति ज्ञानमुच्यते । यस्य ज्ञानमयं तपऽइतिश्रुत्यन्तरादाप्तकामत्वाच्चेतरस्यासम्भव एव । स तपो-ऽतप्यत तपस्तप्तवान् सृज्यमानजगद्रचनादिविषयमालो-चनामकरोदात्मेत्यर्थः । स एवालोच्य तपस्तप्त्वा प्राणि-कर्म्मादिनिमित्तानुरूपमिदं सर्व्वं जगद्देशतः कालतो नाम्ना रूपेण यथानुभवं सर्व्वैः प्राणिभिः सर्व्वावस्थैरनुभूयमा-नमसृजत् सृष्टवान् । यदिदं किञ्च यत्किञ्चेदमविशिष्टं तदिदं जगत्सृष्ट्वा किमकरोदित्युच्यते । तदेव सृष्टं जगदनु-

---

आ॰ गादि सम्भवति विषयविषयिभावो वा । नियामकाभावप्रसङ्गात् । न च स्वभाव एव सम्बन्धः । द्वयोः स्वभावयोः सम्बन्धत्वेनैवोपगमे सम्बन्धाभावप्रसङ्गात् । न च स्वात्मानं प्रति स्वस्यैव सम्बन्धित्वं आ-त्माश्रयापातात् । तथा विषयाभावे व्यवहारमात्रप्रवर्त्तकत्वे च मिथ्यात्वव्यवहारापातादनिर्वचनीयवाद एव पर्य्यवस्यतीति भावः । यस्मादात्मातिरिक्तं वस्तु न सम्भाव्यते तस्मादात्मतादात्म्येनैव नामरूपयोः सिद्धिरित्याह । अतऽइति । तर्हि ब्रह्मणः सप्रप-ञ्चताप्रसङ्ग इति न वाच्यमित्याह । न ब्रह्मेति । न ब्रह्म तदात्मकं अजडत्वात्तत्परिहारेणापि सिद्धिसम्भवादित्यर्थः । कथं तर्हि ब्रह्मात्मकत्वं तत्राह । ते तदिति । स्वप्ने प्रबुद्धे नभोऽभ्यवदारो-पितस्यानुभवप्रत्याख्यानेन सिद्ध्यसम्भवादनुभवैर्नामरूपेऽनु-भाव्यात्मकब्रह्मात्मके कथ्येते न त्वैक्याभिप्रायेणेत्यर्थः । न केवलं ब्रह्मणो बहुरूपत्वं मायोपाधिकं सर्व्वव्यवहारास्पदत्वं चेत्याह ।

भा० प्राविशदिति प्रवेशस्यानिर्वाच्यताद्योतनेन न जीवस्य ब्रह्मा-
त्मतया प्रवेशवाक्यस्य तात्पर्यं दर्शयितुं विचारमारभते॥

तच्चैतच्चिन्त्यं कथमनुप्राविशदिति। किं यः स्रष्टा स
तेनैवात्मनानुप्राविशदुतान्येनेति किं तावद्युक्तं। प्रत्ययश्रव-
णात्। यः स्रष्टा स एवानुप्राविशदिति। ननु न युक्तं
मृद्वच्चेत्कारणं ब्रह्म तदात्मकत्वात्कार्यस्य। कारणमेव हि
कार्य्यात्मना परिणमत इत्यतोऽप्रविष्टस्येव कार्य्योत्पत्तेरूर्द्ध्वं
पृथक्कारणस्य पुनः प्रवेशोऽनुपपन्नः। न हि घटपरिणाम-
व्यतिरेकेण मृदो घटे प्रवेशोऽस्ति। यथा घटे चूर्णात्मना
मृदोऽनुप्रवेशः एवमन्येनात्मना नामरूपकार्य्येऽनुप्रवेश-
आत्मनइति चेत् श्रुत्यन्तराच्चानेन जीवेनात्मनानुप्रवि-
श्येति। नैवं युक्तं एकत्वाद्ब्रह्मणः। मृदात्मनस्त्वनेकत्वा-
त्सावयवत्वाच्च युक्तो घटे मृदश्चूर्णात्मनाऽनुप्रवेशः। मृद-

---

आ० ताभ्यामिति। प्रवेशस्यानिर्वाच्यभावद्योतनेन जीवस्य ब्रह्मात्म-
तया प्रवेशवाक्यस्य तात्पर्यं दर्शयितुं विचारमारभते।

तच्चैतच्चिन्त्यमित्यादिना। विमर्शे सति स्रष्टुरनुप्रवेशाद्युक्त-
रेव प्रवेशश्रुत्युक्तं सिद्धान्तिना। पूर्ववाद्याह। ननु न युक्तमि-
ति। सृष्टिप्रवेशक्रिययोः पूर्वापरकालीनत्वसम्भवे सति कर्तैक्यं
क्त्वाश्रुत्या बोध्येत न तु प्रवेशस्योत्तरकालता सम्भवति। सृष्टिसमय
एवोपादानस्य कार्य्यात्मतयावस्थितत्वादित्यर्थः। एतदेव विवृ-
णोति। कारणमेव हीति। अप्रविष्टे यथा भवनादौ देव-
दत्तस्य प्रवेशो दृष्टस्तथा कार्य्योत्पत्तेरूर्द्ध्वं पृथक्प्रवेशो न सम्भ-
वतीत्यर्थः। सिद्धान्त्येकदेशिनां मतमुद्भाव्य पूर्ववादी दूषयति।
यथा घट इत्यादिना। वस्तुतस्त्वन्यस्य वा प्रवेशो न सम्भव-
तीति चेत्कथं तर्हि प्रवेशो बाध्य इति सिद्धान्त्येकदेश्याह।
नैवमिति। नात्मनैवेति न वाच्यमित्याह। युक्तश्चेति। स

भा॰ शून्यस्याप्रविष्टदेशवत्त्वाच्च । न ह्यात्मन एकत्वे सति निरवयवत्वादप्रविष्टदेशाभावाच्च प्रवेश उपपद्यते । कथं तर्हि प्रवेशः स्यात् । युक्तश्च प्रवेशः श्रुतत्वात्तदेवानुप्राविशदिति । सावयवमेवास्तु तर्हि सावयवत्वात् मुखे हस्तप्रवेशवन्नामरूपकार्ये जीवात्मनानुप्रवेशो युक्त एवेति चेत् । नाशून्यदेशत्वात् । नहि कार्यात्मना परिणतस्य नामरूपकार्यदेशव्यतिरेकेणात्मशून्यः प्रदेशोऽस्ति यं प्रविशेज्जीवात्मना । कारणमेव चेत्प्रविशेज्जीवात्मत्वं जह्यात् । यथा घटो मृत्प्रवेशे घटत्वं जहाति तदेवानुप्राविशदिति च श्रुतेर्न कारणानुप्रवेशो युक्तः । कार्यान्तरमेव स्यादिति चेत् । तदेवानुप्राविशदिति जीवात्मरूपं कार्यं नामरूपपरिणतं कार्यान्तरमेवापद्यत इति चेन्न । विरोधात् । नहि घटो घटान्तरमापद्यते व्यतिरेकश्रुतिविरोधाच्च जीवस्य । नामरूपकार्यव्यतिरेकानुवादिन्यः श्रुतयो विरुध्येरन् । तदापत्तौ मोक्षासम्भवाच्च । नहि यतो मुच्यमानस्तदेवापद्यते । नहि शृङ्खलापत्तिर्बद्धस्य तस्करादेः ॥

---

व्या॰ स्वाघ गतिं । सावयवमेवेति । पूर्ववादी दूषयति । नाशून्यदेशत्वादिति । कार्यात्मना परिणतस्य ब्रह्मणो नामरूपात्मकं कार्यमेव देशस्तद्व्यतिरेकेण न ह्यन्यः प्रदेशोऽस्ति । यत्कारणमेव कार्याकारेण परिणतं तत्स्वकार्यविशेषो जीवात्मना प्रवेक्ष्यतीति न प्रसङ्गोऽयमित्यर्थः । कारणमेव चेदिति । कार्यविशेषस्य प्रवेशमङ्गीकृत्य दूषणमुक्तं स न सम्भवति श्रुतिविरोधादित्याह । तदेवेति । कारणपरामर्शिना तच्छब्देन कार्यमुपलक्ष्य कार्यान्तरस्य तत्र प्रवेशो विधीयते । प्राप्तदेशसम्भवात् । अतो न श्रुतिविरोध इति सिद्धान्त्येकदेशिमतमुद्भाव्य दूषयति । कार्यान्तरमेवेत्यादिना ॥

भा॰ वाह्यान्तर्भेदेन परिणतमिति चेत् तदेव कारणं ब्रह्म शरीराद्याधारत्वेन तदन्तर्जीवात्मना आधेयत्वेन च परिणमत इति चेन्न। बहिष्ठस्य प्रवेशोपपत्तेः। नहि यो यस्यान्तःस्थः स एव प्रविष्ट उच्यते। बहिष्ठस्यानुप्रवेशः स्यात्प्रवेशशब्दार्थस्यैवं दृष्टत्वात्। यथा गृहं कृत्वा प्राविशदिति। जलसूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेन्न। अपरिच्छिन्नत्वादमूर्त्तत्वाच्च। परिच्छिन्नस्य मूर्त्तस्यान्यस्यान्यत्र प्रसादस्वाभाविके जलादौ सूर्यकादिप्रतिबिम्बोदयः स्यात्। न त्वात्मनोऽमूर्त्तत्वादाकाशादिकारणस्यात्मनो व्यापकत्वात्। तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्तः। एवं तर्हि नैवास्ति प्रवेशो न च गत्यन्तरमुपलभामहे। तदेवानुप्राविशदिति च श्रुतिः। श्रुतिश्च नोऽतीन्द्रियविषयविज्ञानोत्पत्तौ निमित्तं। नचास्माद्वाक्याद्यत्नवतामपि विज्ञानमुपपद्यते। हन्त तर्ह्यनर्थकत्वादपोह्यमेतद्वाक्यं।तत्सृष्ट्वा तदेवानुप्राविशदिति न। अन्यार्थ-

---

आ॰ कारणवाचकेन तच्छब्देन कार्य्यावस्थायामविवक्षितकार्या चेत्प्रसज्येत तर्हि कारणपर एव तच्छब्दोऽस्त्वित्याह चान्यः सिद्धान्त्येकदेशी। वाह्येति। धर्मिमध्ये प्रवेशश्रुतेर्मुख्यार्थो न लभ्यते-त्याह। न बहिष्ठेति। अन्यस्य वेदान्तिनो मतमुद्भाव्य दूषयति। जल इत्यादिना। एवं सिद्धान्त्येकदेशीयं निरस्य पूर्व्ववाद्युपसंहरति। एवं तर्हीति। नैवास्ति प्रवेशो ब्रह्मणः ततोऽन्यस्यापि प्रवेशो न सम्भवतीत्युक्तमित्याह। न चेति। इतरस्यापि प्रवेशः कल्पयितुं न शक्यत इत्याह। तदेवानुप्राविश-दिति। सा च श्रुतिः स्पष्टः प्रवेशमाह। सा चास्माकं मीमांसकानां प्रमाणं ततस्तद्विरोधे नान्यस्य प्रवेशकल्पना युक्तेति

उ॰ तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्चा-

---

भा॰ त्वात् । किमर्थमस्माने चर्चा प्रकृतोऽप्यन्यो विवक्षितोऽस्य वाक्यस्यार्थोऽस्ति स वक्तव्यः । ब्रह्मविदाप्नोति परं । सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायामिति । तद्विज्ञानं च विवक्षितं प्रकृतं च तत् । ब्रह्मस्वरूपावगमाय चाकाशाद्यन्नमयान्तं कार्यं प्रदर्शितं ब्रह्मानुगमश्चारब्धः । तत्रान्नमयादात्मनोऽन्योऽन्तर आत्मा प्राणमयस्तदन्तर्मनोमयो विज्ञानमय इति । विज्ञानगुहायां प्रवेशितश्चानन्दमयो विशिष्ट आत्मा प्रदर्शितः । अतः परमानन्दमयलिङ्गाधिगमद्वारेणानन्दविवृद्ध्यवसान आत्मा । ब्रह्म पुच्छं प्रतिष्ठा सर्वविकल्पास्पदो निर्विकल्पोऽस्यामेव गुहायामधिगन्तव्य इति तत्प्रवेशः प्रकल्प्यते ॥

---

टी॰ भावः । तर्हि श्रुतिशरणतयैव प्रवेश एव प्रवेशमुपगम्यतामित्याशङ्क्याह । न चेति । तस्मादन्यो गतिमविन्ददिति यदर्थशून्यमेवेदं वाक्यमिति निगमयति । इतोति । प्रतिबिम्बोपलब्ध्यर्थत्वासम्भवादर्थशून्यत्वं तात्पर्यागोचरस्य वा । नाद्यः । आकाशादेरविप्रकृष्टदेशेऽपि जलेऽमूर्त्तस्य प्रतिबिम्बभाववदमूर्त्तस्यापि ब्रह्मणोऽनिर्बाध्याविद्यासु प्रतिबिम्बितस्य बुद्ध्यन्तःकरणादिषु प्रतिबिम्बाभावसम्भवादित्याह । नेति । न द्वितीय इत्याह । अन्यार्थत्वादिति । एतत्स्फुटयति । किमर्थमित्यादिना । अतः परमिति । बुद्धिगुहाप्रवेशादनन्तरमानन्दमय एव विशिष्टोऽर्थो विशेष्यस्य विज्ञातोऽतिविशिष्टस्य विशेष्याव्यभिचारदर्शनात्तदधिगमद्वारेणानन्दविवृद्ध्यवसान आत्मा ब्रह्मरूपोऽस्यामेव गुहायामधिगन्तव्य इत्यभिप्रेत्य जले सूर्यप्रवेशवदनिर्वाच्यः प्रवेशोऽभिधीयत इत्यर्थः ।

उ॰ निरुक्तञ्च । निलयनञ्चानिलयनञ्च । विज्ञा-

भा॰ न ह्यन्यत्रोपलभ्यते ब्रह्म निर्विशेषत्वात् विशेषसम्बन्धो ह्युपलब्धिहेतुर्दृष्टः । यथा राहोश्चन्द्रार्कविशिष्टसम्बन्धः । एवमन्तःकरणगुहात्मसम्बन्धो ब्रह्मण उपलब्धिहेतुः । सन्निकर्षादवभासात्मकत्वाच्चान्तःकरणस्य । यथा चालोकविशिष्टघटाद्युपलब्धिरेवं बुद्धिप्रत्ययालोकविशिष्टात्मोपलब्धिः स्यात्तस्मादुपलब्धिहेतौ गुहायां निहितमिति प्रकृतमेव । तद्वृत्तिस्थानीये त्विह पुनस्तत्सृष्ट्वा तदेवानुप्राविशदित्युच्यते । तदेवेदमाकाशादिकारणं कार्यं सृष्ट्वा तदनुप्रविष्टमिवान्तर्गुहायां बुद्धौ द्रष्टृश्रोतृमन्तृविज्ञात्रित्येवं विशेषवदुपलभ्यते । तदेव तस्य प्रवेशस्तस्मादस्ति तत्कारणं ब्रह्म । अतोऽस्तित्वादस्तीत्येवोपलब्धव्यं तत् । तत्कार्यमनुप्रविश्य किं सच्च मूर्त्तं च त्यच्चामूर्त्तमभवत् । मूर्त्तामूर्त्ते ह्यव्याकृते नामरूपे आत्मस्थेऽन्तर्गतेनात्मना व्याक्रियेते मूर्त्तामूर्त्तशब्दवाच्ये ते । आत्मना त्वविभक्तदेशकाले इति कृत्वा आत्मा तेऽभवदित्युच्यते । किञ्च निरुक्तञ्चानिरुक्तञ्च निरुक्तं नाम निष्कृष्टं समानासमानजातीयेभ्यो देशकाल

---

आ॰ बुद्धिगुहायामेव ब्रह्मणोपलब्धिसम्भवात्तत्रैव प्रवेशोऽभिधित्सित इत्याह । न हीति । नन्वन्यत्रोपलभ्यतां ब्रह्म बुद्धावेव कथमुपलभ्यत इत्याशङ्क्योपाधिर्व्यक्ताविशेषसम्भवादित्याह । विशेषेति । सन्निकर्षादित्यन्तःकरणसंसर्गादेव देहघटादिषु चैतन्याभिव्यक्तिर्न स्वतः । अन्तःकरणस्याव्यवधानेनैव चैतन्याभिव्यञ्जकत्वमन्वयव्यतिरेकाभ्यामित्यर्थः । यथा चाऽऽलोकसद्भावे घटादौ

उ० नञ्चाविज्ञानञ्च । सत्यञ्चानृतञ्च सत्यमभवत् ।

भा० विशिष्टनयेदं तदित्युक्तं निरुक्तमनिरुक्तं तद्विपरीतं निरुक्तानिरुक्तेऽपि मूर्त्तामूर्त्तयोरेव विशेषणे । यथा सच्च त्यच्च प्रत्यक्षपरोक्षे । तथा निलयनं चानिलयनं च । निलयनं नीडं आश्रयो मूर्त्तस्यैव धर्मः । अनिलयनं तद्विपरीतममूर्त्तस्यैव धर्मः । त्यदनिरुक्तानिलयनान्यमूर्त्तत्वेऽपि व्याकृतविषयाण्येव।सर्गोत्तरकालभावश्रवणात्। त्यदिति प्राणाद्यनिरुक्तं तदेवानिलयनञ्च।अतो विशेषणान्यमूर्त्तस्य व्याकृत विषयाण्येवैतानि। विज्ञानं चेतनमविज्ञानं तद्रहितमचेतनं पाषाणादि सत्यञ्च व्यवहारविषयमधिकारान्न परमार्थसत्यमेकमेव हि परमार्थसत्यं ब्रह्म। इह पुनर्व्यवहारविषयमापेक्षिकं सत्यं मृगतृष्णिकाद्यनृतापेक्षयोदकादि सत्यमुच्यते। अनृतं च तद्विपरीतं। किं पुनरेतत्सर्व्वमभवत्परमार्थसत्यं किं पुनस्तद्ब्रह्म।सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतत्वात्॥ यस्मात्सत्त्यदादिकं मूर्त्तामूर्त्तधर्मजातं यत्किञ्चेदं सर्व्वमविशिष्टं विकारजातमेकमेव सच्छब्दवाच्यं ब्रह्माभवत् । तद्व्यतिरेकेणाभावान्नामरूपविकारस्य । तस्मात्तद्ब्रह्म सत्य-

था० मुखं न प्रतिबिम्बिते जलादौ स्वच्छस्वभावके प्रतिबिम्बितं तथा सत्त्वप्रधानस्यान्तःकरणप्रसादस्वाभाव्याद्दृष्टत्वे। तत्र ब्रह्मोपलब्धिरित्याह । अवभासात्मकत्वाच्चेति । किञ्च यथा जाड्यसाम्येऽन्तःकरणस्यैव प्रत्ययाकारपरिणतस्याज्ञानलक्षणावरणाभिभवसामर्थ्यं घटादिभ्योऽङ्गीक्रियते तथा जाड्यसाम्येऽन्तःकरणस्यैव प्रत्ययाकारपरिणतस्याज्ञानलक्षणावरणाभिभवसामर्थ्यं

उ॰ यदिदं किञ्च । तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥

---

भा॰ मित्याचक्षते । ब्रह्मविदोऽस्ति नास्तीत्यनुप्रश्नः प्रकृतस्तस्य प्रतिवचनविषय एतदुक्तमात्माकामयत बहु स्यामिति । स यथा काममाकाशादिकार्यं सत्यदादिलक्षणं सृष्ट्वा तदनुप्रविश्य पश्यञ्छृण्वन्मन्वानो विजानन् बह्वभवत्तस्मात्तदेवेदमाकाशादिकारणं कार्यस्थं परमे व्योमन् हृदयगुहायां निहितं तत्प्रत्ययावभासविशेषेणोपलभ्यमानमस्तीत्येवं विजानीयादित्युक्तं भवति । तदेतस्मिन्नर्थे ब्राह्मणोक्ते एष श्लोको मन्त्रो भवति । यथा पूर्वेष्वन्नमयाद्यात्मप्रकाशकाः पञ्चस्वप्येवं सर्वान्तरतमात्मास्तित्वप्रकाशकोऽपि मन्त्रः कार्यद्वारेण भवति ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥

---

प्र॰ मित्याह । यथा चेति । निलयनं मठप्रासादादिमूर्तसन्निवेशविशेषोऽवयवसंस्थानविशेषराहित्यमनिलयनमनियतत्वाद्यमूर्तधर्मवद्ब्रह्म एव किं न स्यादित्यत आह । त्यदनिरुक्तानिलयनानीति । सत्यमित्याचक्षत इत्यस्योपपत्तिमाह । यस्मादिति । पदानि व्याख्याय प्रकृतानुप्रश्ननिराकरणे पर्यवसानस्य तात्पर्यं सोऽकामयतेत्यादेर्दर्शयति । अस्ति नास्तीत्यादिना । तस्या बुद्धिगुहायाः प्रत्ययाः कर्ता भोक्तेत्यादयस्त एवावभासविशेषास्तैरुपलभ्यमानं विरुद्धधर्मस्य विषयत्वेऽपि स्वरूपस्याविषयत्वादित्यर्थः । इति षष्ठोऽनुवाकः ॥ ६ ॥

उ॰ असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानँ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वैतत्सुकृतं। रसो वै

---

भा॰ असद्वा इदमग्र आसीत्। असदिति व्याकृतनामरूपविशेषविपरीतरूपं। अव्याकृतं ब्रह्मोच्यते। न पुनरत्यन्तमेवासत्। न ह्यसतः सज्जन्मास्तीदमिति नामरूपविशेषवद्व्याकृतं जगदग्रे पूर्वं प्रागुत्पत्तेः। ब्रह्मैवासच्छब्दवाच्यमासीत्ततो ऽसतो वै सत्प्रविभक्तनामरूपविशेषमजायतोत्पन्नं। किन्ततः प्रविभक्तकार्य्यमिति पितुरिव पुत्रो नेत्याह। तदसच्छब्दवाच्यं स्वयमेवात्मानमेवाकुरुत कृतवत्। यस्मादेवं तस्मात्तद्ब्रह्मैव सुकृतं स्वयं कर्तृ उच्यते। स्वयं कर्तृ ब्रह्मेति प्रसिद्धं लोके सर्व्वस्य कारणत्वात्। यस्माद्वा स्वयमकरोत्सर्व्वं सर्वात्मना तस्मात्पुण्यरूपेणापि तदेव ब्रह्म कारणं सुकृतमुच्यते। सर्व्वथापि तु फलसम्बन्धादिकारणं सुकृतशब्दवाच्यं प्रसिद्धं लोके। यदि पुण्यं यदि वान्या सा प्रसिद्धिर्नित्ये चेतनवत्कारणे सत्युपपद्यते। तस्मादस्ति तद्ब्रह्म सुकृतप्रसिद्धेः। इतश्चास्ति रसत्वात्। कुतो रसत्वप्रसिद्धिर्ब्रह्मण इत्यत आह। यद्वैतत्सुकृतं रसो वै सः। रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके। रसमेवायं लब्ध्वा प्राप्या-

---

था॰ सुकृतमिति क्तप्रत्ययः। सुष्ठु क्रियत इति कर्म्माभिधायकोऽपि छान्दस्या प्रक्रियया सुष्ठु करोतीति कर्त्तरि व्याख्यातः। एकार्थ-वृत्तित्वेनैकप्रयोजनसाधनत्वेन परस्परायत्ततेत्यर्थः। अन्यथेति

उ० सः । रसꣳ ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष

---

भा० नन्दी सुखी भवति नासत आनन्दहेतुत्वं दृष्टं लोके। बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसो नूनं। ब्रह्मैव रसस्तेषां। तस्मादस्ति तेषामानन्दकारणं रसवद्ब्रह्म ॥ इतश्चास्ति कुतः। प्राणनादिक्रियादर्शनात्। अयमपि हि पिण्डो जीवतः प्राणेन प्राणिति अपानेनापानिति। एवं वायवीया ऐन्द्रियकाश्च चेष्टाः संहतैः कार्य्यकरणैर्निर्वर्त्यमाना दृश्यन्ते। तच्चैकार्थवृत्तित्वेन संहननं संहननान्तरेणाचेतनं संहतं सम्भवति। अन्यत्रादर्शनात्। तदाह यद्यदि एष आकाशे परमे व्योम्नि गुहायां निहित आनन्दो न स्यान्न भवेत्को ह्येव लोकेऽन्यादपानचेष्टां कुर्य्यादित्यर्थः। कः प्राण्यात् प्राणनं कुर्य्यात्तस्मादस्ति तद्ब्रह्म। यदर्थाः कार्य्यकरणप्राणनादिचेष्टाः तत्कृत एवानन्दो लोकस्य। कुतः। एष ह्येव पर आत्मानं दयाति आनन्दयति सुखयति लोकं धर्मानुरूपं। स एवात्मानन्दरूपोऽविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थः। भयाभयहेतुत्वाद्विद्वदविदु-

---

आ० गृहप्रासादादिषु स्वतन्त्रं गृहाद्यनारभ्यं स्वामिनमन्तरेण संहननस्यादर्शनात्कार्य्यकरणसङ्घातेऽपि विलक्षणः स्वामी शरीरोऽवयवादिभिरुपचयादिरहितोऽवगम्यते। स च चेतनत्वेन भेदा-

उ॰ एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति॥ यदा

---

भा॰ योऽस्ति तद्ब्रह्म। यदवस्थाश्रयणेन ह्यभयं भवति। नासदवस्थाश्रयणेन भयनिवृत्तिरुपपद्यते। कथमभयहेतुत्वमित्युच्यते। यदा ह्येव यस्मादेष साधक एतस्मिन् ब्रह्मणि किं विशिष्टेऽदृश्ये दृश्यं नाम द्रष्टव्यं विकारो दर्शनार्थत्वाद्विकारस्य। न दृश्यमदृश्यमविकार इत्यर्थः। एतस्मिन्नदृश्येऽविकारेऽविषयभूतेऽनात्म्येऽशरीरे यस्माददृश्यं तस्मादनात्म्यं यस्मादनात्म्यं तस्मादनिरुक्तं। विशेषो हि निरुच्यते। विशेषश्च विकारः। अविकारश्च ब्रह्म। सर्व्वविकारहेतुत्वात्तस्मादनिरुक्तं। यत एवं तस्मादनिलयनं निलयनं नीड आश्रयो न निलयनमनाधारं तस्मिन्नेतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने सर्व्वकार्य्यधर्म्मविलक्षणे ब्रह्मणीति वाक्यार्थः। अभयमिति क्रियाविशेषणं। अभयामिति च लिङ्गान्तरं परिणम्यते। प्रतिष्ठां स्थितिमात्मभावं विन्दते लभते। अथ तदा स तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनादभयं गतो भवति। स्वरूपप्रतिष्ठो ह्यसौ यदा भवति तदा नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति। अन्यस्य ह्यन्यतो भयं भवति नात्मन एवाऽऽत्मनो भयं

---

टी॰ भावाद्वैतेनेति तदखिलत्वसिद्धिरित्यर्थः। दासोऽहं तस्य देवस्य ममाराध्यः परमेश्वर इति भेदं विद्वान् कथमभय इत्युच्यते तत्राह। यदैषो योऽयमिति। यथा चन्द्रभेदं पश्यन्नपि विद्वानुपैतेऽ

उ॰ ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥ इति सप्तमोऽनुवाकः॥ ७॥

---

भा॰ युक्तं तस्मादात्मैवात्मनोऽभयकारणं। सर्वतो हि निर्भया ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु तच्चायुक्तं असति भयत्राणे ब्रह्मणि। तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्मेति। कदासावभयं गतो भवति साधको यदा नान्यत्पश्यत्यात्मनि चान्तरं भेदं न कुरुते तदाऽभयं गतो भवतीत्यभिप्रायः। यदा पुनरविद्यावस्थायां हि यस्मादेषोऽविद्यावान् अविद्यया प्रत्युपस्थापितं वस्तु तैमिरिकद्वितीयचन्द्रवत्पश्यत्यात्मनि चैतस्मिन् ब्रह्मणि। उदपि अरमल्पमप्यन्तरं छिद्रं भेददर्शनं कुरुते। भेददर्शनमेव ह्यन्तः-करणमल्पभेदं पश्यतीत्यर्थः। अथ तस्माद्भेददर्शनात् हेतोरस्य भेददर्शिन आत्मनो भयं भवति। तस्मादात्मैवात्मनो भयकारणमविदुषस्तदेतदेव तदस्य तु एव भयं भेददर्शिनो विदुष ईश्वरोऽन्यो मत्तोऽहमन्यः संसारीत्येवं विदुषो भेददृष्टमीश्वराख्यं तदेव ब्रह्माल्पमप्यन्तरं कुर्वतो भयं भवत्येकत्वेनामन्वानस्य। तस्माद्विद्वानपि अविद्वानेव। असौ योऽयमेकमभिन्नमात्मतत्त्वं न पश्यति उच्छेदहेतुदर्शनाद्ध्युच्छे-

---

१॰ तत्त्वदर्शित्वाभावेत्यर्थः। कथं तर्हि तस्य भयसम्भावनेत्यत आह। उच्छेदेति। संहर्ता हि परमेश्वरो मां संहरिष्यति नरके वा निक्षेप्स्यतीति पश्यतो भयं भवतीत्यर्थः। अथवोच्छेदहेतुः कुत

उ॰ भीषाऽस्माद्वातः पवते । भीषोदेति सूर्य्यः ।
भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ।
सैषानन्दस्य मीमाꣳसा भवति । युवा स्यात्
साधु युवाध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः ।
तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स

---

भा॰ द्याभिमतस्य भयं भवति। अनुच्छेद्यो ह्युच्छेदहेतुसाना-
त्युच्छेदहेतावनुच्छेद्ये तद्दर्शनकार्य्यं भयं युक्तं। सर्व्वञ्च
जगद्भयवद्दृश्यते। तस्माज्जगतो भयदर्शनाद्गम्यते नूनं तदस्ति
भयकारणमुच्छेदहेतुरनुच्छेदात्मकं यतो जगद्बिभेतीति।
तदेतस्मिन्नर्थे एष श्लोको भवति॥ इति सप्तमोऽनुवाकः॥७॥

भीषा भयेनास्माद्वातः पवते। भीषोदेति सूर्य्यः। भीषा-
ऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति। वातादयो हि
महार्हाः स्वयमीश्वराः सन्तः पवनादिकार्य्येष्वायासबहु-
लेषु नियताः प्रवर्त्तन्ते। भयकारणमानन्दं ब्रह्म। तस्मात्
ब्रह्मण आनन्दस्यैतद्युक्तं। प्रशास्तरि सति यस्मिन्नियमेन
तेषां प्रवर्त्तनं तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म।
यतस्ते भृत्या इव राज्ञः अस्माद्ब्रह्मणो भयेन प्रवर्त्तन्ते।

---

आ॰ इत्यत आह। अनुच्छेद्यो हीति। उच्छेदहेतोरप्युच्छेदस्येऽनवस्था-
प्रसङ्गान्नित्यत्वं वक्तव्यं तच्च ब्रह्मणो नान्यस्याभावत इत्यर्थः। इति
सप्तमोऽनुवाकः। ७।

तत्र भयकारणं ब्रह्मानन्दमुक्तं यदेष आकाश आनन्दो न
स्यादिति। अथानन्दस्य लौकिकस्य प्रसिद्धस्तो विचारमार-

उ० एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वा-

---

भा० तत्र भयकारणमानन्दं ब्रह्म। तस्यास्य ब्रह्मण आनन्दस्यैषा मीमांसा विचारणा भवति। किमानन्दस्य मीमांस्यमित्युच्यते। किमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदाहोस्वित्स्वाभाविक इत्येवमेषानन्दस्य मीमांसा। तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्टः। स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थं। अनेन हि प्रसिद्धेनानन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते। लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्राऽविद्यया तिरस्क्रियमाणोऽविज्ञातो उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभिः कर्मवशाद्यथाविज्ञानं विषयादिसाधनसम्बन्धवशाच्च विभाव्यमानश्च लोकेऽनवस्थितो लौकिकः सम्पद्यते स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो

---

व्या० भते। तस्यास्येत्यादिना। ब्रह्मानन्दस्य चेन्मीमांसा प्रस्तुता किमर्थस्तर्हि सार्वभौमानन्दाद्युपन्यास इत्यत आह। तत्र लौकिक इत्यादिना। लौकिक आनन्दः बधिकाष्ठां प्राप्तः। सातिशयत्वात्परमाणुवदिति ब्रह्मानन्दानुगमार्थः। लौकिकोपन्यास

उ॰ णामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य

---

भा॰ विभाव्यते शतगुणोत्तरोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनन्द इति । निरस्तेऽविद्याकृते विषयविषयिविभागे विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैते भवतीत्येतमर्थं विभावयिष्यन्नाह । युवा प्रथमवयाः साधुयुवेति । साधुश्चासौ युवा चेति यूनो विशेषणं । युवाप्यसाधुर्भवति साधुरप्ययुवाऽतो विशेषणं युवा स्यात्साधुयुवेति । आध्यायिकोऽधीतवेदः । आशिष्ठ आशास्तृतमः । दृढिष्ठो दृढतमः । बलिष्ठो बलवत्तमः । एवमाध्यात्मिकसाधनसम्पन्नः । तस्येयं पृथिवी उर्वी सर्व्वा वित्तस्य वित्तेनोपभोगसाधनेन दृष्टार्थेन च कर्म्मसाधनेन सम्पन्ना पूर्णा । राजा पृथिवीपतिरित्यर्थः । तस्य च य आनन्दः स एको मानुषो मनुष्याणां प्रकृष्ट एक आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः । मानुषादानन्दाच्छतगुणेनोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवति ।

---

व्या॰ इत्यर्थः । विषयेभ्यो व्यावृत्ताः व्यावृत्तविषया अविषयत्वात्मैकात्म्यदर्शिनस्तद्रहितेऽधिकतरा इत्यर्थः । प्रकारान्तरेण ब्रह्मानन्दानुगममाह । आध्यायिकोऽधीत्यादिना । मनुष्यगन्धर्वानन्दस्योत्कृष्टत्वे निमित्तमाह । ते ह्यन्तर्धानादीति । प्रथमस्याकामहतश्रोत्रियस्य तात्पर्यमाह । प्रथममिति । यदि प्रथमपर्याये एवाकामहतो

उ० चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्म्मदेवानामानन्दः । ये कर्म्मणा देवानपि यन्ति । श्रोत्रियस्य चाकाम-

भा० मनुष्याः सन्तः कर्म्मविद्याविशेषाद्गन्धर्वत्वं प्राप्ताः मनुष्यगन्धर्वाः ते ह्यन्तर्धानादिशक्तिसम्पन्नाः सूक्ष्मकार्य्यकारणाः । तस्मात्प्रतिघाताल्पत्वं तेषां द्वन्द्वप्रतिघातशक्तिसाधनसम्पत्तिश्च । ततोऽप्रतिहन्यमानस्य प्रतिकारवतो मनुष्यगन्धर्वस्य स्याच्चित्तप्रसादः । तत्प्रसादविशेषात्सुखविशेषाभिव्यक्तिः । एवं पूर्व्वस्याः पूर्व्वस्या भूमेरुत्तरस्यामुत्तरस्यां भूमौ प्रसादविशेषतः शतगुणेनानन्दोत्कर्ष उपपद्यते । प्रथमन्त्वकामहतग्रहणं मनुष्यविषयभोगकामानभिहतस्य श्रोत्रियस्य मनुष्यानन्दाच्छतगुणेनानन्दोत्कर्षो मनुष्यगन्धर्वेण तुल्यो वक्तव्य इत्येवमर्थं साधु युवाध्यायक इति श्रोत्रियत्वावृजिनत्वे गृह्येते । ते ह्यविशिष्टे सर्व्वत्र । अकामहतत्वं तु विषयोत्कर्षापकर्षतः सुखोत्कर्षापकर्षाय विशिष्यते । अतोऽकामहतग्रहणं । तद्विशेषतः शतगुणात् सुखोत्कर्षोपलब्धेरकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थं । व्याख्यातमन्यत् । देवगन्धर्वा जातित

आ० ग्रहीत तदा तस्यैव सार्व्वभौमानन्देन तुल्य आनन्दः स्यात्तदा च श्लाघ्यो भवेत् । मानुषानन्दनिस्पृहो मानुषानन्दभागभागी चेति । ततो मानुषगन्धर्वानन्देन तुल्यमानन्दं तस्य दर्शयितुं प्रथमपर्य्याये तदग्रहणमित्यर्थः । अवृजिनत्वमपापत्वं यथोक्तकारित्वं तच्चसाधुपदाल्लभ्यत इत्यर्थः । देवास्त्रयस्त्रिंशत् । अष्टौ

उ॰ हतस्य । ते ये शतं कर्मदेवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकाम-

---

भा॰ एव । चिरलोका इति पितॄणां विशेषणं । चिरकाल-स्थायी लोको येषां पितॄणां ते चिरलोका इति । आजान इति देवलोकस्तस्मिन्नाजाने जाता आजानजा देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जाताः । कर्म-देवा ये वैदिकेन कर्मणाग्निहोत्रादिना केवलेन देवानपि यन्ति । देवा इति त्रयस्त्रिंशद्धविर्भुजः । इन्द्र-स्तेषां स्वामी तस्याचार्यो बृहस्पतिः । प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा । समष्टिव्यष्टिस्वरूपः संसारमण्ड-लव्यापी । यत्रैत आनन्दभेदा एकतां गच्छन्ति धर्मश्च तन्निमित्तो ज्ञानञ्च तद्विषयमकामहतत्वं च निरतिशयं यत्र स एष हिरण्यगर्भो ब्रह्मा तस्यैष आनन्दः । श्रोत्रियेणावृजिनेनाकामहतेन च सर्वतः प्रत्यक्षमुपलभ्यते । तस्मादेतानि त्रीणि साधनानीत्यव-

---

आ॰ वसवः । एकादश रुद्राः । द्वादशादित्याः । इन्द्रः प्रजापति-श्चेति ॥ यदर्थं मीमांसारब्धा तस्य निरतिशयानन्दस्य सिद्धौ वाक्यतात्पर्यं दर्शयितुमाह । तस्याकामहतस्येति ॥ तस्य ब्रह्मणो हिरण्यगर्भस्यानन्दस्तदुपासकप्रत्यक्षो यस्य मात्रा स एष परमा-नन्दः स्वाभाविक इति सम्बन्धः ॥ हिरण्यगर्भानन्दस्य मात्रत्वे श्रुत्यन्तरं प्रमाणयति । एतस्यैवेति ॥ न केवलं हिरण्यगर्भानन्द एव मात्रा यस्य प्रागुपन्यस्तः सार्वभौमाद्यानन्दः स एष यस्य मात्रा प्रविभक्ता नानात्वमापन्ना सती यत्र निरतिशयानन्देऽकामहत-ब्रह्मविद्विषये कैवल्ये एकतामेतीति योजना । अकामहतत्व-

उ॰ हतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते

---

भा॰ गम्यते । न च श्रोत्रियत्ववृजिनत्वे नियतेऽकामहतत्वं तूत्कृष्यत इति प्रकृष्टसाधनतावगम्यते । तस्य तस्याकामहतत्वप्रकर्षतोपलभ्यमानः श्रोत्रियप्रत्यक्षो ब्रह्मण आनन्दो यस्य परमानन्दस्य मात्रा एकदेशः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरात् । स एष आनन्दो यस्य मात्रा समुद्राम्भस इव विप्रुषः प्रविभक्ता यत्रैकतां गता स एष परमानन्दः स्वाभाविकोऽद्वैतत्वात् । आनन्दानन्दिनोश्चाविभागोऽत्र ॥ तदेतन्मीमांसाफलमुपसंह्रियते स यश्चायं पुरुष इति ॥ गुहायां निहितः परमे व्योम्न्याकाशादिकार्यं सृष्ट्वाऽन्नमयान्तं तदेवानुप्रविष्टः स य इति निर्दिश्यते । स एकोऽसावयं पुरुषे यश्चासावादित्ये यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टो यस्यैकदेशं ब्रह्मादीनि भूतानि सुखा-

---

था॰ त्वाभिधानाद्भेदप्राप्तिं निरस्यति । आनन्दानन्दिनश्चेति । प्रत्यक्षत्वाभिधानमज्ञानसंशयादिप्रतिबन्धाभावाभिप्रायं न तु विषयविषयिभावाभिप्रायं । यदा ह्येषोऽनात्म्ये उदरमन्तरं कुरुत इत्यादिना निषेधादित्यर्थः । मीमांसया निरतिशयानन्दं ब्रह्मास्मीति निर्द्धारितं । तस्याकामहतप्रत्यक्षत्वाभिधानादभेदसिद्धिः । न हि परानन्दः परस्य प्रत्यक्षो भवति । तस्मान्निरतिशयानन्दब्रह्मैकत्वं जीवस्य ब्रह्मविदाप्नोति परमित्युपक्रान्तं मीमांसया च सिद्धमुपसंह्रियत इत्यर्थः । आदित्यग्रहणस्याधिदैवकोपाधिषद्ध्यार्थस्याविवक्षितत्वं दर्शयितुं चोद्यमुद्भावयति । नन्विति । स एष

उ॰ ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरा-
नन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं

---

भा॰ ह्यंशमुपजीवन्ति स यश्चासावादित्ये इति स एकः । तं
मीमांसया च सिद्धमुपसंहरतो भिन्नप्रदेशस्थघटाकाशा-
काशैकत्ववत् । ननु तन्निर्देशे स यश्चायं पुरुष इत्यविशे-
षतोऽध्यात्मं न युक्तो निर्देशो यश्चायं दक्षिणेऽक्षन्निति तु
युक्तः प्रसिद्धत्वात् । न पराधिकारात् । परो ह्यात्मा-
त्राधिकृतोऽदृश्येऽनात्म्ये भीषास्माद्वातः पवते सैषानन्दस्य
मीमांसेति । न ह्यकस्मादप्रकृतो युक्तो निर्देष्टुं परमात्म-
विज्ञानं च विवक्षितं । तस्मात्पर एव निर्दिश्यते स
एक इति । नन्वानन्दस्य मीमांसा प्रकृता तस्या अपि
फलमुपसंहर्त्तव्यमभिन्नः स्वाभाविक आनन्दः परमात्मैव
न विषयविषयिसम्बन्धजनित इति । ननु तदनुरूप एवायं
निर्देशः स यश्चायं पुरुषे यश्चासावादित्ये स एक इति
भिन्नाधिकरणस्थविशेषोपमर्देन । नन्वेवमप्यादित्यविशेष-
णग्रहणमनर्थकं । नानर्थकं । उत्कर्षापकर्षापोहार्थत्वात् ।

---

आ॰ एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष इत्यादौ श्रुत्यन्तरे
मण्डलस्थदक्षिणाक्षिस्थयोरेकत्वस्य प्रसिद्धत्वादिहाप्यादित्यस्थेनैक्यनि-
र्देशे दक्षिणाक्षिग्रहणं युक्तमित्यर्थः । अध्यात्ममधिदैवतं च लिङ्गा-
त्मोपासनविवक्षायां तथा स्यादेव तदविवक्षितमित्याह । न पर
इति ॥ य एवं विद्वान् निरतिशयानन्दमुत्कृष्टोपाधौ प्रतिबिम्बितः
स एव निकृष्टोपाधौ शिरःपाण्यादिमति पुरुषे प्रतिबिम्बित इति
परमानन्दमपेक्ष्य समत्वं विशिष्टयोः स्वभावैक्यं विवक्षितमित्यर्थः ।

उ० बृहस्पतेरानन्दाः । स एक प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापते-

---

भा० द्वैतस्य हि यो मूर्त्तामूर्त्तलक्षणस्योत्कर्षः सवित्रभ्यन्तरगतः स चेत्पुरुषगतविशेषोपमर्द्देन परमानन्दमपेक्ष्य समो भवति न कश्चिदुत्कर्षोऽपकर्षो वा तां गतिं गतस्येत्यभयं प्रतिष्ठां विन्दत इत्युपपन्नं । अस्ति नास्तीत्यनुप्रश्नो व्याख्यातः । कार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनोपपत्तिभ्योऽस्त्येव तदाकाशादिकारणं ब्रह्मेति अपाकृतोऽनुप्रश्न एको द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ तत्र विद्वान् समश्नुते समश्नुत इत्यनुप्रश्नोऽन्त्यस्तदपाकरणायोच्यते । मध्यमो ऽनुप्रश्नो ऽन्त्यापकरणादेवापाकृत इति तदपाकरणाय न यत्यते । स यः कश्चिदेवं यथोक्तं ब्रह्मोत्सृज्योत्कर्षापकर्षमद्वैतं सत्यं ज्ञानमनन्तमस्मीति । एवं शब्दस्य प्रकृतपरामर्शार्थत्वात् । स किमस्माल्लोकात्प्रेत्य दृष्टादृष्टविषयसमुदायो ह्ययं लोकस्तस्मादस्माल्लोकात्प्रेत्य प्रत्यावृत्य निरपेक्षो भूत्वा एतं यथा व्याख्यातं अन्नमयमात्मान-

---

आ० तत्रानुवादपूर्वकमुत्तरग्रन्थमवतारयति । अस्ति नास्तीति । सन्दिग्धं सप्रयोजनं च विचारमर्हति । अत्र च कस्मिन्पक्षे कः दोषः को वा लाभ इत्याह । किन्तत इति । उभयत्रानुपपत्तिं संशयकारणमाह । यद्यन्यः स्यादिति । चोद्यमुखेन संशयव्यावृत्तिं प्रयोजनमाह । यद्युभयथेत्यादिना । एतदेव मम विचारारम्भकस्य सम्प्रश्नं कल्प्यते यन्नानेकत्ववादिनं त्वमाश्रित्य ब्रूषेऽप्रतिपन्नवस्तुवादित्वादनेकत्ववादिनोऽप्येकस्य वस्तुनः सम्मतत्वा-

उ॰ रानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रि-

भा॰ मुपसङ्क्रामति विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं न पश्यति सर्व्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः॥ ततोऽभ्यन्तरमेतं प्राणमयं सर्व्वान्नमयात्मस्थमविभक्तं। अथैतं मनोमयं विज्ञानमयमानन्दमयमात्मानमुपसंक्रामति। अथाऽदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। तत्रैतच्चिन्त्यं। कोऽयमेवंवित् कथं वा सङ्क्रामतीति। किं परस्मादात्मनोऽन्यः संक्रमणकर्त्ता प्रविभक्त उत स एवेति। किन्ततो यद्यन्यः स्याच्छ्रुतिविरोधः। तत्सृष्ट्वा तदेवानुप्राविशत्। अन्योऽसावन्योऽहमस्मीति। न स वेद। एकमेवाद्वितीयं तत्त्वमसीति। अथ स एवानन्दमयमात्मानमुपसङ्क्रामतीति कर्म्मकर्तृत्वानुपपत्तिः। परस्यैव च संसारित्वं पराभावो वा। यद्युभयथा प्राप्तो दोषो न परिहर्त्तुं शक्यत इति व्यर्था चिन्ता। अथान्यतरस्मिन् पक्षे दोषाप्राप्तिस्तृतीये वाऽदृष्टे पक्षे स एव शास्त्रार्थ इति व्यर्थैव चिन्ता न तन्निर्द्धारणार्थत्वादर्थवत्त्येव चिन्ता। सत्यं प्राप्तो दोषो न शक्यः परिहर्त्तुमन्यतरस्मिंस्तृतीये वा पक्षे ऽदृष्टेऽवधृते व्यर्था चिन्ता स्यान्न तु सोऽवधृत इति तदवधारणार्थत्वादर्थवत्त्येवैषा

---

आ॰ दनेकवस्तुवादिनश्च बहवः प्रतिपक्षाः सन्ति समेत्यर्थतोऽपि सा-न्याय्यमनेकत्वस्यान्योन्याश्रयादिदोषदुष्टत्वात्पूर्व्वपक्षनिराकरणेन सिद्धान्तोपपत्तेरित्यर्थः॥ विचारारम्भमुपपाद्य सिद्धान्तमुपक्रमते। स एव तु स्यादिति॥ औपाधिकभेदभिन्नोऽप्येवंवित्स्वतः पर एव स्यादित्यर्थः॥ अविद्याध्यारोपिता सद्व्यवहृतिरेव

उ॰ यस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चा-

---

भा॰ चिन्ता । सत्यमर्थवती चिन्ता । शास्त्रावधारणार्थत्वात् ।
चिन्तयसि च त्वं तन्तु निर्णेष्यसि किं न निर्णेतव्यमिति वेद-
वचनं न कथं तर्हि बहुप्रतिपक्षत्वात् एकत्ववादी त्वं वेदार्थ-
परत्वात् बहवो हि नानात्ववादिनो वेदबाह्यास्त्वत्प्रतिपक्षा
अतो ममाशङ्का न निर्णेष्यसीत्येतदेव मे स्वस्त्ययनं यन्मा-
मेकयोगिनमनेकयोगिबहुप्रतिपक्षमात्थ अतो जेष्यामि
सर्वानारभे च चिन्ताम् । स एव तु स्यात्तद्भावस्य विवक्षित-
त्वात् । तद्विज्ञानेन परमात्मभावो ह्यत्र विवक्षितो ब्रह्म-
विदाप्नोति परमिति । न ह्यन्यस्यान्यभावापत्तिरुपपद्यते ॥
ननु तस्यापि तद्भावापत्तिरनुपपन्नैव । नाऽविद्याकृताना-
त्मापोहार्थत्वात् ॥ या हि ब्रह्मविद्यया स्वात्मप्राप्तिरुपदि-
श्यते साऽविद्याकृतस्यान्नादिविशेषात्मन आत्मत्वेनाध्यारो-
पितस्यानात्मनोऽपोहार्था । कथमेवमर्थतावगम्यते विद्या-
मात्रोपदेशात् । विद्यायाश्च दृष्टं कार्यमविद्यानिवृत्ति-
स्तच्चेह विद्यामात्रमात्मप्राप्तौ साधनमुपदिश्यते मार्गवि-
ज्ञानोपदेशवदिति चेत्तदात्मत्वे विद्यामात्रसाधनोपदेशोऽ-
हेतुः । कस्मात् । देशान्तरप्राप्तौ मार्गविज्ञानोपदेशदर्शनात् ।

---

आ॰ ब्रह्मप्राप्तिर्विवक्षितेति फलवाक्यस्यैवमर्थता कथमवगम्यते न पुन-
रप्राप्तप्राप्तिरित्यर्थः । कथमिति । परिहरति । विद्यामा-
त्रेति । अन्यथानुपपत्तिं शङ्कते । मार्गेति । ननु स्वतो
ग्रामस्याभावेऽपि यथा मार्गज्ञानोपदेशः सार्थकस्तथा जीवस्य
स्वतो ब्रह्मत्वाभावेऽपि विद्योपदेशोऽभ्यासद्वारेण ब्रह्मप्राप्ति-

उ॰ सावादित्ये। स एकः। स य एवंवित्।

---

भा॰ न हि ग्राम एव गन्तेति चेत्। न वैधर्म्यात्। तत्र हि ग्रामविषयं विज्ञानं नोपदिश्यते तत्प्राप्तिमार्गविषयमेवोपदिश्यते विज्ञानं न तथेह ब्रह्मविज्ञानव्यतिरेकेण साधनान्तरविषयं विज्ञानमुपदिश्यते। उक्तकर्मादिसाधनापेक्षं ब्रह्मविज्ञानं परप्राप्तौ साधनमुपदिश्यत इति चेत्। नित्यत्वान्मोक्षस्येत्यादिना प्रत्युक्तत्वात्। श्रुतिश्च तत्सृष्ट्वा तदेवानुप्राविशदिति कार्यस्य तदात्मत्वं दर्शयति। अभयप्रतिष्ठोपपत्तेश्च। यदि हि विद्यावान् स्वात्मनोऽन्यन्न पश्यति ततोऽभयं प्रतिष्ठां विन्दत इति स्याद्भयहेतोः परस्यान्यस्याभावात्। अन्यस्य चाविद्याकृतत्वे विद्ययाऽवस्तुत्वदर्शनोपपत्तिस्तद्धि द्वितीयस्य चन्द्रस्यासत्त्वं यदतैमिरिकेण चक्षुष्मता

---

आ॰ हेतुत्वादित्यर्थः। त्वं ग्रामोऽसीति न सर्वोपदेशः। ब्रह्माभेदोपदेशः श्रूयतेऽत उपदेशवैषम्यान्न दृष्टान्तो युक्त इत्याह। न वैधर्म्यादिति॥ यदि विदुषः सकाशादन्य ईश्वरो भयहेतुर्नास्ति का तर्हि गतिर्व्यतिरिक्तेश्वरदर्शनस्येत्याशङ्क्याह। अन्यस्य चेति। अखिलभेदविशिष्टरूपेणेश्वरस्याविद्याकृतत्वे मिथ्यात्वे सति विद्यया तथावस्तुत्वदर्शनमुपपद्यते। ईश्वरो मम प्रशास्तेति मिथ्यैव तत्त्वतस्तु मम चैकात्म्यमेव परमार्थमिति विद्दृष्ट्या विशिष्टस्यासत्त्वमित्यर्थः। दृष्टान्तवैषम्यं शङ्कते। नैवमिति॥ यथा चन्द्रैकत्वदर्शनात् द्वितीयचन्द्रो न दृश्यते नैवं ब्रह्मविदा दृश्यते व्यतिरिक्तेश्वरः। प्रतिनियतप्रपञ्चावभासस्य भोजनादिप्रवृत्त्यनुपपत्त्या जीवन्मुक्तस्याप्यभ्युपगमात्प्रपञ्चनियमस्य चेश्वराधीनत्वाभ्युपगमादित्यर्थः। यद्यपि जागरे व्यतिरेकाभासदर्शनं विदुषस्तथापि न तद्भयकारणं नहि मायावी स्वविरचितव्याघ्राभासा-

उ॰ अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसं-

भा॰ न गृह्यते नैवं गृह्यत इति चेन्न सुषुप्तसमाहितयोरग्रहणात्।
सुषुप्तेऽग्रहणमत्यासक्तवदिति चेन्न। सर्वाग्रहणात्। जाग्र-
त्स्वप्नयोरन्यस्य ग्रहणात्सत्त्वमेवेति चेन्न अविद्याकृतत्वात्।
जाग्रत्स्वप्नयोर्यदन्यग्रहणं जाग्रत्स्वप्नयोस्तदविद्याकृतमवि-
द्याभावेऽभावात्। सुषुप्तेऽग्रहणमप्यविद्याकृतमिति चेन्न।
स्वाभाविकत्वात्। द्रव्यस्य हि तत्त्वमविक्रिया परानपेक्ष-
त्वात्। विक्रियावत्त्वं परापेक्षत्वात्। न हि कारकापेक्षं
वस्तुनस्तत्त्वं सतो विशेषः कारकापेक्षो विशेषश्च विक्रिया।
जाग्रत्स्वप्नयोश्च ग्रहणं विशेषः। यद्धि यस्यान्यापेक्षं स्वरूपं
तत्तस्य तत्त्वं यदन्यापेक्षं न तत्तत्त्वं। अन्याभावेऽभावात्।
तस्मात्स्वाभाविकत्वाज्जाग्रत्स्वप्नवन्न सुषुप्ते विशेषः। येषां

---

आ॰ द्विधेति। अविदुषोऽपि व्यतिरेकदर्शनं न संप्रतिपन्नमित्याह। न
गृह्यत इति। सुषुप्ते व्यतिरेकाग्रहणमसत्त्वसाधकं न भवतीत्याह। सुषुप्त
इति। यथा इषुकार इष्वासक्तमनास्तया तद्व्यतिरिक्तं विद्यमान-
मपि न पश्यति तथा सुषुप्तेऽपि निरवधया सुखासक्ततया सदपि
द्वितीयं न पश्यति नत्वभावादित्यर्थः। अन्यासक्तस्य तद्व्यतिरिक्ता-
दर्शनेऽपि तद्दर्शनमेवास्ति सुषुप्तेऽपि न किंचिदवासिषमिति
प्रत्ययात्सुखस्याप्यात्मतादात्म्यादज्ञानस्य च व्यतिरिक्तस्यानिर्वच-
नादतस्तात्त्विकद्वितीयाभावादेवाग्रहणमित्याह। न सर्वाग्रह-
णादिति। सुषुप्ते चेदनुपलम्भादसत्त्वं तर्हि जाग्रत्स्वप्नयोरुपल-
म्भाद्द्वैतस्य सत्त्वं किं न स्यादित्याह। जाग्रदिति। अनात्मादावा-
त्मत्वादिबुद्धिरविद्या तद्भावे एव द्वैतोपलम्भान्नोपलम्भमात्रं
सत्त्वसाधकमन्यथा शुक्तिरूप्यादेरपि सत्त्वप्रसङ्गादित्याह। नावि-
द्येति। पूर्ववदाह। सुषुप्तेति। सुषुप्ते द्वितीयस्याग्रहणमपि जाग्र-

उ॰ क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति ।

---

भा॰ पुनरीश्वरोऽन्य आत्मनः कार्य्यञ्चान्यत्तेषां भयानिवृत्ति-
र्भयस्यान्यनिमित्तत्वात् सतश्चान्यस्यात्महानानुपपत्तिः ।
न चासत आत्मलाभः । सापेक्षस्यान्यस्य भयहेतुत्वमिति
चेन्न। तस्यापि तुल्यत्वात्। यद्धर्म्माद्यनुसहायीभूतं नित्य-
मनित्यं वा निमित्तमपेक्ष्यान्यद्भयकारणं स्यात्तस्यापि
तथाभूतस्यात्महानाभावाद्भयानिवृत्तिरात्महाने वा
सदसतोरितरेतरापत्तौ सर्व्वत्रानाश्वास एवैकत्वपक्षे पुनः
सन्निमित्तस्य संसारस्याऽविद्याकल्पितत्वाददोषः । तैमि-
रिकदृष्टस्य हि द्वितीयचन्द्रस्य नात्मलाभो नाशो वास्ति।
विद्याविद्ययोस्तद्धर्म्मत्वमिति चेन्न। प्रत्यक्षत्वात्। विवेकावि-
वेकौ रूपादिवत् प्रत्यक्षावुपलभ्येतेऽन्तःकरणस्थौ । न हि

---

आ॰ रूपाविद्याकृतं न तु भेदाभावनिबन्धनमतो यदुक्तं सुषुप्ते सर्व्वा-
त्मकब्रह्मभूतो जीवः स्वव्यतिरिक्ताभावादेव न पश्यतीति तद-
सदित्यर्थः । ननोऽपि द्वितीयस्याविद्यावशादप्रत्यक्षमिति कोऽर्थः
किं प्रत्यक्षप्रागभावो जायते उताप्रकाशारोपः किं वाऽप्रत्यक्षा-
कारादाविद्यतस्वरूपावस्थानं । नाद्यः । प्रागभावस्यानादित्वाभ्युपग-
मात् । न द्वितीयः । परैर्द्वितीयस्याः स्वप्रकाशत्वास्वाभाव्याभ्युपगमेना-
प्रकाशारोपानभ्युपगमात् प्रकाशारोपे च सर्व्वस्य स्वप्रकाशब्रह्मा-
त्मतया अभ्युपगन्तव्यत्वेनास्मत्समीहितसिद्धिप्रसङ्गात् । न तृतीय
इत्याह । न स्वाभाविकत्वादिति । अविद्यतस्वरूपावस्थानं नावि-
द्याकार्य्यमनागन्तुकत्वादित्यर्थः । एतत् स्फुटयति । द्रव्यस्य द्रौव्या-
दिना । सम्भावं द्रव्यमुच्यते स्वातन्त्र्यसिद्ध्यभिप्रायेण न वैशेषिका-
भिप्रायेण क्रियावद्गुणवत्समवायिकारणं द्रव्यं नानाभावादिति
तदर्थः । अविक्रियेति विक्रियाभावोपलक्ष्यं स्वरूपमनपेक्षसिद्धि-

उ॰ एतं मनोमयमात्मानमुपसङ्क्रामति। एतं विज्ञा-

---

भा॰ रूपस्य प्रत्ययस्य मनो द्रष्टृधर्मत्वं। अविद्या च स्वानुभवेन रूप्यते मूढोऽहमविविक्तं मम विज्ञानमिति तथा विद्या-विवेकोऽनुभूयते। उपदिशन्ति चान्येभ्य आत्मनो विद्यां बुद्धा। तथा चान्येऽवधारयन्ति तस्मान्नामरूपपक्षस्यैव विद्याविद्ये नामरूपे च नात्मधर्मौ नामरूपयोर्निर्वहिते यदन्तरा तद्ब्रह्मेति श्रुत्यन्तरात्। ते च पुनर्नामरूपे सवितर्यहोरात्रे इव कल्पिते न परमार्थतो विद्यमानेऽभेदे एतमानन्दमयमात्मानमुपसङ्क्रामतीति कर्मकर्तृत्वानुपप-त्तिरिति चेन्न। विज्ञानमात्रत्वात्सङ्क्रमणस्य। न जलूकादि-वत्सङ्क्रमणमिहोपदिश्यते किं तर्हि विज्ञानमात्रं सङ्क्रमण-श्रुतेरर्थः। ननु मुख्यमेव सङ्क्रमणं श्रूयते उपसङ्क्रामतीति

---

आ॰ स्वादित्यर्थः। प्रज्ञादिविक्रिया न स्वाभाविकी परापेक्षत्वात् स्फटिकलौहित्यवदित्यर्थः। यदुक्तमपेक्षासिद्धत्वादविक्रियत्व-मिति तत् स्फुटयति। यतोति। एवं सम्मते चित्तमात्रव्यतिरिक्ते-श्वरस्य भयहेतोरभावादभयं विदुषः सम्भवतीत्युपपाद्य द्वैतिपक्षे तदसम्भवमाह। येषामिति। सतोऽन्यस्य स्वरूपे स्थिते नष्टे वा नाशङ्को पायाभावादवस्थानाच्च। तद्वंसत एव भयस्योत्पादेऽभ-यप्राप्तिर्भविष्यतीत्याशङ्क्याह। तथापि त इति। व्यतिरिक्तेश्वरस्य सत्तामात्रेण न भयहेतुत्वं किन्तु प्राणिकृतधर्माद्यपेक्षस्य तु तदभावादभयं भविष्यतीत्याशङ्क्य नैतत्सांख्येन वाच्यं। धर्मा-देरपि सत्त्वेनात्यन्ताभावानङ्गीकारान्नैयायिकादिमतेऽपि सति चेतसि कार्यात्यन्ताभावस्य दुरवधारणत्वाच्चेदापि वाच्यमित्याह। न तस्यापीति। किञ्च सर्वेदृशमभ्यममाप्यवे धर्मादिसंहितात्म-न्यपि च। प्रमाणत्वप्रामाणिकभावनैयत्यं सतोऽस्वत्वमपि कस्यापि

उ॰ न्नमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमा-

---

भा॰ चेन्न । अन्नमयेऽदर्शनात् । न ह्यन्नमयमुपसङ्क्रामतो बाह्या-
दस्माज्जलूकावत्सङ्क्रमणं दृश्यतेऽन्यथा वा ॥ मनोमयस्य
बहिर्निर्गतस्य विज्ञानमयस्य वा पुनः प्रत्यावृत्त्यात्मसङ्क्रम-
णमिति चेन्न । स्वात्मनि क्रियाविरोधात् । अन्योऽन्नमयमुप-
सङ्क्रामतीति प्रकृत्य मनोमयो विज्ञानमयो वा स्वात्मान-
मेवोपसङ्क्रामतीति विरोधः स्यात् । तथा नानन्दमय-
स्यात्मसङ्क्रमणमुपपद्यते । तस्मान्न प्राप्तिः सङ्क्रमणं नाप्यन्न-
मयादीनामन्यतमकर्तृकं पारिशेष्यादन्नमयाद्यानन्द-
मयान्तात्मव्यतिरिक्तकर्तृकं ज्ञानमात्रं च सङ्क्रमणमुपपद्यते
ज्ञानमात्रत्वे चानन्दमयान्तस्यैव सर्वान्तरस्याकाशाद्य-
न्नमयान्तं कार्यं सृष्ट्वाऽनुप्रविष्टस्य हृदयगुहाभिसम्बन्धाद-
न्नमयादिष्वनात्मस्वात्मविभ्रमासङ्क्रमणात्मविवेकज्ञानोत्प-

---

आ॰ मते न घटत इत्याह । सदसतोरिति ॥ स्वमतं निगमयति ।
एवमपत्य इति ॥ अविद्याकल्पितं भयं विद्यया निवर्त्तत
इति वदतो विद्याविद्ययोरात्मधर्मत्वमिष्टं ततो धर्मोत्पाद-
विनाशयोर्विकारित्वमनित्यत्वं च प्रसज्येतेति शङ्कते । विद्या-
विद्ययोरिति ॥ कल्पितयोर्विद्याविद्ययोरात्मनि भयाभयहेतु-
त्वसम्भवान्नात्मधर्मत्वे प्रमाणमस्ति प्रत्युत वेद्यत्वाद्रूपादिवदात्म-
धर्मत्वं नास्तीत्यनुमातुं शक्यत इत्याह । न प्रत्यक्षत्वादिति ॥
चिन्मात्राश्रयानादिरनिर्वाच्याविद्यान्तःकरणरूपेण परिणमते
तथान्तःकरणं तामससात्त्विकावस्थाभेदेन भ्रान्तिसम्यग्ज्ञाना-
कारेण परिणमते तस्मिन् प्रतिबिम्बितश्चिद्धातुः स्वोपाधिधर्मेणैव
भ्रान्तः सम्यग्दर्शीति च व्यवह्रियते न तत्त्वतो विद्याविद्या-
वत्त्वमित्याह । तेन पुनरिति ॥ उक्तन्यायेन ब्रह्मवित्तो

उ॰ त्मानमुपसङ्क्रामति तदप्येष श्लोको भवति ॥
इत्यष्टमोऽनुवाकः ॥ ८ ॥

---

भा॰ द्या विनश्यति तदेतस्मिन्नविद्याविभ्रमनाशे सङ्क्रमण-
शब्द उपचर्यते न ह्यन्यथा सर्वगतस्यात्मनः सङ्क्र-
मणमुपपद्यते वस्त्वन्तराभावाच्च। न च स्वात्मन एव
सङ्क्रमणं। न हि जलूकात्मानमेव सङ्क्रामति। तस्मात्सत्यं
ज्ञानमनन्तं ब्रह्मेति यथोक्तलक्षणात्मप्रतिपत्त्यर्थमेव बहुभ-
वनसर्गप्रवेशरसलाभाभयसङ्क्रमणादिपरिकल्प्यते ब्रह्मणि
संव्यवहारादिविषये न तु परमार्थतो निर्विकल्पे ब्रह्मणि
कश्चिदपि विकल्प उपपद्यते। तमेतं निर्विकल्पमात्मानमेवं
क्रमेणोपसङ्क्रम्य विदित्वा न बिभेति कुतश्चनाभयं प्रतिष्ठां
विन्दत इत्येतस्मिन्नर्थेऽप्येष श्लोको भवति। सर्वस्यैवास्य प्रक-

---

आ॰ ब्रह्माभिन्न इत्युक्तं। तत्र परोक्तमुद्भाव्य निरस्यति। अभेद-
इत्यादिना। आनन्दमयः परमात्मा यत्र तत्र प्रवेशः सङ्क्रमणं
किन्तु अविषयब्रह्मात्मताज्ञानेनानन्दमयस्यात्मतया भ्रान्तिप्रदर्शि-
तस्यातिक्रमणं बाधोऽत्र विवक्षित इत्यर्थः। अन्यथा चेति।
नीडे पक्षिप्रवेशवदित्यर्थः। यद्यप्यन्नमये मुख्यं सङ्क्रमणं न सम्भ-
वति तथापि मनोबुद्ध्योर्बहिर्विषये प्रवृत्तयोस्ततो व्यावृत्य स्वरूपे-
ऽवस्थानं सङ्क्रमणं दृष्टं तथा दुःखिन आनन्दमयस्य स्वरूपेऽव-
स्थानं सङ्क्रमणं भविष्यतीत्याह। मनोमयस्येति। स्वरूपावस्था-
नस्यानागन्तुकत्वात्क्रमविरोधाच्च न तन्मुख्यसङ्क्रमणमित्याह।
नेति। आत्मनात्मेति वा सङ्क्रमणस्य किं फलमित्यत आह। आत्म-
नात्मेति चेति। मुख्यासम्भवे गौणार्थग्रहणं न्याय्यमेवातोऽधिष्ठान-
याथात्म्यप्रतिपत्तिविशिष्टसाध्यस्तस्य बाधनमेव सङ्क्रमणं फलती-
ति भावः। इतश्च तन्मुख्यं सङ्क्रमणमन्वेषणीयमित्याह। सर्व-

उ॰ यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्च-
नेति । तꣳ ह वाव न तपति । किमहꣳ
साधु नाकरवं । किमहं पापमकरवमिति । स
य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे
ह्येवैष एते आत्मानꣳ स्पृणुते । य एवं वेद ।

---

भा॰ एतस्यानन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशनायैष मन्त्रो भवति ॥
इत्यष्टमोऽनुवाकः ॥ ८ ॥

यतो यस्मान्निर्विकल्पादद्वयानन्दादा
त्मनो वाचोऽभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि
वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि ब्रह्मणि प्रयोक्तृभिः प्रका-
शनाय प्रयुज्यमानानि अप्राप्याप्रकाश्यैव निवर्तन्ते । स्वसा-
मर्थ्याद्धीयन्ते । मन इति प्रत्ययो विज्ञानं । तच्च यत्राऽभि-
धानं प्रवृत्तमतीन्द्रियाद्यर्थे तदर्थे च प्रवर्तते प्रकाशनाय ।
यत्र च विज्ञानं तत्र वाचः प्रवृत्तिः । तस्मात्सहैव वाङ्म-
नसयोरभिधानप्रत्यययोः प्रवृत्तिः सर्वत्र । तस्माद्ब्रह्म-
प्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचो
यस्मादप्रत्ययविषयादनभिधेयाददृश्यादिविशेषणात्सहैव

---

भा॰ न्तराभावार्थेति । सहशब्दस्यौपचारिकत्वं व्याख्याय प्रकरणस्य
ब्रह्मात्मत्वमुपसंहारश्लोकेनाह । तस्मादिति । इत्यष्टमोऽनु-
वाकः ॥ ८ ॥

साध्वसाधुनी न स्तः प्रकाशिते येषि सत्प्रकाशमात्रमात्मतत्त्वमेव
सर्वैः स्वरूपं यतोऽविविक्तं पदार्थानर्थहेतुत्वं नामविशेषरूपं

उ॰ इत्युपनिषत् ॥ इति नवमोऽनुवाकः ॥ ९ ॥
ब्रह्मविदन्नमयमिदमेकविꣳशतिरन्नादन्नरसमया-
दन्नात्प्राणो व्यानोऽपान आकाशः पृथिवी
पुच्छꣳ षड्विꣳशतिः प्राणं यजुर्ऋक्सामादेशो-
ऽथर्वाङ्गिरसः पुच्छं द्वाविꣳशतिर्यतश्श्रद्धर्तꣳ सत्यं
योगो महोऽष्टादशविज्ञानं प्रियं मोदः प्रमोद

भा॰ मनसा विज्ञानेन सर्वप्रकाशनसमर्थेन निवर्तन्ते । तं ब्रह्मण
आनन्दं श्रोत्रियस्याऽवृजिनस्याऽकामहतस्य सर्वैषणा-
विनिर्मुक्तस्यात्मभूतं विषयविषयिसम्बन्धविनिर्मुक्तं स्वाभा-
विकं नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान् यथोक्तेन
विधिना न बिभेति कुतश्चन निमित्ताभावात् । नहि
तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति वस्तु भिन्नं । यतो बिभेति
अविद्यया यदोदरमन्तरं कुरुते । अथ तस्य भयं भवतीति
ह्युक्तं । विदुषश्चाविद्याकार्यस्य तैमिरिकदृष्टद्वितीयच-
न्द्रवन्नाशाद्भयनिमित्तस्य न बिभेति कुतश्चनेति युज्यते ।
मनोमये चोदाहृतो मन्त्रो मनसो ब्रह्मविज्ञानसाधनत्वात् ।
तत्र ब्रह्मत्वमध्यारोप्य तत्स्तुत्यर्थं न बिभेति कदाचनेति
भयमात्रं प्रतिषिद्धमिहाद्वैतविषये न बिभेति कुतश्चनेति
भयनिमित्तमेव प्रतिषिध्यते । नन्वस्ति भयनिमित्तं साध्व-

आ॰ तत्र वस्तु सत्प्रकाशात्मत्वे नासत्त्वादप्रकाशमानत्वाच्चेत्यभिप्रेत्याह ।
स्वेन विशेषरूपेणेति । यात्मैनाविद्यया साध्वसाधुरूपेण प्रति-
पन्न आसीत् इदानीन्तु ते साध्वसाधुनी यथार्थहेतू अभूवन्नुक्ते

उ॰ आनन्दो ब्रह्म पुच्छं द्वाविंशतिरसन्नेवाथाष्टा-
विंशतिरसत्योऽश भीषास्मान्मानुषो मनुष्यग-
न्धर्वाणां देवगन्धर्वाणां पितॄणां चिरलोकलोका-
नामाजानजानां कर्मदेवानां ये कर्मणा देवा-
नामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स यश्च
सङ्क्रामत्येकपञ्चाशद्यतः कुतश्च नैतमेकादश नव ॥

---

भा॰ करणं पापक्रिया च। नैवं कथमित्युच्यते एतं यथोक्तमेवंविदं
ह वावेत्यवधारणार्थौ। न तपति नोद्वेजयति नात्यन्तं
तापयति। कथं पुनः साधुकरणं पापक्रिया च न तपतीत्यु-
च्यते। किं कस्मात्साधु शोभनं कर्म नाकरवं न कृतवानस्मीति
पश्चात्तापो भवत्यासन्ने मरणकाले। तथा किं कस्मात्पापं
प्रतिषिद्धं कर्माकरवं कृतवानस्मीति च नरकपतनादि-
दुःखभयात्तापो भवति। न एते साधुकरणपापक्रिये एव-
मेनं न तपतो यथाऽविद्वांसं तपतः। कस्मात्पुनर्विद्वांसं न
तपत इत्युच्यते। स य एवंविद्वानेते साध्वसाधुनी तापहेतू
इत्यात्मानं स्पृणुते प्रीणयति बलयति वा परमात्मभा-
वेनोभे पश्यतीत्यर्थः। उभे पुण्यपापे हि यस्मादेवमेष
विद्वानेते आत्मानमात्मरूपेणैव पुण्यपापे स्वेन शेषरूपेण

---

व्या॰ आत्मैवेति ज्ञानेन स्वात्मानं साध्वसाधुकरणेन प्रीणयत्येव
लोकदृष्ट्या निष्पाद्यमाने पुण्यपापे दृष्ट्वा। दृश्यते च विद्वान् न
बिभेतीत्याह। स्पृणुत एवेति ॥ इति नवमोऽनुवाकः ॥ ९ ॥ इति
श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगव-

उ० सह नाववतु । माविद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः । ब्रह्मविद्य एवं वेदेत्युपनिषत् ॥ इति ब्रह्मानन्दवल्ली ॥ ॥ ॐ तत्सत् ॥

हरिः ॐ ॥ सहनाववतु । सह नौ भुनक्तु । सह वीर्य्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

---

भा० शून्ये कृत्वा आत्मानं स्पृणुत एव। को य एवं वेद यथोक्तमद्वैतमानन्दं ब्रह्म वेद तस्यात्मभावेन दृष्टे पुण्यपापे निर्वीर्य्ये तापके जन्मारम्भके न भवत इतीयमेवं यथोक्तास्यां वल्ल्यां ब्रह्मविद्योपनिषत्सर्व्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमित्यर्थः। परं श्रेयोऽस्यां निषण्णमिति ॥ इति नवमोऽनुवाकः ॥९॥ इति श्रीपरमहंसपरिव्राजकाचार्य्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये ब्रह्मानन्दवल्ली नाम द्वितीयोऽध्यायः ॥२॥

ॐ सत्यं ज्ञानमनन्तं ब्रह्म आकाशादिकार्य्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टं विशेषवदिवोपलभ्यमानं यस्मात्तस्मात्सर्व्वकार्य्यविलक्षणमदृश्यादिधर्म्मकमेवानन्दं तदेवाहमिति विजानीयादनुप्रवेशस्य तदर्थत्वात् तस्यैवं विजानतः

---

आ० दानन्दज्ञानविरचिते तैत्तिरीयोपनिषद्भाष्यटीकायां ब्रह्मानन्दवल्ली नाम द्वितीयोऽध्यायः ॥२॥ ॐ तत्सत् ॥

वृत्तानुवादपूर्व्वकमुत्तरवल्लीसम्बन्धमाह। सत्यं ज्ञानमित्यादिना। तत्र इति पदार्थविवरणं वाक्यार्थज्ञानसाधनमित्यर्थः।

उ० भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते।

---

भा० शुभाशुभे कर्मणी जन्मान्तरारम्भके न भवत इत्येवमानन्दवल्ल्यां विवेचितोऽर्थः। परिसमाप्ता च ब्रह्मविद्या। अतः परं ब्रह्मविद्यासाधनं तपो वक्तव्यमन्नमयादिविषयाणि चोपासनान्युक्तानीत्यतः पूर्ववच्छान्तिपाठपूर्वकमिदमारभ्यते। आख्यायिकाविद्यास्तुतये प्रियाय पुत्राय पित्रोक्तेति भृगुर्वै वारुणिः। वैशब्दः प्रसिद्धानुस्मारको भृगुरित्येवंनामा प्रसिद्धोऽनुस्मार्यते। वारुणिर्वरुणस्यापत्यं वारुणिर्वरुणं पितरं ब्रह्म विजिज्ञासुरुपससारोपगतवान् अधीहि भगवो ब्रह्मेत्यनेन मन्त्रेण। अधीहि अध्यापय कथय। स च पिता विधिवदुपसन्नाय तस्मै पुत्रायैतद्वचनं प्रोवाचान्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। अन्नं शरीरं तदभ्यन्तरञ्च प्राणमनन्तरमुपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचमित्येतानि ब्रह्मोपलब्धौ द्वाराण्युक्तवान्। उक्त्वा च

---

व्या० अधीहीत्यध्यापय स्मारय। इक् स्मरणे इति धातुपाठादित्यर्थः। ब्रह्मोपलब्धाविति लक्ष्यलक्षणविवेकाय द्वाराणि शरीरादिचेष्टाऽन्यथानुपपत्त्या हि साक्षिभूतचिद्धातुर्विविच्यत इति भावः। न केवलमर्थज्ञानं वाक्यार्थज्ञानसाधनं किन्तु तत्पदार्थज्ञानमपीत्यभिप्रेत्य तदर्थस्य ब्रह्मणो लक्षणमुक्तवानित्यर्थः। यावच्छेषो-

उ० येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति प्रथमोऽनुवाकः ॥ १ ॥
अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्वि-

---

भा० द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच । ब्रह्मणो लक्षणं किंतत् यतो यस्माद्वै इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते । येन च जातानि जीवन्ति प्राणान्धारयन्ति वर्धन्ते । विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहाति भूतदेवं तद्ब्रह्मणो लक्षणं । तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व । यदेवं लक्षणं ब्रह्म तदन्नादिद्वारेण प्रतिपद्यस्वेत्यर्थः । श्रुत्यन्तरञ्च प्राणस्य प्राण उत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो ये विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यमिति । ब्रह्मोपलब्धौ द्वाराण्येतानि दर्शयति । स भृगुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणं च श्रुत्वा पितुस्तप एव ब्रह्मोपलब्धिसाधनत्वेनाऽतप्यत तप्तवान् । कुतः पुनरनुप-

---

आ० क्षेरिति पदार्थोपलक्षणस्यैवाभिधानादखण्डवाक्यार्थस्याप्रतिपादनात् पदार्थभेदध्यानाच्च पुरुषार्थसम्भवद्दूरमन्तरं कृतम् इति निन्दितत्वादतो वाक्यार्थावगतिपर्यन्तं तात्पर्येण लक्ष्यपदार्थविवरणमात्ध्यानुष्ठितवानित्यर्थः । स तपस्तप्त्वेति कृत्स्नं पित्रोक्तं लक्षणं परिपूर्णं भवत्वित्यपेक्षया चेतसा पर्यालोच्यान्नं ब्रह्मेति व्यजानात् । अद्यते भुज्यते सर्वैरिति सर्वप्रतिपत्तिसा-

उ० मानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ द्वितीयोऽनुवाकः॥ २॥

---

भा० दिष्टस्यैव तपसः साधनत्वप्रतिपत्तिर्भृगोः सावशेषोक्तेरन्नादिब्रह्मणः प्रतिपत्तौ द्वारं लक्षणं च यतो वा इमानि भूतानीत्युक्तवान्। सावशेषं हि तत्स्वरूपाद्ब्रह्मणो निर्देशात्। अन्यथा हि स्वरूपेणैव ब्रह्म निर्देष्टव्यं जिज्ञासवे पुत्रायेदमित्थंरूपं ब्रह्मेति। न चैवं निरदिशत् किन्तर्हि सावशेषमेवोक्तवान्। अतोऽवगम्यते नूनं साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञानं प्रतीति। तपोविशेषप्रतिपत्तिस्तु सर्वसाधकतमत्वात्सर्वेषां हि नियतसाध्यविषयाणां साधनानां तप एव साधकतमम्। साधनमिति हि प्रसिद्धं लोके। तस्मात् पित्रानुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः। तच्च तपो बाह्यान्तःकरणसमाधानं तद्द्वारकत्वात् ब्रह्मप्रतिपत्तेः। मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तपः तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यत इति स्मृतेः।

---

आ० धारयं स्थूलदेहकारणं भूतपञ्चकं विराट्सञ्ज्ञकमन्नशब्देनोच्यते। तस्य स्थूलभौतिककारणत्वात्। यतो वा इमानीति लक्षणस्य तत्र योजयितुं शक्यत्वाद्ब्रह्मेति प्रतिपन्नवानित्यर्थः।

उ० प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ तृतीयोऽनुवाकः॥ ३॥

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि

भा० स च तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानाद्विज्ञातवान्। तद्धि यथोक्तलक्षणोपेतं। कथं। अन्नाद्ध्येव खल्विमानि भूतानि जायन्तेऽन्नेन जातानि जीवन्ति अन्नं प्रयन्ति अभिसंविशन्तीति। तस्माद्युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः। स एवं तपस्तप्त्वाऽन्नं ब्रह्मेति विज्ञाय लक्षणेनोपपत्त्या च पुनरेव संशयमापन्नो वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। कः पुनः संशयहेतुरस्येत्युच्यते। अन्नस्योत्पत्तिदर्शनात्तपसः पुनः पुनरुपदेशः साधनातिशयत्वावधारणार्थः। यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति यावच्च जिज्ञासा न

पा० विराज उत्पत्तिदर्शनाच्छ्रुतिस्मृतिषु लक्षणं तत्र सम्पूर्णं न भवतीति पुनस्तपोऽतप्यत विचार्य च तत्कारणं क्रियाशक्तिविषयतया प्राणशब्दलक्ष्यं हिरण्यगर्भं सर्वस्याध्यवसायशक्तिविशिष्टतया च मनोविज्ञानशब्दलक्ष्यं ब्रह्मेति व्यजानात्तस्यापि कार्यत्वाल्लक्षणं न भवतीति विचार्य तत्कारणं

उ॰ जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ चतुर्थोऽनुवाकः॥ ४॥

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ पञ्चमोऽनुवाकः॥ ५॥

---

भा॰ निवर्त्तते तावत्तप एव ते साधनं। तपसा एव ब्रह्म जिज्ञासस्वेत्यर्थः। ऋज्वन्यत्। एवं तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्षणमपश्यञ्छनैः शनैरनुप्रविश्यान्तरतममानन्दं ब्रह्म विज्ञातवांस्तपसा एव साधनेन भृगुस्तस्माद्ब्रह्मविजिज्ञासुना बाह्यान्तःकरणसमाधानलक्षणं परमं तपः साधनमनुष्ठेयमिति प्रकरणार्थः॥

---

व्या॰ स्वानन्देन निश्चित्य सर्वैः प्रार्थ्यमानतयानन्दशब्दवाच्यं मायाविशिष्टं ब्रह्मेति विज्ञाय विशिष्टस्याविशिष्टान्तरात्मत्वानुपपत्तेः कारणत्वोपलक्षितं विशुद्धानन्दं ब्रह्मेति विज्ञातवानित्यर्थः।

उ॰ आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता । स य एवं वेद प्रतितिष्ठति ।

---

भा॰ अधुनाऽऽख्यायिकातोऽपसृत्य श्रुतिः स्वेन वचनेनाख्यायिकानिर्वर्त्यमर्थमाचष्टे । सा एषा भार्गवी भृगुणा विदिता वरुणेन प्रोक्ता वारुणी विद्या परमे व्योमन् हृदयाकाशगुहायां परमानन्देऽद्वैते प्रतिष्ठिता परिसमाप्ता अन्नमयादात्मनोऽधिप्रवृत्ता । एवमन्योऽपि तपसा एव साधनेन । अनेनैव क्रमेणानुप्रविश्यानन्दं ब्रह्म वेद । स एवं विद्याप्रतिष्ठानात्प्रतितिष्ठत्यानन्दे परमे ब्रह्मणि ब्रह्मैव भवतीत्यर्थः । दृष्टञ्च फलं तस्योच्यते । अन्नवान्प्रभूतमन्नमस्य विद्यत इत्यन्नवान् । सत्तामात्रेण तु सर्वो ह्यन्नवानिति विद्याया विशेषो न स्यात् । एवमन्नमत्तीत्यन्नादो दीप्ताग्निर्भवतीत्यर्थः । महान् भवति । केन महत्त्वमित्यत आह । प्रजया

---

आ॰ प्रभूतत्वविशेषणं न श्रुतं कथं निश्चीयत इत्याशङ्क्याह । सत्तामात्रेणेति । अन्न सत्तामात्रे विवक्षिते श्वसूकरादेरपि शरीरस्थित्यर्थान्नसत्त्वेनान्नवत्त्वात् विद्यायाः फलविशेषो नोक्तः स्यादतस्तद्व्यावृत्त्यर्थं प्रभूतत्वविशेषणं निश्चितमित्यर्थः । यस्येश्वरस्यानुग्रहात् अविदुषामप्यन्नादिसमृद्धिर्दृश्यते सोऽस्मीत्युपासितुरभि-त्युक्तत्वात् । किमुत तदात्मत्वं साक्षादनुभवत इति अन्नं प्राणं न निन्द्यात् यदृच्छयोपपन्नं । एतच्च दृष्टफलं ब्रह्मविदो जीव-

उ• अन्नवानन्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ षष्ठोऽनुवाकः ॥ ६ ॥

अन्नं न निन्द्यात् । तद्व्रतं । प्राणो वा अन्नं । शरीर-

---

भा• प्रजादिना पशुभिर्गवाश्वादिभिर्ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तेन तेजसा महान् भवति कीर्त्या ख्यात्या शुभप्रचारनिमित्तया महान् भवतीत्यर्थः । किञ्चान्नेन द्वारभूतेन ब्रह्मविज्ञानं यस्मात्तस्माद्गुरुमिवान्नं न निन्द्यात्तदेतद्व्रतं ब्रह्मविदो व्रतमुपदिश्यते व्रतोपदेशोऽन्नस्तुतये स्तुतिभाक्त्वं चान्नस्य ब्रह्मोपलब्ध्युपायत्वात् । प्राणो वाऽन्नं । शरीरान्तर्भावात्प्राणस्य । यद्यस्यान्तः प्रतिष्ठितं भवति तत्तस्यान्नं भवतीति ॥

शरीरे च प्राणः प्रतिष्ठितस्तस्मात्प्राणोऽन्नं शरीरम-

---

व्या• न्मुक्तस्यापि विद्यालेशवशाद्द्वैतावभासं पश्यतो मानुपमनं यस्येश्वरस्यानुग्रहादविदुषामपि धर्मादिसमृद्धिर्दृश्यते किमुत तदात्मनस्त्वं । अन्नमपकृष्टं प्राप्तं न निन्द्यात् यदृच्छयोपपन्नं । यदेच्छिदमृतावहमिमुक्तत्वात् । ब्रह्मविदो नियमाभिधानं साधकस्यानुष्ठानार्थं । एवं वाक्यार्थध्याने ब्रह्मपदार्थानुसन्धानं मुख्यं साधनं तत्फलं चोपसंहृत्याधुना विचारासमर्थस्य मन्दाधिकारिणोऽन्नान्नादरूपेण ब्रह्मोपासनं गौणं साधनं विधत्ते । प्राणो वाऽन्नमित्यादिना । उपासनमपि फलानभिसन्धिनानुष्ठितं बुद्धिद्वारेण ब्रह्मज्ञानायोपकरोतीत्युक्तं मुख्याधिकारिणस्तदपवादायोपकरिष्यति ।

यत्र ग्रामादौ यत्फलं कार्यं क्षेमादीत्यर्थः । महानिति

उ० मन्नादं। प्राणे शरीरं प्रतिष्ठितं। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितं। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ सप्तमोऽनुवाकः॥ ७॥

---

भा० न्नादं। तथा शरीरमप्यन्नं प्राणोऽन्नादः। कस्मात्प्राणे शरीरं प्रतिष्ठितं। तन्निमित्तत्वाच्छरीरस्थितेः। तस्मादेतदुभयं शरीरं प्राणश्चान्नमन्नादश्च। येनान्योन्यस्मिन् प्रतिष्ठितं तेनान्नं। येनान्योन्यस्य प्रतिष्ठा तेनान्नादः। तस्मात्प्राणः शरीरञ्चोभयमन्नमन्नादं च। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठत्यन्नान्नादात्मनैव। किञ्चान्नवानन्नादो भवतीत्यादि पूर्ववत्। अन्नं न परिचक्षीत न परिहरेत। तद्व्रतं पूर्ववत्स्तुत्यर्थं। तदेवं शुभाशुभकल्पनयाऽपरिह्रीयमाणं स्तुतं महीकृतमन्नं स्यादेवं यथोक्तमुत्तरेष्वप्यापो वा अन्नमित्यादिषु योजयेत्। अप्सु ज्योतिरिति अप्ज्यो-

---

आ० प्रजादिभिर्ब्रह्मवर्चसेनेति। स्थूलभोगसाधनवान् विराडेवेत्यर्थः॥ श्रुत्यन्तरप्रसिद्धेरिति। य एवमेषां पञ्च देवता वायुर्वाव संवर्ग इत्यादिश्रुत्यन्तराद्वायोः संहर्तृत्वं वायुद्वारकमिति वायुर्ब्रह्मणः परिमरः संहारसाधनमित्यर्थः॥ तत्कथं परिमरगुणतयाऽऽकाशोपासनं सिद्धान्तोक्तं स्यात्। स इति॥ एवं मन्दाधिकारिगोचरमुपासनजातमध्यारोपावस्थायामुपदिश्यापवाददृष्टिमभिप्रेत्याह। प्राणो वाऽन्नमित्यादिना॥

उ॰ अन्नं न परिचक्षीत । तद्व्रतं । आपो वा ऽन्नं । ज्योतिरन्नादं । अप्सु ज्योतिः प्रतिष्ठितं । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितं । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ अष्टमोऽनुवाकः ॥ ८ ॥

---

भा॰ तयोरन्नान्नादगुणत्वेनोपासकस्यान्नस्य बहुकरणं व्रतं । तथा पृथिव्याकाशोपासकस्य वसतौ च वसतिनिमित्तं कञ्चन कञ्चिदपि न प्रत्याचक्षीत वसत्यर्थमागतं न निवारयेदित्यर्थः । वासे च दत्तेऽवश्यं ह्यशनं दातव्यं । तस्माद्यया कया च विधया येन केन प्रकारेण बह्वन्नं प्राप्नुयात् बह्वन्नसङ्ग्रहं कुर्यादित्यर्थः । यस्मादन्नवन्तो विद्वांसोऽभ्यागतायान्नार्थिने अराधि संसिद्धमस्मै अन्नमित्याचक्षते न नास्तीति प्रत्याख्यानं कुर्वन्ति तस्माच्च हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण सम्बन्धः । अपि चान्नदानस्य माहात्म्यमुच्यते । यथा यत्कालं प्रयच्छत्यन्नं तथा

---

था॰ भोक्तृत्वादिलक्षणः संसारः कार्यगोचर इति विद्वत्स्वजीवस्यानौपाधिकसंसारित्वमदृष्टं तस्यापि कार्यत्वादिति भागवतानां मतमुद्भाव्य दूषयति । सन्नात्मायोऽस्त्यादिना । छान्दोग्यश्रुत्यनुसारेण विकाराकारात्मना प्रवेशमाशङ्क्य वाक्यशेषविरोधमाह । अनेन जीवेनेत्यादिना । अन्यथा देहादिभावमापन्नस्य जीवस्य ब्रह्म-

उ॰ अन्नं बहु कुर्वीत । तद्व्रतं । पृथिवी वाऽन्नं । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितं । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ नवमोऽनुवाकः ॥ ९ ॥

---

भा॰ तत्कालमेव प्रत्युपनमते । कथमिति तदेतदाह । एतद्वै अन्नं मुखतो मुख्ये प्रथमे वयसि मुख्यया वा वृत्त्या पूजापुरःसरमभ्यागतायान्नार्थिने राद्धं संसिद्धं प्रयच्छतीति वाक्यशेषः । तस्य किं फलं स्यादित्युच्यते । मुखतः पूर्वे वयसि मुख्यया वा वृत्त्याऽस्मै अन्नादायान्नं राध्यते यथा दत्तमुपतिष्ठत इत्यर्थः । एवं मध्यतो मध्यमे वयसि मध्यमेन चोपचारेण । तथा ततोऽन्ते वयसि जघन्येनोपचारेण परिभवेन तथैवास्मै राध्यते संसिद्ध्यत्यर्थः । य एवं वेद य एवमन्नस्य यथोक्तं माहात्म्यं वेद तद्दानस्य फलं यथोक्तं फलमुपनमेत् ॥ इदानीं ब्रह्मण उपासनप्रकार उच्यते । क्षेम इति वाचि क्षेमो नामोपात्तपरिरक्षणं ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठितमित्युपास्यं । योगक्षेम इति योगोऽनुपात्तस्योपादानं । तौ

---

व्या॰ व्यतिरिक्तस्यैव ब्रह्मदर्शित्वप्रदिश्यते संसारित्वापेक्षायां । मातृबुद्धिरिव परयोषिति रागापेक्षायां । तत्त्वमस्याद्युपदेशस्यान्यपरत्वाच्च जीवस्य पारमार्थिकमसंसारि ब्रह्मात्मत्वमित्याशङ्क्य

उ॰ न कंचन वसतौ प्रत्याचक्षीत । तद्व्रतं । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धं । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै

---

भा॰ हि योगक्षेमौ प्राणापानयोर्बलवतोः सतोर्भवतो यद्यपि तथापि न प्राणापाननिमित्तावेव किन्तर्हि ब्रह्मनिमित्तौ । तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयोः प्रतिष्ठितमित्युपास्यं । एवमुत्तरेष्वन्येषु तेन तेनात्मना ब्रह्मैवोपास्यं कर्मणो ब्रह्मनिर्वर्त्यत्वाद्धस्तयोः कर्मात्मना ब्रह्म प्रतिष्ठितमुपास्यं । गतिरिति पादयोः । विमुक्तिरिति पायौ । इत्येता मानुषीर्मनुष्येषु भवा मानुष्यः समाज्ञा आध्यात्मिक्यः समाज्ञाः ज्ञानानि विज्ञानान्युपासनानीत्यर्थः ॥ अथानन्तरं दैवीर्दैव्यो देवेषु भवाः समाज्ञा उच्यन्ते । तृप्तिरिति वृष्टौ । वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्ब्रह्मैव तृप्त्यात्मना वृष्टौ व्यवस्थितमित्युपास्यं । तथान्येषु तेन तेनात्मना ब्रह्मैवोपास्यं । तथा बलरूपेण विद्युति ॥ यशोरूपेण पशुषु । ज्योतीरूपेण नक्षत्रेषु । प्रजातिरमृतममृतत्वप्राप्तिः पुत्रेण ऋणविमोचनद्वारेणानन्दः सुखमित्येतत्सर्वमुपस्थनिमित्तं

---

आ॰ तद्व्रतमिति । आचान्तरावसथेत्यादिना । उपाधितत्तत्पदमुख्या-सामानाधिकरण्यविरोधादप्रसिद्धि जीवे ब्रह्मत्वसंपादनार्थत्वं कल्पितुं न शक्यत इत्यर्थः । गौणत्वस्य वाक्यवैयर्थ्यविरोधादबाधि-तत्वमसिद्धमित्याह । दर्शनमिति । सर्वप्रमाणानामनुग्राहकमर्कं

उ॰ मध्यतोऽन्नं राद्धं। मध्यतोऽस्मा अन्नं राध्यते। एतद्वा अन्ततोऽन्नं राद्धं। अन्ततोऽस्मा अन्नं राध्यते ॥ १ ॥ य एवं वेद। क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्म्मेति हस्तयोः।

---

भा॰ ब्रह्मैवानेनात्मनोपास्ये प्रतिष्ठितमित्युपास्यं। सर्व्वं ह्याकाशे प्रतिष्ठितमतो यत्सर्व्वमाकाशे तद्ब्रह्मैवेत्युपास्यं। तच्चाकाशं ब्रह्मैव। तस्मात्तत्सर्व्वस्य प्रतिष्ठेत्युपासीत। प्रतिष्ठागुणोपासनात्प्रतिष्ठावान् भवति। एवं पूर्व्वेष्वपि। यद्यत्ताधीनं फलं तद्ब्रह्मैव तदुपासनात्तद्वान् भवति इति द्रष्टव्यं। श्रुत्यन्तराच्च तं यथायथोपासते तदेव भवतीति। तन्मह इत्युपासीत। महो महत्त्वगुणवत्तदुपासीत। महान् भवति। तन्मन इत्युपासीत। मननं मनो मानवान् भवति मननसमर्थो भवति। तन्नम इत्युपासीत। नमनं नमो नमनगुणवदुपासीत। नम्यन्ते प्रह्वीभवन्त्यस्मा उपासित्रे कामाः काम्यन्त इति भोग्या विषया इत्यर्थः। तद्ब्रह्मेत्युपासीत। ब्रह्मपरिवृढतममित्युपासीत। ब्रह्मवांस्तद्गुणो भवति। तद्ब्रह्मणः परिमर इत्युपासीत। ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन् पञ्च देवताः विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः। अतो वायुः परिमरः

---

व्या॰ दृश्यते। आत्मनश्च संसारधर्म्मवत्त्वस्य तर्कामपरिशुद्धत्वात्तत्प्रत्ययस्य भ्रान्तत्वान्न शास्त्रज्ञानबाधकत्वं सम्भवतीत्याह। नेति। सुखादेरुपलभ्यत्वेनोपलब्धृधर्म्मत्वं सम्भवति रूपादिवदित्यर्थः। संसारित्वग्राहकं यद्यपि प्रत्यक्षप्रमाणं न भवति तथापि संसारधर्म्मविशिष्ट

उ॰ गतिरिति पादयोः। विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति ॥ २ ॥ यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपा-

---

भा॰ श्रुत्यन्तरप्रसिद्धेः। स एष एवायं वायुराकाशेनानन्य इत्याकाशो ब्रह्मणः परिमरस्तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत। एवमेवंविदं प्रतिस्पर्द्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्त्यतो विशेष्यन्ते द्विषन्तः सपत्ना इति। प्राणं द्विषन्तः सपत्नास्ते परिम्रियन्ते प्राणान् जहतीत्यर्थः। किञ्च ये चाऽप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि ते च परिम्रियन्ते। प्राणो वाऽन्नं शरीरमन्नादमित्यारभ्याकाशान्तस्य कार्य्यस्यैवान्नान्नादत्वमुक्तं। उक्तं नाम किं तेन तेनैतत्सिद्धं भवति कार्य्यविषय एव भोज्यभोक्तृत्वकृतः संसारो न त्वात्मनीति। आत्मनि तु भ्रान्त्योपचर्य्यते॥ नन्वात्मापि परमात्मनः कार्य्यं ततो युक्तस्य संसार इति। न। असंसारिण एव प्रवेशश्रुतेः। तत्सृष्ट्वा तदेवानुप्राविशदित्याकाशादिकारणस्य ह्यसंसारिण एव परमात्मनः

---

आ॰ आत्मा सचैतन्येनोपलभ्यत इति स्वानुभवविरोधान्न शाब्दमसंसारित्वज्ञानं प्रमाणमिति चेन्नैतदपि युक्तं धर्म्मित्वकर्त्तृत्वविरोधादित्यर्थः। प्रत्यक्षविरोधाभावेऽप्यनुमानविरोधो भविष्यतीत्याह। आकाशादिति। आकाशादि सात्मकं कार्य्यत्वाद्घटवदन्यस्याथवस्यास-

उ॰ सीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति ॥ ३ ॥ तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत ।

---

भा॰ कार्येष्वनुप्रवेशः श्रूयते । तस्मात्कार्यानुप्रविष्टो जीव आत्मा पर एवासंसारी । सृष्ट्वानुप्राविशदिति समानकर्तृकत्वोपपत्तेश्च । सर्गप्रवेशक्रिययोश्चैककर्तृकत्वे सति ततः क्त्वाप्रत्ययो युक्तः । प्रविष्टस्य तु भावान्तरापत्तिरिति चेन्न । प्रवेशस्यान्यार्थत्वेन प्रत्याख्यातत्वात् । अनेन जीवेनेति विशेषश्रुतेः । धर्मान्तरेणानुप्रवेश इति चेन्न । तत्त्वमसीति पुनस्तद्भावोक्तेः । भावान्तरापन्नस्यैव तदपोहार्था सम्पदिति चेन्न । तत्सत्यं स आत्मा तत्त्वमसीति सामानाधिकरण्यात् । दृष्टं जीवस्य संसारित्वमिति चेन्न । उपलब्धुरनुपलभ्यत्वात् । संसारधर्मविशिष्ट आत्मोपलभ्यत इति चेन्न । धर्माणां धर्मिणोऽव्यतिरेकात्कर्मत्वानुपपत्तेः । उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत्त्रासादिदर्शनाद्दुःखित्वाद्यनुमीयत इति चेन्न । त्रासादेर्दुःखस्य चोपलभ्यमानत्वान्नोपलब्धृधर्मत्वं । कापिल-

---

व्या॰ त्रासादावेव तदाश्रयोऽनुमीयत इति न वाच्यमुपलभ्यं नोपलब्धृधर्मं रूपादिवदिति व्याप्त्यन्तरविरोधादध्यासादपि कार्यदर्शनसम्भवादित्यर्थः । जीवस्य ब्रह्मात्मत्वं प्रतिपादयतः शास्त्रस्य तर्कशास्त्रविरोधादप्रामाण्यमाशङ्क्य दूषयति । कापिलेत्यादिना । तर्कशास्त्रस्य श्रुतेश्च विरुद्धार्थाभिधायित्वेन प्रामाण्यसंशयेऽपि

उ॰ पर्य्येण म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः। स यश्चायं पुरुषे । यश्चासावादित्ये। स एकः ॥ ४ ॥ स य एवंवित्। अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मान-

---

भा॰ काणादादितर्कशास्त्रविरोध इति चेन्न। तेषां मूलाभावे वेदविरोधे च भ्रान्त्योपपत्तेः । श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वं। एकत्वाच्च कथमेकत्वमित्युच्यते ॥

स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्येवमादि पूर्व्ववत्। सर्वं अन्नमयादिक्रमेणानन्दमयमात्मानमुपसंक्रम्यैतत्साम गायन्नास्ते। सत्यं ज्ञानमित्यस्या ऋचोऽर्थो व्याख्यातो विस्तरेण तद्विवरणभूतयाऽऽनन्दवल्ल्या सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति तस्य फलवचनस्यार्थविस्तारो नोक्तः। के ते किंविषया वा सर्व्वे कामाः कथं वा ब्रह्मणा सह समश्नुत इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते। तत्र पितापुत्राख्यायिकायां पूर्व्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तं। प्राणादेराकाशान्तस्य च कार्य्यस्यान्ना-

---

आ॰ नाशङ्कनीय इत्याह। श्रुत्युपपत्तिभ्यां चेति। किञ्च तार्किकैरपि ईश्वराधीनं जीवस्य सुखित्वं निरूपणीयं न तन्निरूपयितुं शक्यते। साम्यनीश्वरस्य सुखदुःखहेतुत्वासम्भवादित्यभिप्रेत्याह। एकत्वाच्चेति॥
स य इत्यादिपदव्याख्यानमुपेक्ष्योपसङ्क्रमणसामगानयोरेवार्थं-

उ॰ मुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य ।
इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् ।
एतत्साम गायन्नास्ते । हा३वु हा३वु हा३वु५ ॥
अहमन्न१महमन्न१महमन्नं१ । अहमन्नादो२ऽह-
मन्नादो२ ऽहमन्नादः १ अहꣳ श्लो१ककृदहꣳश्लो१-
ककृदहꣳ श्लो१कक्कृत् । अहमस्मि प्रथमजा ऋता-

भा॰ ष्टादत्वेन विनियोगश्चोक्तः । ब्रह्मविषयोपासनानि च । ये च
सर्व्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्य्य-
भेदविषया एते दर्शिताः । एकत्वे पुनः कामकामित्वानुपप-
त्तिः । भेदजातस्य सर्व्वस्यात्मभूतत्वात् । तत्र कथं युगपद्ब्र-
ह्मस्वरूपेण सर्व्वान् कामानेवंवित्समश्नुत इत्युच्यते । सर्व्वात्म-
त्वोपपत्तेः । कथं सर्व्वात्मत्वोपपत्तिरित्याह । पुरुषादि-
त्ययोरात्मैकत्वविज्ञानेनापोह्योत्कर्षापकर्षावन्नमयाद्यात्मनो
ऽविद्याकल्पितान् क्रमेण सङ्क्रम्यानन्दमयान्तान् सत्यं ज्ञान-
मनन्तं ब्रह्मादृश्यादिधर्म्मकं स्वाभाविकमानन्दमजममृत-
मभयमद्वैतं फलमापन्न इमाँल्लोकान् भूरादीननुसञ्चर-
न्निति व्यवहितेन सम्बन्धः । कथमनुसञ्चरन् । कामान्नी का-
मतोऽन्नमस्येति कामान्नी । तथा कामतो रूपाण्यस्येति काम-
रूपी । अनुसञ्चरन् सर्व्वात्मनेमाँल्लोकानात्मत्वेनानुभवन् ।

व्या॰ त्समन्वयप्रदर्शनेन दर्शितमिदानीं वल्लीसमाप्तिपर्य्यन्तस्य मन्त्रस्य
तात्पर्य्यं तत्कीर्त्तनेनाह । सत्यं ज्ञानमित्यादिना ॥ अविद्याले-
शवशेन द्वैतावभासमनुभवन् विद्वान् सर्व्वस्यात्माहमिति मन्यमा-

उ० ३स्य १ पूर्वं देवेभ्योऽमृतस्य ना३भायि १ यो मा ददाति स इदेव मा३वाः १ अहमन्नमन्नमदन्त-मा३द्मि १ अहं विश्वं भुवनमभ्यभवां३ १ सुवर्ण-ज्योतीः १ य एवं वेद १ इत्युपनिषत् ॥ ६ ॥ राध्यते विद्युति मानवान् भवत्येवा हा३वु य एवं वेदैकञ्च ॥ इति दशमोऽनुवाकः ॥ १० ॥

---

भा० किमेतत्साम गायन्नास्ते। समत्वाद्ब्रह्मैव साम सर्वानन्यरूपं गायन् शब्दयन्नात्मैकत्वं प्रख्यापयन् लोकानुग्रहार्थं तद्विज्ञानफलं चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति। हावु हावु हावु अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थाः। कः पुनरसौ विस्मय इत्युच्यते। अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च। किञ्चाहमेव श्लोककृत्। श्लोको नामान्नान्नादयोः सङ्घातस्तस्य कर्त्ता चेतनावान्। अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य परार्थेन हेतुना सङ्घातकृत्। त्रिरुक्तिर्विस्मयत्वख्यापनार्था। अहमस्मि भवामि। प्रथमजः प्रथमोत्पन्नः। ऋतस्य सत्यस्य मूर्त्तामूर्त्तस्यास्य जगतो देवेभ्यश्च पूर्वममृतस्य नाभिर्मध्यं मत्संस्थममृतत्वं प्राणिनामित्यर्थः। यः कश्चिन्मा मामन्नमन्नार्थिभ्यो ददाति प्रयच्छति अन्नात्मना ब्रवीति

---

घा० सोऽस्मि सर्वैश्वर्यभुजां योगिनां यत्कामाप्तत्वं कामरूपत्वञ्च ममैवेति पश्यन्नुभयतः सर्वान् विषयानन्दाननुभव इत्युपचर्यत इत्याह। सर्वात्मतापत्तेरिति। प्रथमजो हिरण्यगर्भोऽप्यहं। श्रुतिसावदा-

उ॰ भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व तन्न-
योदशान्नं प्राणं मनो विज्ञानमिति विज्ञाय तं
तपसा द्वादश द्वादशानन्द इति सैषा दशान्नं न
निन्द्यात् प्राणः शरीरमन्नं न परिचक्षीतापो ज्यो-
तिरन्नं बहु कुर्वीत पृथिव्यामाकाश एकादशैका-
दश। न कञ्चनैकषट्त्रिरेकान्नविंशतिरेकान्नविं-

---

भा॰ स इत इत्यर्थः। एवमेवमविनष्टं यथाभूतं मां आत्मा प्रब-
वीतीत्यर्थः। यः पुनरन्यो मामदत्त्वार्थिभ्यः काले प्राप्तेऽन्नमत्ति
तमन्नमदन्तमहमन्नमेव भक्षयन्तं पुरुषं भोजयामि
प्रत्यद्मि। अत्राहैवं तर्हि बिभेमि सर्व्वात्मत्वप्राप्तेर्मोक्षादस्तु
संसार एव यतो मुक्तोऽप्यहमन्नभूत आद्यः स्यामन्नस्यैव
मा भैषीः संव्यवहारविषयत्वात्सर्व्वकामाशनस्येत्ययं
संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया
ब्रह्मत्वमापन्नो विदुषस्तस्य नैव द्वितीयं वस्त्वन्तरमस्ति
यतो बिभेति अतो न बिभेतव्यं मोक्षात्। एवं तर्हि
किमिदमाह अहमन्नमहमन्नमहमन्नाद इत्युच्यते। योऽय-
मन्नान्नादादिलक्षणः संव्यवहारः कार्य्यभूतः। स संव्यवहार
कार्य्यभूतमेव न परमार्थवस्तु। स एवम्भूतोऽपि ब्रह्मनि-

---

व्या॰ दरार्थं। देवेभ्यः सर्व्वादिरूपेभ्यः पूर्व्वं विराड्रूपमेवेत्यर्थः।
अवेति लोट्मध्यमपुरुषैकवचनं। पौनःपुन्येनेत्येवं सर्व्वव्याख्यानेषु
निपातस्य इत्यवतीति व्याख्यातं। अभिभवामि उपसंहरामीत्यर्थः।
ईश्वरात्मत्वाद्यानेनाहं नाशे द्वैतं ततो नास्ति भयकारणमित्यर्थः।

उ॰ शान्तिः ॥ * ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ भृगुरित्युपनिषत् । शन्नो मित्रः ॥ आविदन्तारं ॥ ॐ शान्तिः ३ ॥ इति तैत्तिरीयोपनिषत्सम्पूर्णा ॥

---

भा॰ मिक्तो ब्रह्मव्यतिरेकेणासन्निति कृत्वा ब्रह्मविद्याकार्यं सर्वात्मभावस्य स्तुत्यर्थमुच्यते । अहमन्नमहमन्नमहमन्नं । अहमन्नादोऽहमन्नादोऽहमन्नाद इत्याद्यन्तो भयादिदोषगन्धोऽप्यविद्यानिमित्तो विद्योच्छेदात् ब्रह्मभूतस्य नास्तीत्यहं विश्वं समस्तं भुवनं भूतैः सम्भजनीयं ब्रह्मादिभिर्भवन्तीति यस्मिन् भूतानीति भुवनमभ्यभवामभिभवामि परेणेश्वरेण स्वरूपेण । सुवर्णज्योतिः सुवरादित्यो नकार उपमार्थः । आदित्य इव सकृद्विभातमस्मदीयं ज्योतिर्ज्योतिः प्रकाश इत्यर्थः । इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं नाम । तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय ॥ य एवं वेद तस्येदं फलं यथोक्तमोमित्युक्तेरिति ॥ इति श्रीपरमहंसपरिव्राजकाचार्यस्य शङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्यं समाप्तं ॥ ॐ तत्सत् ॥

---

आ॰ नकार इवेत्यर्थे ॥ तैत्तिरीयकभाष्यस्य शङ्करस्य दवीयसः । स्फुटार्थबोधिका व्याख्या निरमायि सटीप्पणी ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यश्रीभगवदानन्दज्ञानविरचिता तैत्तिरीयभाष्यटिप्पणी सम्पूर्णा । ॐ तत् सत् ॥




ॐ तत् सत् ॐ ॥

## ऋग्वेदीयैतरेयोपनिषद्भाष्यं ॥

ऐ०भा० ॥ ॐ नमः परमात्मने ॥ परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता । एतत् सत्यं ब्रह्म प्राणाख्यं। एष एको देवः । एतस्यैव प्राणस्य सर्व्वे देवा विभूतयः ।

---

### ऋग्वेदीयैतरेयोपनिषद्भाष्यटीका ॥

आ० ॥ ॐ नमो गणेशाय ॥ आत्मा वा इत्यादिना केवलात्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्त्तयति । परिसमाप्तमिति ॥ तत्परिसमाप्तिः कथं गम्यत इत्याशङ्क्याह । सैषेति ॥ परा गतिरिति परं गन्तव्यं प्राप्यं फलमित्यर्थः ॥ उपसंहारमेव वाक्योदाहरणेन दर्शयति । एतदिति ॥ तच्च सत्यं सर्व्वेण भोक्त्रेण संयुक्तोऽध्यात्माधिदैवरूपः प्राणः सत्यशब्दवाच्यो भवति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः ॥ अनेन प्राण एव एक इत्युक्तमित्याह । एष इति ॥ तर्हि वागग्न्यादयो देवाः के इत्याशङ्क्य तस्य वाक्तन्तिः ॥ अथातोऽस्य पुरुषस्येत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह । एतस्यैवेति ॥ एवं सर्व्वात्मकप्राणस्यात्मत्वेन विज्ञानात् कर्म्मसहितात् सर्व्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयोऽसम्भूय देवता अप्येति य एवं वेदेत्यनेन वाक्येनोपसंहृतमित्याह । एतस्येति ॥ तथा च ज्ञानसहितेन कर्म्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्यासिद्धेस्तत्सिद्ध्यर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः ॥ ननु सर्व्वात्मकसूत्रात्मप्राप्तिव्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषाञ्चिन्मतमुत्थापयति । सोऽयमिति ॥ एतस्यैव विषयादिमतः सत्यरूपत्वेन पुरु-

ॐ तत् सत् ॐ ॥

ऋग्वेदीयैतरेयोपनिषद्भाष्यं ॥

ऐ॰भा॰ ॥ ॐ नमः परमात्मने ॥ परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्म्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता । एतत् सत्यं ब्रह्म प्राणाख्यं । एष एको देवः । एतस्यैव प्राणस्य सर्व्वे देवा विभूतयः ।

---

ऋग्वेदीयैतरेयोपनिषद्भाष्यटीका ॥

व्या॰ ॥ ॐ नमो गणेशाय ॥ आत्मा वा इत्यादिना केवलात्मविद्यारम्भस्यावसरं वक्तुं वृत्तं कीर्त्तयति । परिसमाप्तमिति ॥ तत्परिसमाप्तिः कथं गम्यत इत्याशङ्क्याह । सैषेति ॥ परा गतिरिति पदं गन्तव्यं प्राप्यं फलमित्यर्थः ॥ उपसंहारमेव वाक्योदाहरणेन दर्शयति । एतदिति ॥ यत्र सत्य सत्येन भोक्त्रेन संयुक्तोऽध्यात्माधिदैवतात्मकः प्राणः सत्यशब्दवाच्यो भवति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः ॥ अनेन प्राण एव एवेत्युक्तमित्याह । एष इति ॥ तर्हि वागग्न्यादयो देवाः के इत्याशङ्क्य तस्य चाप्तिरिति ॥ अथातोऽस्य पुरुषस्येत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह । एतस्येवेति ॥ एवं सर्व्वात्मकप्राणस्यात्मत्वेन विज्ञानात् कर्म्मसहितात् सर्व्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं प्रयाणयोर्देवतामयो ब्रह्ममयोऽमृतमयोऽसम्भूय देवता अप्येति य एवं वेदेत्यनेन वाक्येनोपसंहृतमित्याह । एतस्येति ॥ तथा च ज्ञानसहितेन कर्म्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्यासिद्धेस्तत्सिद्ध्यर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः ॥ मतान्तरे सर्व्वात्मकप्राणात्मप्राप्त्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषाञ्चिन्मतमुत्थापयति । सोऽयमिति ॥ एतस्यैव विषयादिमतः सत्यरूपत्वेन पुरु-

ऐ॰भा॰ संन्यासिकेवलात्मविज्ञानविधानार्थ उत्तरो ग्रन्थ इति गम्यते । अन्यार्थानवगमात् । तथाच पूर्व्वोक्तानां देवानामग्न्यादीनां संसारित्वं दर्शयिष्यति अशनायादिदोषवत्त्वेन । तमशनायापिपासाभ्यामन्ववार्जदित्यादिना । अशनायादिमत् सर्व्वं संसार एव । परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः । भवत्वेवं केवलात्मज्ञानं मोक्षसाधनं न त्वत्राकर्म्यैवाधिकि-

---

व्या॰ वैषयिकसर्व्वानन्दप्राप्तिलक्षणफलोक्तेः स्तुत्यर्थवादात् स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यतेति प्रवेशोक्तेः । तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्वोक्त्युपपत्तेश्च । निर्विशेषाद्वितीयात्मपरत्वावगमेन यस्यान्याऽर्थान्तरपरताऽनवकाशात्लोकादिसृष्टिवाक्याध्यारोपापवादाभ्यां सुज्ञातप्रतिपत्त्यर्थमात्मन्यारोपात् परमात्मैवात्मशब्देन गृह्यते इतरवत् । यथेतरेषु सृष्टिश्रवणेषु । तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्येवमादिषु परस्यात्मनो ग्रहणं । यथा चेतरस्मिन् लौकिके आत्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हतीति । कुतः । वाक्यार्थदर्शनात् । आत्मगृहीतिरितरवदुत्तरादित्यधिकरणसिद्धान्तन्यायेन केवलात्मपरत्वनिश्चयाच्च सविशेषपरत्वमुत्तरग्रन्थस्येत्याह । अन्यार्थेति । यथैव स्य गोत्र इति तथाह । तथा चेति । तथा संसारित्वञ्च दर्शयिष्यतीत्यन्वयः । तं हिरण्यगर्भस्थूलरूपं वैराजं पिण्डमशनायापिपासाभ्यां संयोजितवानीश्वर इति श्रुत्यर्थः । अशनायादिमत्त्वेऽपि निरतिशयसुखवत्त्वेन देवताभावस्य मोक्षत्वं स्यादित्यत आह । अशनायादिमदिति । अशनायादेर्दुःखनियतत्वान्निरतिशयसुखत्वं तस्यासिद्धमिति संसारित्वमित्यर्थः । यत्तु निर्विशेषात्मस्वरूपावस्थानस्य विषयादिरहितत्वेन न मोक्षत्वमिति तदसत् । तस्य योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्यशनायाद्यत्ययश्रुतेस्तन्नियतदुःखाप्रसक्तेः । एतस्यानन्दो ब्रह्मेति आनन्दादिति श्रुत्यन्तरादनुग्राम् धर्मे लोके इत्येवोधाप्या-

ऐ॰ भा॰ यते। विशेषाश्रवणात्। अकर्मिण आश्रमान्तरस्येदाश्रवणात्। कर्म च बृहती सहस्रलक्षणं प्रस्तुत्यानन्तरमेवात्मज्ञानं प्रारभ्यते। तस्मात् कर्म्येवाऽधिक्रियते। न च कर्मासम्बन्ध्यात्मविज्ञानं पूर्व्ववदन्ते उपसंहारात्। यथा कर्मसम्बन्धिनः पुरुषस्य सूर्य्यात्मना स्थावरजङ्गमादिसर्व्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च सूर्य्यात्मेत्यादिना तथैव प्रज्ञा एष

---

आ॰ शब्दरूपतावगमात् स्वर्गशब्दस्य तत्सामान्यवाचित्वादनन्ते स्वर्गे लोके ब्रह्मविदः स्वर्गलोकमित ऊर्ध्वं विमुक्ता इत्यादिश्रुतिषु ब्रह्मणि स्वर्गशब्दप्रयोगाच्च। तस्य विषयाभावेऽपि पुरुषार्थत्वाभ्युपगमाच्च। परस्य त्विति। एवं विविदिषोत्पत्तिविद्याया मोक्षसाधनत्वमङ्गीकृत्य तस्या अकर्मिनिष्ठत्वनियमरूपं कैवल्यं न सम्भवतीति वदन् संन्यासमाक्षिपति। भवत्विति। विशेषाश्रवणमेव स्फुटयति। अकर्मिण इति। संन्यासिन इत्यर्थः। न केवलं विशेषाश्रवणं किन्तु सन्निधानात्कर्म्मिणः प्रतीतेः कर्म्मिसम्बन्धित्वनियमश्रवणाच्चेत्याह। कर्म्म च बृहतीसहस्रलक्षणमिति। तथा च सन्निधानात् कर्म्मी सन्निहित इत्यर्थः। तस्मादिति। अतो न कर्मत्यागरूपसंन्यासाश्रमोऽस्तीत्यर्थः। एवमात्मविद्यां केवलां कर्म्मासम्बन्धिनीमङ्गीकृत्य तस्या अकर्म्मिनिष्ठत्वनियमो निराकृतः। इदानीमङ्गीकारं परित्यजति। न चेति। पूर्व्वत्र कर्मसम्बन्धिध्यानविषयस्य सर्व्वात्मत्वोक्तेरेव प्रज्ञेत्यादिनाऽत्रापि सर्व्वात्मत्वोक्तेन च लिङ्गेनाऽस्याप्यात्मज्ञानस्य कर्म्मसम्बन्धित्वानुमानादस्यापि आत्मज्ञानस्य कर्मसम्बन्धित्वमित्यर्थः। सङ्ग्रहवाक्यं विवृणोति। यथेत्यादिना। कर्मसम्बन्धिन इति तस्यैव चोक्तं लोकमभ्यार्छत् पुरुषरूपेण स एष तपतीत्यादिना सूर्य्यात्मत्वमुक्ता तस्य सर्व्वात्मत्वं तस्माच्छर्वरिं इत्याद्युच्यते। एतमेव सन्तमित्यादिना प्राण एष इत्येवं विद्यादित्यन्तेन प्राणो वै सर्व्वाणि भूतानि चेतनेन चोक्तमित्यर्थः। जगतो जङ्गमस्य तस्थुषः स्थावरस्य सूर्य्य आत्मेति मन्त्रार्थः। प्रज्ञानेत्रमिति प्रज्ञा-

ऐ०भा० इन्द्र इत्याद्युपक्रम्य सर्व्वप्राण्यात्मत्वं । यच्च स्थावरं जङ्गमं सर्व्वं तत् प्रज्ञानेत्रमित्युपसंहरिष्यति । तथाच संहितोपनिषदि एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त इत्यादिना कर्म्मसम्बन्धित्वमुक्त्वा सर्व्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षत इत्युपसंहरति । तथा तथैव योऽयमशरीरः प्रज्ञात्मेत्युक्त्वा यश्चासावादित्य एकमेव तदिति विद्यादित्येकत्वमुक्तमिहापि कोऽयमात्मेत्युपक्रम्य प्रज्ञात्मत्वमेव प्रज्ञानम् ब्रह्मेति दर्शयिष्यति । तस्मान्नाकर्म्मसम्बन्ध्यात्मज्ञानं पुनरुक्तता-ऽनर्थक्यमिति चेत् । कथं प्राणो वा अहमस्म्यृषे इत्यादि ब्राह्मणेन सूर्य्य आत्मेति च मन्त्रेण निर्धारितस्यात्मन आत्मा वा इदमित्यादिब्राह्मणेन कोऽयमात्मेति प्रश्नपूर्व्वकं पुनर्निर्धारणं पुनरुक्तमनर्थकमिति चेन्न । तस्यैव धर्मा-

---

टी० शब्दितस्यानेकत्वमित्यर्थः । सन्दर्भान्तरेणाप्यस्य कर्म्मसम्बन्ध्यात्मविषयत्वमिति वदन् सर्व्वात्मत्वं लिङ्गस्य कर्म्मसम्बन्ध्यात्मविषयत्वमाह । तथा चेति । तथा संहितोपनिषदि चेति सम्बन्धः । महत्युक्थे षडशीतिसहस्राख्ये शस्त्रे एतं प्रकृतमात्मानं बह्वृचा ऋग्वेदिनो विचारयन्तीति शेषः । संहितोपनिषदि प्रज्ञात्मेत्युक्तस्यात्मनो यो यश्चासोन्वयं पश्येदित्यादिना क्षयमर्थ्यकोक्तमया कर्म्मसम्बन्धप्रतीतेरस्यापि प्रज्ञात्मत्वोक्त्या च कर्म्मसम्बन्धावगमात् तज्ज्ञानस्य कर्म्मसम्बन्धित्वमित्याह । तथा तथैवेति ॥ ब्रह्मामुपसंहरति । तस्मादिति ॥ ज्ञानवादेन सिद्धान्त्याशङ्कामाशङ्कते । पुनरुक्तमिति ॥ सङ्ग्रहवाक्यं विवृणोति । प्राणो वा इत्यादिना ॥ पूर्व्वोत्तरब्राह्मणयोरेकार्थत्वे वक्ष्यमाणमपि प्राणात्मविषयं स्यान्न सिद्धोपदेशमिति पुनरुक्तमित्यर्थः ॥ स एव शङ्कां परिहरति । न तस्येति । तमेव प्रश्नपूर्व्वकं विवृणोति । कथमित्यादिना । जगत्सृष्टीति स इमाल्लोकानसृजतेत्यादिश्रव-

ई॰भा॰ ऽनधिकृतार्थो वा न परमार्थतत्त्वविज्ञाने फलादर्शने क्रियानुपपत्तेः। यदुक्तं कर्म्मणि एव चात्मज्ञानं कर्म्मसम्बन्धि चेत्यादि तन्न। परं ह्याप्तकामं सर्व्वसंसारदोषवर्जितं ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाते कृतेन कर्त्तव्येन वा प्रयोजनं आत्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते। फलादर्शनेऽपि नियुक्तत्वात् करोतीति चेन्न। नियोगाविषयात्मदर्शनादिष्टयोगमनिष्टवियोगञ्चात्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके न तु तद्विपरीतनियोगाविषयब्रह्मात्मदर्शी। ब्रह्मात्म-

---

आ॰ त्वेऽपि कर्म्मानधिकृतत्वमप्रवृत्त्यादिविषयत्वमेवेत्याह। अनधिकृतेति। तस्मात्कर्म्मनिष्ठैव विद्या किन्तु कर्म्मनिष्ठा तत्सम्बन्धिनी चेति स्थितं। यदेतत्सिद्धान्ती परिहरति। नेति। एवं हि कर्म्मनिष्ठा विद्या स्यात्। यदि विदुषोऽपि कर्म्मानुष्ठानं स्यात्तदपि प्रयोजनार्थितया वा स्यात्काम्य इव नियोगबलाद्वा प्राभाकरमत इव नित्यकर्म्मवत्। तत्र नाद्य इत्याह। परमार्थेति। वस्तुतत्त्वं विज्ञानविशेषार्थेऽध्याहारपूर्व्वकं नञर्थं विवृणोति। यदुक्तमित्यादिना। कर्म्मसम्बन्धि चेति कर्म्माङ्गोक्त्याद्याश्रयमित्यर्थः। परमार्थेति वाक्यार्थं विवृणोति। परमिति। धर्म्मार्थमनर्थनिवृत्त्यर्थं वा कर्म्म स्यादोभयमपीति परं विशेषणद्वयं दोषपदेन रागद्वेषाभावेनापि प्रवृत्त्यभावं सूचयति। अनुष्ठितकर्म्मजन्यसम्बन्धे कर्त्तव्ये न सम्बन्धो दूरापास्त इति वक्तुं कृतेनेत्युक्तं। द्वितीयं शङ्कते। फलादर्शनेऽपीति। ममेदं कार्य्यमिति बोद्धा हि नियोगस्य विषयो नियोज्यः कार्य्यं स्वकीयत्वञ्चात्मनस्तज्जन्यफलार्थिनः। न चात्मनोऽभिज्ञस्यानिष्टो ममेदमिति बुद्धिर्भवति अतो न तस्य नियुक्तत्वमित्याह। न नियोगेति। तदेवोपपादयति। इष्टेति। ममेदं कार्य्यमिति बोधाभावेऽपि चेन्नियुज्येत तर्हि राजसूयादिकं ब्राह्मणादिना कर्त्तव्यं स्या-

ऐ० भा० त्वदर्थेऽपि ननु चेन्नियुज्येत नियोगाविषयोऽपि सन्न कश्चिदनियुक्त इति सर्वं कर्म सर्वेण सर्वदा कर्त्तव्यं प्राप्नोति। तच्चानिष्टं। न च स नियोक्तुं शक्यते केनचित्। आम्नायस्यापि तत्प्रभवत्वात्। न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते। नापि बहुवित् स्वाम्यविवेकिना भृत्येन। आम्नायस्य नित्यत्वे सति स्वातन्त्र्यात् सर्वान् प्रति नियोक्तृत्वसामर्थ्यमिति चेन्न। उक्तदोषात्। तथापि सर्वेण सर्वदा विशिष्टं कर्म कर्त्तव्यमित्युक्तो दोषोऽपरिहार्य एव। तदपि शास्त्रे-

---

आ० दग्निष्टोमादिकमपि सर्वदा कर्त्तव्यं स्यान्निर्निमित्तत्वाविशेषादित्याह। ब्रह्मात्मत्वेति। न कश्चिन्न नियुक्त इति नञ्द्वयेन सर्वोऽपि नियुक्त एवेत्यर्थः। किञ्च नियोक्ताप्यस्य किं यः कश्च पुरुषो देवो वा। आद्ये विदुष ईश्वरात्मत्वज्ञानात् सर्वं नियोक्तृत्वेन स्वनियोज्येनास्य नियोज्यत्वं स्यात्तच्च विरोधान्न सम्भवतीत्याह। न च स इति। तस्यैव सर्वनियोक्तृत्वादित्यर्थः॥ नन्वन्यस्य नियोक्तृत्वाभावेऽप्याम्नायेन विद्वान्नियोज्यः स्यादिति द्वितीयमाशङ्क्य तस्याम्नायस्येश्वरात्मतामापन्नस्य स्वप्रमाणपूर्वकत्वात् स्ववचनेन स्वस्य नियोज्यत्वमेकत्र कर्तृकर्मविरोधान्न सम्भवतीत्याह। आम्नायस्यापीति॥ किञ्च व्याकरणादेस्तत्कर्तृपाणिन्यादिश्रेयैकदेशार्थविषयत्वदर्शनेन वेदस्यापीश्वरजन्यस्येश्वरज्ञेयैकदेशविषयत्वेनाल्पत्वात्तदप्यधिकेश्वरनियोक्तृत्वमयुक्तमित्याह। नापि बहुविदिति॥ अविवेकेनेत्यल्पज्ञेनेत्यर्थः। यथोत्तमस्वामी तस्याविवेकित्वं भृत्येन न नियुज्यत इत्यनुषङ्गः॥ ननु वेदस्येश्वरज्ञानपूर्वकत्वपक्षे पूर्वोक्तदोषानुषङ्गेऽपि तस्य नित्यत्वपक्षे नायं दोष इति शङ्कते। आम्नायस्येति। तस्याऽचेतनस्य नियोक्तृत्वं न सम्भवति। तस्य चेतनधर्मत्वादित्युत्तरमाह। नेति॥ नियोक्तृत्वमभ्युपेत्यापि दोषमाह। उक्तदोषादिति। तदेव विवृणोति। तथापीति। अनियोज्यस्यापि चेत् कर्त्तव्यं विदुषस्तर्हि विशिष्टं विहितं कर्म सर्वेण

ऐ॰भा॰ एवेति चेत् । यथा कर्म्मकर्त्तव्यता शास्त्रेण कृता तथा तद्व्यात्मज्ञानं तस्यैव कर्म्मिणः शास्त्रेण विधीयत इति चेत् । न । विरुद्धार्थबोधकत्वानुपपत्तेः । न ह्येकस्मिन् कृताकृततासम्बन्धित्वं तद्विपरीतत्वञ्च बोधयितुं शक्यं । शीतोष्णतामिवाग्नेः । न चेष्टयोगचिकीर्षात्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता सर्व्वप्राणिनां तद्दर्शनात् शास्त्रकृतश्चेत्तदुभयं गोपालादीनां न दृश्येत अशास्त्रज्ञता तेषां । यद्धि स्वतोऽप्राप्तं तच्छास्त्रेण बोधयितव्यं । तच्चेत् कृतकर्त्तव्यता-

---

आ॰ सर्व्वदापि कर्त्तव्य सद्भावे हेत्वभावादित्यर्थः । ननु द्विविधज्ञानत्व-ज्ञानस्य कर्म्मकर्त्तव्यतायाश्च शास्त्रेण कृतत्वादुभयोरपि शास्त्रयोः प्रामाण्याविशेषात् कदाचिदात्मज्ञानं कदाचित् कर्म्मानुष्ठानञ्च स्यादिति शङ्कते । तद्वीति । तदेव विवृणोति । यथेति । स्वाभाविककर्तात्मबोधेन सहदुत्पन्नेनैव कर्त्तृत्वाबोधबाधनान्न पुनः शास्त्रेण कर्त्तृत्वबोधः सम्भवतीत्याह । नेति । क्रियावत्त्वेन कृतमिति इदानीमकृतं इत्यादि कर्त्तव्यं यत्तदुच्यते । एवं तावद्नियोगाविषयात् कर्त्तात्मदर्शित्वाद् विदुषः प्रयोजनार्थित्वाभावाच्च न कर्म्मयुक्तं । इदानीं ननु इष्टानिष्टसंयोगवियोगरूपप्रयोजनार्थिताभावेऽपि विदुषः स्वर्गकामो यजेतेति शास्त्रेणैव साध्यत इत्याशङ्क्य स्वभावतः प्राप्तप्रयोजनार्थित्वानुवादेन तदुपायमात्रं शास्त्रेण बोध्यते न तु साध्यते । अन्यथा अशास्त्रज्ञानां तदर्थिता न स्यादित्याह । न चेष्टेति । अत्र चिकीर्षाशब्देन फलेच्छामात्रमुच्यते न तु कर्त्तुमिच्छा फले तदयोगादिति । ननु कृताकृतसम्बन्धित्वं तद्विपरीतञ्च विरुद्धत्वान्न बोधयति चेच्छास्त्रं तर्हि कृताकृतासम्बन्धित्वमेव मा बोधीदित्याशङ्क्य तस्य मानान्तरासिद्धत्वेनावश्यं शास्त्रबोध्यत्वे वाच्ये तद्विपरीतस्य मानान्तरसिद्धस्य न शास्त्रबोध्यत्वं विरुद्धत्वादित्याह । यद्धीति । तच्चेदिति निश्चयार्थे कृते सतीदं कृतमिदं कर्त्तव्यमिति भावविरोधीत्यर्थः । कर्त्तव्यता

ऐ॰भा॰ विरोधादात्मज्ञानं शास्त्रेण कृतं कथं तद्विरुद्धकर्त्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तम इव भानौ । न बोधयत्येवेति चेन्न । स म आत्मेति विद्याऽऽत्मज्ञानं ब्रह्मेति चोपसंहारात् । तदात्मानमेवावेत् तत्त्वमसीत्येवमादिवाक्यानां तत्परत्वात् । उत्पन्नस्य ब्रह्मात्मविज्ञानस्याबाध्यमानत्वादनुत्पन्नं भ्रान्तं वेति शक्यं वक्तुं । त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत् । न । नाकृतेनेह कश्चनेति स्मृतेः । य आत्मविद्विद्वान् ब्रह्म व्युत्थानमेवमेव कुर्या-

---

टी॰ तत्त्यागमित्यर्थः । विध्यभावेन वेदान्तानामसत्यभूतात्मबोधकत्वमित्याशङ्क्य पुरुषस्य कर्त्तव्याभिमुखीकरणार्थत्वाद्विधेरिष्टात्मश्रवणाभिमुखीकरणार्थं विधिस्वरूपस्यार्थवादस्य सत्त्वात् स्वरूपबोधकस्य तत्परत्वाभ्युपगमाच्च नैवमित्युत्तरमाह । न बोधयत्येवेत्यादिना उपसंहारादित्यन्तेन । तत्स्वरूपवितमात्मा वा इदमित्याद्युपक्रमादितात्पर्यलिङ्गं सूचयति । प्रानोत्पत्त्यनुवादिकाया एव श्रुतेर्बलात्पश्चादुत्पत्तिशङ्का न कार्य्येत्याह । तदात्मानमिति ॥ तदिति जीवरूपेणावस्थितं ब्रह्मेत्यर्थः ॥ छान्दोग्यवाक्यमेवमेवेति वदन् श्रुतिसामान्यन्यायं दर्शयति । तत्त्वमसीति ॥ अनेन तत्त्वस्य विषयाविति वाक्यभेदोऽप्युपलक्ष्यते । अयमात्मा ब्रह्मेत्यादिशब्दार्थः । कर्म्मात्मबोधककर्म्मकाण्डविरोधादुत्पन्नमपि ज्ञानं भ्रान्तमित्याशङ्क्य तस्य यथा प्राप्तकर्त्तात्मानुवादेनोपायमात्रपरत्वात् वस्तुपरवेदान्तजन्यज्ञानबाधकत्वमित्याह । उत्पन्नस्येति । नानुत्पन्नमिति वाक्यश्रवणानन्तरमकर्त्रात्माहमिति ज्ञानस्यानुभवसिद्धत्वाद्ब्रह्माहमकर्त्तेति विपरीतज्ञानादर्शनाच्च नोभयं वक्तुं शक्यमित्यर्थः । विदुषः प्रयोजनस्याभावान्न कर्म्मणि प्रवृत्तिरित्युक्तं । तर्हि तत्त्यागेऽपि प्रयोजनाभावात् तत्रापि न प्रवृत्तिः स्यादिति शङ्कते । त्यागेऽपीति । तस्य विदुषः कृतेन कर्म्मणार्थो नास्ति । अकृतेन कर्म्माभावेनापीह लोकेऽर्थो नास्तीति गीतासु स्मरणात् ।

ऐ॰भा॰ दिति । तेषामप्येष समानो दोषः । प्रयोजनाभाव इति चेन्न । अक्रियामात्रत्वाद्व्युत्थानस्य । अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्मः । सर्व्वप्राणिनां तद्दर्शनात् । प्रयोजनतृष्णया च प्रेर्य्यमाणस्य वाङ्मनःकायैः प्रवृत्तिदर्शनात् । सोऽकामयत जाया मे स्यादित्यादिपुत्रवित्तादि पाङ्क्तलक्षणं काम्यमेवेति । उभे ह्येते साध्यसाधनलक्षणे एषणे एवेति वाजसनेयिब्राह्मणेऽवधारणात् । अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्त-

---

व्या॰ त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेदित्यन्वयः । शङ्का-मेव विवृणोति । य आऽऽदिति । कर्म्मत्यागस्य व्यापारात्मकत्वे व्यापारस्य क्लेशात्मकत्वात्तदनुष्ठानं प्रयोजनापेक्षितं स्यात् । न त्वेतदस्ति किन्तु क्रियाभावमात्रमौदासीन्यरूपं । तस्य च स्वाभाव्यरूपत्वात्स्वत एव प्रयोजनत्वान्न प्रयोजनान्तरापेक्षत्वमिति परिहरति । नेति । त्यागस्यान्यव्यापारहेतुजन्यत्वाभावान्न व्यापारत्वमिति वक्तुं अन्यत्र व्यापारहेतुमाह । अविद्येत्यादिना । यद्वा विदुषः कथं यत्नं विना मुख्यामौदासीन्यमात्रेण सिद्ध्यतीत्याशङ्क्य क्रियाहेत्वभावात् क्रियाभाव इति वक्तुं तद्धेतुमाह । प्रयोजनस्य भाव इति । प्रयोजनस्य तृष्णेत्यर्थः । तस्या वस्तुधर्म्मत्वे विदुषोऽपि तृष्णा स्यादिति तन्निषेधति । न वस्तुधर्म्म इति । न वस्तुस्वभाव इत्यर्थः । वस्तुधर्म्मत्वे हि विदुषामविदुषां सुषुप्तिमूर्च्छितादीनां सा स्यान्न त्वेतदस्ति । तत्र हेतुमाह । सर्व्वेति । तद्दर्शनादिति पाठे वस्तुस्वभावाज्ञानिनां गोपालादीनामपि तृष्णादर्शनान्न वस्तुधर्म्म इति कथञ्चिद्योज्यं । तृष्णाया अविद्याजन्यत्वमुक्त्वा तस्या व्यापारहेतुत्वमाह । प्रयोजनेति । दर्शनादिति पञ्चमी । अविद्याकामदोषनिमित्ताया इत्युत्तरत्र हेतुत्वेन सम्बध्यते । न केवलं दर्शनमेव किन्तु श्रुतिरप्यस्तीत्याह । सोऽकामयतेत्यादिना । उभे ह्येते एषणे एवेति

ऐ०भा० लक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्तिः । अभावादक्रियामात्रं व्युत्थानं न तु यागादिवदनुष्ठेयरूपं भावात्मकं तच्च विद्यावत् पुरुषधर्म्म इति न प्रयोजनमन्वेष्टव्यं । न हि तमसि प्रवृत्तस्योदिते आलोके यद्गर्त्तपङ्ककण्टकाद्यपतनं तत्किंप्रयोजनमिति प्रश्नार्हं व्युत्थानं तर्ह्यर्थप्राप्तत्वात् चोदनार्थं इति । गार्हस्थ्ये चेत् परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्व्वत आसनं न ततोऽन्यत्र गमनमिति चेन्न । काममयुक्तत्वाद्गार्हस्थ्यस्य । एतावान् वै काम इति । उभे ह्येते

---

आ० याज्ञेन च पुत्रवित्तादि काम्यमेवेति मन्त्रसन्नेयित्राभ्यामवधारणादित्यन्वयः । पाङ्क्तलक्षणमिति जायापुत्रदैवमानुषवित्तद्वयकर्म्मभिः पञ्चभिर्योगात् पाङ्क्तलक्षणं कर्म्मेत्यर्थः । उभे इत्यस्यार्थमाह । साध्यसाधनेति । एवं क्रियाहेतुम्प्रदर्श्य तदभावादेव विदुषः क्रियाभावोऽयत्नसिद्ध इत्याह । अविद्याकामेति । पाङ्क्तलक्षणाया इति जायापुत्रदैववित्तमानुषवित्तकर्म्मभिः पञ्चभिर्लक्ष्यते साध्यत इति वैदिकी प्रवृत्तिः पाङ्क्तलक्षणेत्युच्यते । पञ्चसङ्ख्यायोगेन गौण्या वृत्त्या पङ्क्तिच्छन्दःसम्बन्धोपचारात् पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ इति श्रुतेरित्यर्थः । पाङ्क्तलक्षणाया इत्यनन्तरमनुपपत्तिरित्यनुषङ्गः । व्युत्थानमित्यनन्तरमयत्नसिद्धमिति शेषः । एवञ्च क्रियाभावस्यौदासीन्यात्मकस्य पुरुषस्वभावत्वेनायत्नसिद्धत्वे सति न प्रयोजनापेक्षेत्याह । तच्चेति । पुरुषधर्म्म इति पुरुषस्वभाव इत्यर्थः । अज्ञानकार्य्यस्याज्ञाननिवृत्तौ अयत्नत एव निवृत्तिरित्यत्र दृष्टान्तमाह । न हीति । व्युत्थानस्य पुंव्यापाराधीनत्वाभावे विधेरवकाशाद्विदुषो नियमेन व्युत्थानं न सिद्ध्यतीति शङ्कते । व्युत्थानं तर्हीति । ततोऽन्यत्र गमनमिति पारिव्राज्यस्वीकार इत्यर्थः । किं गार्हस्थ्यशब्देन गृहस्थोऽहमित्यभिमानपुरःसरं पुत्रविद्याद्यभिमान उच्यते उत गृहस्थलिङ्गधारणं । नाद्यः । विद्ययाऽविद्याकार्य्याभिमाननिवृत्तेरित्याह । न कामेति । न द्वितीयः ।

ऐ०भा० गृहस्थे एवेत्यवधारणात्। कामनिमित्तपुत्रवित्तादिसम्बन्धनियमाभावमात्रं। न हि ततोऽन्यत्र गमनं व्युत्थानमुच्यते। अतो न गार्हस्थे एवाकुर्व्वत आसनमुत्पन्नविद्यस्य। एतेन गुरुशुश्रूषातपसोरप्रतिपत्तिर्विदुषः सिद्धा। अत्र केचिद्गृहस्था भिक्षाटनादिभयात् परिभवाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः। भिक्षोरपि भिक्षाटनादिनियमदर्शनात् देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थ-

---

व्या० लिङ्गेऽप्यभिमानराहित्यस्य तुल्यत्वात्। न चैवं पारिव्राज्यलिङ्गेऽप्यभिमानाभावात्तस्याप्यसिद्धिरिति वाच्यं। सर्व्वतोऽभिमानराहित्येन सर्व्वसम्बन्धराहित्यं हि परमहंसपरिव्राजोपलक्षणं न लिङ्गधारणं। न लिङ्गं धर्मकारणमिति स्मृतेः। तथा च लिङ्गेऽप्यभिमानशून्यस्य पारिव्राज्यं सिद्धमित्याह। कामनिमित्तेति। गार्हस्थ्य इत्यभिमानात्मक इत्यर्थः। तर्हि गुरुशुश्रूषादावप्यभिमानी न स्यादित्याशङ्क्येष्टापत्तिरित्याह। एतेनेति। ननु पुत्रादिसम्बन्धनियमराहित्येऽपि सम्भवे देहधारणार्थिनो भिक्षोः परिग्रहवर्ज्जनार्थो भिक्षाटनादिरेवेति नियमोऽङ्गीक्रियते। तथा गृहस्थस्याप्यभिमानशून्यस्यैव सतो देहधारणार्थं गृह एवावस्थानं न भिक्षुत्वविशेषादिति प्रश्ने। अत्र केचिद्गृहस्था इति। तेषां न न्यायो मूलं किन्तु इष्टमयापितादिकमेव मूलमित्युपहसत्याह। भिक्षाटनादीति। परिभवः पामरैः क्रियमाणस्तिरस्कारः। सूक्ष्मेति काका व्यतिरेकेण स्थूलदृष्टय इत्यर्थः। भिक्षाटनादीत्यादिशब्देन श्मशानवासितमयाचितमित्यादयो गृह्यन्ते। देहधारणमात्रार्थिनो भिक्षोरिति पूर्व्वेणान्वयः। सिद्धान्ती तस्यैवम्भूतस्य स्त्रीपरिग्रहोऽस्ति वा न वेति विकल्प्याद्ये दूषणमाह। न स्वेति। स्वपदविशेषणशब्देन स्त्रीविशेषो गृह्यते। न द्वितीयः। स्त्रीपरिग्रहवत एव गृहपरिग्रहाधिकारात्। तदभावेऽर्थाद्-

ऐ॰भा॰ मशनाच्छादनमात्रमुपजीवतो गृह एवास्तामन-
मिति। न स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादि-
त्युक्तोत्तरमेतत्। स्वगृहविशेषपरिग्रहाभावे च शरीरधा-
रणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावे
ऽर्थाद्भिक्षुत्वमेव। शरीरधारणार्थायां भिक्षाटनादिषु प्र-
वृत्तौ यथा नियमो भिक्षोः शौचादौ च तथा गृहिणोऽपि
विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्याव-
ज्जीवादिश्रुतिनियुक्तत्वात् प्रत्यवायपरिहारार्थेति। एत-

---

आ॰ स्वपरिग्रहनिवृत्तेः। तदभावे प्रकारान्तरेण जीवनासिद्धेरर्था-
द्भिक्षाटनादिनियम एव सिद्ध इत्याह। अथेति॥ न च पुत्रा-
दिपरिगृहीतेन जीवनमस्त्विति युक्तं। तेषामपि स्वस्वत्वेन सम्बन्धा-
भावे स्वकीयस्यापि परकीयद्रव्यतुल्यत्वेन तथापि भिक्षुत्वनियमा-
दिति। अन्ये तु भिक्षोरपि भिक्षाटनादौ सप्तागारान् सङ्कल्पा-
नित्यादिनियमः। शौचादौ च चातुर्गुण्यादिनियमस्य प्रत्यवायप-
रिहारार्थं यथेष्यते तथा यावज्जीवादिश्रुतिवशात् प्रत्यवायपरि-
हारार्थं नित्यकर्मस्वपि नियमेन प्रवृत्तिरित्याऽऽशङ्कामनुवदति। शरी-
रधारणार्थायामिति॥ अकुर्व्वत एव गृहेऽवस्थानं पूर्व्वमते
प्रसक्तं। अस्मिन्मते त्वग्निहोत्राद्यनुष्ठानमपि कर्त्तव्यमिति गम्यते।
तथेति॥ पूर्व्वम् परिग्रहस्याकर्थो भिक्षाटनादिविषयो शर-
रीरधारणप्रयोजनो नियमो दृष्टान्तत्वेनोक्तः इह तु स भिक्षा-
टनादिगतसप्तागारत्वादिविषयो दृष्टार्थो दृष्टान्तत्वेनोक्त इति
भेदं सूचयति। एतदिति॥ तस्य सर्व्वनियोक्त्रीश्वरात्मत्वाच्च न
नियोज्यत्वमित्याद्युक्तमित्याह। अप्रयवेति॥ तर्हि तच्छ्रुतेरप्रामा-
ण्ये भिक्षाटनादिनियमविधेरपि तत् स्यादित्यभिप्रायेण शङ्कते।
यावज्जीवेति॥ अविदुषि नियोज्यं तत् प्रामाण्यं घटत इति
नोक्तदोष इत्याह। नेति॥ तदुक्तप्रतिबन्धी परिहर्त्तुमनुव-
दति। यत्त्विति। दूषयति। तत्प्रवृत्तेरिति। आचमनविधिनाऽप-

ऐ०भा० न्नियोगाविषयत्वेन विदुषः प्रत्युतमप्यङ्गनियोज्य-
त्वाच्चेति । यावज्जीवादिनित्यचोदनानर्थक्यमिति चेन्न ।
अविद्वद्विषयत्वेनार्थवत्त्वात् । यत्तु भिक्षोः शरीरधारण-
मात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं तत् प्रवृत्तेर्न प्रयोजकं ।
आचमनप्रवृत्तस्य पिपासापगमवन्नान्यप्रयोजनार्थत्वमवग-
म्यते । न चाग्निहोत्रादीनान्तदर्थप्राप्तप्रवृत्तिनियतत्वोप-
पत्तिः । अर्थप्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न

---

आ० मनप्रवृत्तस्यार्थिको यः पिपासापगमस्तस्य तथा नान्यप्रयोजना-
र्थत्वं प्रयोजनम् प्रत्युतक्तदर्थत्वं नाचमनप्रवृत्तिप्रयोजकत्वं । तद्व-
ज्जीवनार्थं भिक्षादौ प्रवृत्तस्य यत्तत्र नियमः स न भिक्षादिप्रवृत्तेः
प्रयोजक इत्यर्थः । एतदुक्तं भवति नियोज्यत्वाभावात् किल ब्रह्म-
विदो नियमविध्यनुपपत्तिराशङ्क्यते । तत्र युज्यते । कथं नियोज्यो
हि नियोगसिध्यर्थमपेक्ष्यते । नियोगश्च प्रवृत्तिसिध्यर्थः । प्रवृत्तिश्चे-
दन्यतः सिद्धा किं नियोगेन । अतएव दर्शपूर्णमासनियोगादेवा-
वघातनियमेन प्रवृत्तिसिद्धौ तत्र न पृथक् नियोगोऽङ्गीक्रियते ।
तदभावे च न नियोज्यापेक्षेति । ब्रह्मविदो नियोज्यत्वाभावेऽपि
न नियमविध्यनुपपत्तिरिति । अग्निहोत्रादिप्रवृत्तेस्तु अन्यतोऽसि-
द्धत्वेन तद्विधित एव तत्र प्रवृत्तेर्वक्तव्यत्वेन तत्सिध्यर्थं नियोगो
वाच्यो तस्य तत्र नियोज्यापेक्षेति वैषम्यमाह । न चाग्निहोत्रेति ।
नियमविधौ नियोज्यानपेक्षायामपि तस्य बोधात्मकत्वात् प्रयो-
जनापेक्षा वाच्या । तदभावान्न नियमः सिध्यतीति शङ्कते । अर्थ-
प्राप्तेति । तन्नियमस्यापि पूर्ववासनावशादेव प्राप्तत्वात्तस्यापि न
नियमविधेरवकाशो येन प्रयोजनापेक्षा स्यादिति परिहरति ।
न तदिति । यद्यपि नियतेन वाऽनियतेन वा भिक्षाटनादिना
जीवनं सिध्यति तथापि विद्योत्पत्तेः पूर्वं विद्यासिद्ध्यर्थं नियम-
स्यानुष्ठितत्वात्तद्वासनाप्राबल्याद्विद्योत्पत्त्यनन्तरमपि नियम एव
प्रवर्त्तते । नानियमे तद्वासनानां नियमवासनाभिरत्यन्तमभि-
भूतत्वेन पुनस्तदुद्बोधस्य तत्साध्यत्वात्तत्राप्न न प्रवर्तत इति

ऐ°भा° एवेति चेन्न । तन्नियमस्य पूर्व्वप्रवृत्तिसिद्धत्वात्तदति-
क्रमे यत्नगौरवादर्थप्राप्तस्य च व्युत्थानस्य पुनर्व्वचनाद्वि-
दुषः कर्त्तव्यत्वोपपत्तेः । अविदुषाऽपि मुमुक्षुणा पारि-
व्राज्यं कर्त्तव्यमेव । तथा च शान्तो दान्त इत्यादिवचनं
शमदमादीनामात्मदर्शनसाधनानामन्याश्रमेष्वनुपपत्तेः ।
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्ट-
मिति च श्वेताश्वतरे विज्ञायते । न कर्म्मणा न प्रजया

---

आ° नियमोऽप्यर्थसिद्ध इत्यर्थः । एतेन प्रत्यवायपरिहारार्थत्वमपि
निषेधानुष्ठानस्य निरस्तं तस्य विदुषः प्रत्यवायाप्रसक्तेरिति ।
एवमनुष्ठेयस्य व्युत्थानस्य विधिं विना स्वतः प्राप्तत्वे सति तत्कर्त्तव्य-
ताविधिमपि विदित्वा व्युत्थायेत्यादिकमनमोदते विद्वानित्याह ।
अर्थप्राप्तस्येति । विधितः कर्त्तव्यत्वोपपत्तेरित्यर्थः । न च विधेः
प्रयोजनाभावेऽप्रवर्त्तकत्वादिति वाच्यं । प्रैषोच्चारणाभयदाना-
दिवैधमुख्यप्राप्त्यर्थत्वेन विधेरर्थवत्त्वात् । न च तस्यापि वैयर्थ्यं
शङ्क्यं । विदुषि परमहंसे लोकसङ्ग्रहार्थत्वात् । तस्य तु सङ्ग्रहस्य
पूर्व्वाभ्यस्तमैत्रीकरुणादिवासनाप्राबल्येन प्रवृत्तिविधोपदेशादावेव
प्रयोजनाभावेक्षणात् । यद्वा प्रारब्धकर्म्मोत्थितदेहेन्द्रियादि-
प्रतिभासेनाविद्यादितथावज्जीवादिश्रुतिजनितकर्म्मकर्त्तव्यताभ्र-
मौ तन्निवर्त्तते न वा विदुषो व्युत्थानविधेरर्थवत्त्वोपपत्तेः ।
एवं विदुषो व्युत्थानप्रसाधनेन विद्याया अकर्म्मनिष्ठत्वं सा-
धितं । तेनैव च तस्याः कर्म्मासम्बन्धोऽप्यर्थात् साधितः । इदानीं
विविदिषोरपि व्युत्थानम् प्रसाधयन् विद्यायाः कर्म्मनिष्ठत्वं कर्म्म-
सम्बन्धित्वञ्च दूरादपास्तमित्याह । अविदुषापीति । तत्र श्रुति-
माह । तथा चेति । उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवा-
त्मानम् पश्येदिति श्रुतिशेषः । तत्रोपरतशब्देन सन्न्यासो विहित
इति भावः । शमादिसाधनानां पौष्कल्येनानुष्ठानस्य गृहस्थादि-
ष्वसम्भवात्तद्विधिनाप्यर्थादाक्षिप्यते । सन्न्यास इति । श्रुतार्था-
पत्तिमाह । शमादीनाञ्चेति । चशब्द उपरतशब्दसमुच्चयार्थः ।

ऐ॰भा॰ धनेन त्यागेनैके अमृतत्वमानशुरिति च । ज्ञात्वा नैष्कर्म्यमाचरेदिति स्मृतेः । ब्रह्माश्रमपदे वसेदिति च । ब्रह्मचर्यादिविद्यासाधनानाञ्च साकल्येनात्याश्रमिषूपपत्तेर्गार्हस्थ्ये सम्भवात् । न चैवमसमस्तं साधनं कस्यचिदर्थस्य साधनायालं । यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्म्माणि तेषां परं फलमुपसंहृतं । देवतात्मगमनं संसारविषयमेव । यदि कर्म्मिण एव परमात्मज्ञानमभविष्यत् संसारवि-

---

आ॰ नेदं विवक्षितम् । तस्य साधनविधिविषयत्वात् किन्तु विविदिषुविषयमिति वक्तुमात्मदर्शनसाधनानामित्युक्तं । अत्याश्रमिष्व इति ब्रह्मचर्यादीन् हंससन्न्यासान्तानाश्रमधर्म्मानत्याश्रमानतिक्रम्य वर्त्तते परमहंस इति । सोऽत्याश्रमशब्देनोच्यत इति सन्निधिरत्र प्रतीयत इत्यर्थः । ऋषिसङ्घजुष्टं मन्त्रसमूहैर्वाऽऽत्मिसमूहैर्वा सेवितं सत्त्वं शिवायेत्यर्थः । न कर्म्मणेति त्यागस्य साध्यादमृतत्वसाधनत्वाभावेनामृतत्वसाधनं ज्ञानं त्यागेनानशुः व्याप्तवन्त इत्यभिधानेन ज्ञानसाधनत्वे त्यागोऽत्र विहित इत्यर्थः । ज्ञात्वेति आपाततो मया ज्ञाता निरवद्यं नैष्कर्म्यं कर्म्मत्यागरूपं सन्न्यासमाचरेदिति स्मृत्यर्थः । ब्रह्मेति ज्ञानसाधनीभूत आश्रमो ब्रह्माश्रमः सन्न्यास इत्यर्थः । किञ्च एकाकी यतचित्तात्मा इत्याद्युपक्रम्य ब्रह्मचारी व्रते स्थितः । मनः संयम्य मच्चित्तो युक्त आसीत मत्पर इत्यन्तेन ब्रह्मचर्यादिसाधनविधिवशादप्यत्याश्रमविधिरित्याह । ब्रह्मचर्यादीति । ननु गृहस्थस्यापि ऋतुकालमात्रगामित्वलक्षणं ब्रह्मचर्यं कदाचिद्ध्यानकाले एकाकित्वञ्च सम्भवतीत्याशङ्क्य तस्यायुक्तत्वात्ततो ज्ञानासिद्धेर्ध्यानकाले पत्नीसम्बन्धाप्रसक्तेस्तद्विधिवैयर्थ्याच्च नैवमित्याह । न चेति । यतो न कर्म्मिनिष्ठत्वं कर्म्मसम्बन्धत्वज्ञानस्येत्यर्थः । यत्तु कर्म्म स्वफलेन सह स्वयं प्रत्यगात्मज्ञानं प्रारभत इत्यादिना कर्म्मसम्बन्धित्वमुक्तं तत्राह । यद्विज्ञानेति । तथा पूर्वोक्तकर्म्मसम्बन्धि ज्ञानं संसारफलकमन्यदेव तथो-

ऐ॰भा॰ यथस्यैव फलस्योपसंहारो नोपापत्स्यत् । अङ्गफलत्वादिति चेन्न । तद्विरोधात्मवस्तुविषयत्वात् । आत्मविद्याया निराकृतसर्वनामरूपकर्मपरमार्थात्मवस्तुविषयं ज्ञानममृतत्वसाधनं । गुणफलसम्बन्धे हि निराकृतसर्वविशेषात्मवस्तुविषयत्वं ज्ञानस्य न प्राप्नोति तथानिष्टं । यत्र त्वस्य सर्वमात्मैवाभूदित्यधिकृत्य क्रियाकारकफलादिसर्वव्यवहारनिराकरणाद्विदुषः । तद्विपरीतस्याविदुषो यत्र हि द्वैतमिवेत्युक्त्वा क्रियाकारकफलरूपस्यैव संसारस्य

---

टी॰ प्रसंग्रस्तमिति न तत्परमात्मज्ञानमित्यर्थः । ननु पूर्वोक्तमेव परमात्मज्ञानं तच्च कर्मसम्बन्ध्येवेत्याशङ्क्य क्रियाकारकफलत्वेनोपसंहारात्परमात्मज्ञानस्य च मुक्तिफलकत्वान्न तु तत्परमात्मज्ञानमित्याह । यदि कर्म्मिण एवेति । कर्म्मिनियतत्वेनोक्तज्ञानमेव परमात्मज्ञानं चेदित्यर्थः । परमात्मज्ञानाङ्गभूतपृथिव्यग्न्यादिदेवताज्ञानस्य तत्संसारफलं नाङ्गिनः परमात्मज्ञानस्येति । न तस्य मुक्तिफलत्वविरोध इति शङ्कते । अङ्गेति । परमात्मज्ञानस्याङ्गसम्बन्धफलसम्बन्धादिसर्वविशेषरहितनिर्विशेषवस्तुविषयत्वान्न तस्याङ्गादिसम्बन्धित्वं येन तदङ्गविषयत्वं फलस्य स्यादिति परिहरति । न तदिति । तदेव स्पष्टयति । निराकृतेत्यादिना । तथानिष्टमिति आत्मा वा इदमित्यादेरथमादिनिर्दिष्टात्मनो निर्विशेषत्वसिद्धेरित्यर्थः । वाजसनेयिब्राह्मणे च परात्मविदः सर्वसम्बन्धशून्यत्वमुक्त्वा अविदुषः संसारफलत्वोक्तेश्चेह संसारफलस्यातीतस्य ज्ञानस्य परमात्मज्ञानत्वं वक्ष्यमाणस्य निर्विशेषवस्तुविषयस्यैव परमात्मज्ञानत्वं मुक्तिफलत्वमेवेत्याह । यत्रेत्यादिना । तथेहार्थोतिवाक्ये फलपदद्वयपाठे एकं पदं मिथ्यात्वार्थं निष्फलत्वादपि संसारविषयं संसारान्तर्गतमिति वक्तुं । एवं कर्मासम्बन्धित्वं ज्ञानस्योक्त्वा यावज्जीवादिश्रुतेः कर्मत्यागो न सम्भवतीति यत्पूर्व-

ऐ०भा० दर्शितत्वाच्च वाजसनेयिब्राह्मणे तथैवाय ४।१।५

संसारविषयं यत्फलमशनायादिमद्दुःखात्मकं तत्फलमुपसंहृत्य केवलं सर्वात्मवस्तुविषयज्ञानममृतत्वाय वक्ष्यामीति प्रवर्त्तते। ऋणप्रतिबन्धश्चाविदुष एव। सोऽयं मनुष्यलोकः पुत्रेणैवेत्यादिलोकत्रयसाधननियमश्रुतेः। विदुषश्चर्णप्रतिबन्धाभावो दर्शित आत्मलोकार्थिनः किं प्रजया करिष्याम इत्यादिना। तथैतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेया इत्यादि। एतद्ध स्मैवैतत् पूर्वे विद्वांसोऽग्निहोत्रं न

---

आ० वादिनोक्तं तत्र यावज्जीवादिश्रुतेरविद्वद्विषयत्वमुक्तं। ऋणश्रुतेरिदानीं गतिमाह। ऋणेति। ऋणस्यानपाकृतस्य मनुष्यादिलोकप्राप्तिं प्रति प्रतिबन्धकत्वात्तदर्थिनोऽविदुष एवर्णापाकरणं कर्त्तव्यं न मुमुक्षोः। मुक्तिं प्रति तस्याप्रतिबन्धकत्वादित्यर्थः। ननु ऋणस्य मुक्तिम् प्रत्यपि प्रतिबन्धकत्वमस्तु विशेषाभावात्। ऋणान्यपाकृत्य मोक्षं तु सेवमानो व्रजत्यध इति स्मृतेश्चेत्याशङ्क्याह। सोऽयमिति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन। कर्मणा पितृलोको विद्यया देवलोक इति श्रुतेः। पुत्रादीनां मनुष्यलोकादिहेतुत्वावगमात् पुत्रादिभिरपाकर्त्तव्यानां पुत्राद्यभावरूपाणामृणानां पुत्रादिसाध्यलाभाभावेन साध्यलोकाभावाच्च मुक्तिं प्रति तदृणाभावरूपपुत्रादिसाध्यत्वाभावात्। स्मृतेश्च रागिणां प्रति सन्न्यासनिन्दार्थवादमात्रत्वादित्यर्थः। न केवलमृणन्यायतो मुक्तिम् प्रत्यप्रतिबन्धकत्वं किन्तु श्रुतितोऽपीत्याह। विदुष इति। श्रुतित्रयेण क्रमेण प्रजाध्ययनकर्मणामननुष्ठितानामप्रतिबन्धकत्वं दर्शितं। कावषेया इत्यनन्तरं किमर्था वयमध्येष्यामहे इति शेषो द्रष्टव्यः। अइते। अविदुषश्चेति। यद्यप्यविदुषोऽपि लोकत्रयम् प्रत्येव प्रतिबन्धकत्वात् मुक्तिं प्रति प्रतिबन्धकत्वाभावादृणस्यानपाकरणेऽप्यमुमुक्षोः पारिव्राज्यसम्भवादाश्रमं न सम्भवति तथापि विदुष आहिताग्न्यवस्थामपेक्ष्येयं श्रुतिः। यदा

ऐ॰भा॰ गुरुवासश्चेदिति कौषीतकीनां । अविदुषस्तदृणानपाकरणे पारिव्राज्यानुपपत्तिरिति चेन्न । प्राग्गार्हस्थ्यप्रतिपत्तेर्ऋणित्वासम्भवादधिकारानारूढोऽप्यृणी चेत् स्यात् सर्वस्य ऋणित्वमित्यनिष्टम् प्रसज्येत। प्रतिपन्नगार्हस्थ्यस्यापि गृहाद्वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति । आत्मदर्शनोपायसाधनत्वेनैव्यत एव पारिव्राज्यं यावज्जीवादिश्रुतीनामविद्वन्मुमुक्षुविषये कृता-

---

भा॰ परिहारान्तरं वक्तुमाशङ्का प्रदर्श्या । गृहस्थस्यैवर्णप्रतिबन्धकत्वं तस्यैव तन्निराकरणाधिकारात् । ततश्च गार्हस्थ्यप्रतिपत्तेः प्राक् ब्रह्मचर्य एव मुमुक्षोः पारिव्राज्यं सम्भवतीति परिहरति । नेति ॥ यद्यप्युपनयनानन्तरमेव ऋणनिवर्तनेऽधिकारः सम्भवतीति प्राग्गार्हस्थ्येत्युक्तं तथापि विविदिषासन्न्यासेऽधीतवेदस्यैवाधिकार इति अधीतवेदस्य गार्हस्थ्यप्रतिपत्तेः प्रागिति द्रष्टव्यं । ननु जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्य प्रजया पितृभ्य इति । जायमानमात्रस्यर्णवत्त्वं प्रतीयत इत्याशङ्क्यार्थित्वोक्तेः प्रयोजनं न साक्षात् किञ्चिदस्त्यपि तु ब्रह्मचर्यादिकर्त्तव्यताज्ञापनं । न चाधिकारानारूढस्यर्णं प्राप्नोति । जायमानमात्रस्यासामर्थ्यात् । किञ्च ब्राह्मणग्रहणात् क्षत्रियादेर्ऋणाभावप्रसङ्गः । द्विजात्युपलक्षणत्वेऽधिकार्युपलक्षणत्वमेव न्याय्यं । अतो जायमानपदमधिकारं लक्षयतीति जायमानोऽधिकारी सम्पद्यमान इति तदर्थः । ततश्च ततः प्राक् नर्णसम्बन्ध इत्याह । अधिकारेति ॥ अनिष्टमिति ब्रह्मचारिणोऽप्यृणित्वे ब्रह्मचर्य एव स्थितस्य नैष्ठिकस्य च मोक्षप्रतिबन्धः । स्याच्चानिष्टं । यदहरेवेति सद्यस्त्रीत्यारभ्य तदेव गुरुवासिनामित्यादिना पुराणे मोक्षप्राप्त्युक्तेरित्यर्थः ॥ न केवलं गार्हस्थ्यात् प्रागेव सन्न्याससिद्धिः किन्तु विधिवत्तद्गृहस्थस्यापि तदस्तीत्याह । प्रतिपन्नेति ॥ आत्मदर्शनेति आत्मदर्शने ये उपायाः श्रवणादयस्तत्साधनत्वेनेत्यर्थः । न चर्णश्रुत्या

ऐ॰भा॰ र्थता । छान्दोग्ये च केषाञ्चिद् द्वादशरात्रमग्निहोत्रं
हुत्वा तत ऊर्द्ध्वं परित्यागः श्रूयते । यत्त्वनधिकृतानाम्
पारिव्राज्यमिति । तन्न । तेषाम् पृथगेवोत्सन्नाग्निर्निरग्निको
वेत्यादिश्रवणात् सर्व्वस्मृतिषु चाविशेषेणाश्रमविकल्पः प्रसि-
द्धः समुच्चयश्च । यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्याश्रमा-
र्थत्वे गृहे वने वा तिष्ठतो न विशेष इति तदसत् । व्युत्था-
नस्यैवार्थप्राप्तत्वात्तान्यथावस्थानं स्यात् । अन्यथावस्थानस्य

---

व्या॰ प्रामाण्यविधिविरोधः । तस्याः अवदानार्थवादमात्रत्वेन स्वार्थे
तात्पर्य्याभावात् । अन्यथा तदवदानैरेवावद्यते तदवादानाम-
वदानत्वं इत्यवदानमात्रनिरस्तत्वोक्त्या ब्रह्मचर्य्यादीनामप्यननुष्ठे-
यत्वप्रसङ्गादिति भावः । एवमपि यावज्जीवादिश्रुतिविरोधः
सन्न्यासश्रुतेरित्याशङ्क्याह । यावज्जीवेति । विरक्तमुमुक्षुमात्र-
विषयिण्या सन्न्यासश्रुत्या यावज्जीवादिसामान्यश्रुतेरमुमुक्षुवि-
षये सङ्कोच इत्यर्थः । अग्निहोत्रविषयकयावज्जीवादिश्रुतेर्नान-
यैव सङ्कोचः किन्तु श्रुत्यन्तरेणैव द्वादशरात्रानन्तरमग्निहो-
त्रत्यागविधायिन्या सा पूर्व्वमेव सङ्कोचिता न तां विरोद्धुं प्रभो-
तीत्याह । छान्दोग्य इति । केषाञ्चिच्छाखिनां मते द्वादशरात्रमग्नि-
होत्रमुदिता यजमानः स्वयमग्निहोत्रं जुहुयादथ प्रवसन् तेनैव
सोमेन यजमानो देवताऽभीष्टमनुजानातीति श्रूयत इत्यर्थः । ननु पारिव्रा-
ज्यश्रुतिरप्यनधिकृतविषये सङ्कोचितेत्याह । यत्त्विति । वचना-
न्तरेणैव तेषां तद्विधेर्नाप्यनधिकारिविषयः किन्त्वधिकार्य्येवेति
परिहरति । नेति । उत्सन्नाग्निनिरग्निभ्याम् निरग्निकोऽप्यधिकृत-
योग्यमिति भेदः । अनुपपत्तिसत्वेऽपि पारिव्राज्यश्रुतिर्बली-
यसीत्याह । सर्व्वस्मृतिषु चेति । अत एव ब्रह्मचर्य्यवान् प्रव्रजति ।
गृही मार्गाद्वा । यमिच्छेत्तमावसेत् । ब्रह्मचारी गृहस्थो वा वान-
प्रस्थोऽथ भिक्षुकः । य इच्छेत् परमं स्थानमुत्तमां वृत्तिमाश्रयेदित्या-
दिषु विकल्पः सिद्धः । अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेदित्यादिषु समुच्चय

पे॰भा॰ कामकर्मप्रयुक्तत्वं ह्यवोचाम । तदभावमात्रं व्युत्थानमिति । यथा कामित्वन्तु विदुषोऽत्यन्तमप्राप्तं अत्यन्तमूढविषयत्वेनावगमात् तथा शास्त्रविहितमपि कर्मात्मविदोऽप्राप्तं गुरुभारतयाऽवगम्यते किमुताऽत्यन्ताविवेकनिमित्तं यथा कामित्वं। न ह्युन्मादतिमिरदृष्ट्युपलब्धं वस्तु तदपगमेऽपि तथैव स्यादुन्मादतिमिरदृष्टिनिमित्तत्वादेव । तस्मादात्मविदो व्युत्थानव्यतिरेकेण न यथा कामित्वं । न चान्यत् कर्त्तव्यमित्येतत् सिद्धं। यत्तु विद्याश्चाविद्याश्च

---

व्या॰ सिद्ध इत्यर्थः। एवं विविदिषासन्न्यासं प्रसाध्य पूर्व्वेण साधितविद्वत्सन्न्यासे शङ्कामनुवदति। यत्त्विति। पूर्व्वेण ग्रन्थेन व्युत्थानमिति शङ्का निरस्ता इह तु गृहे वा वने वाऽवस्थानमित्यनियमशङ्कां निराकर्त्तुं सा पुनरनूद्यते। यथेष्टचेष्टत्वमधिकृत्य परिहर्त्तुंर्येति द्रष्टव्यं। यद्यप्यर्थप्राप्तस्यापि पुनर्व्वचनादित्यत्र विद्वद्व्युत्थानस्यापि शास्त्रार्थत्वमुक्तमेव तथाप्यशास्त्रार्थत्वमुक्तमङ्गीकृत्याऽऽह। तदसदिति। यदि व्युत्थानवद्गार्हस्थ्यमप्यर्थप्राप्तं स्यादेवमनियमो न चैतदस्तीत्याह। व्युत्थानस्यैवेति। चान्यदेति गार्हस्थ्ये इत्यर्थः। नन्वन्यथाबाल्यावद्व्युत्थानस्यापि कामादिप्रयुक्तत्वमनुष्ठेयत्वादित्याशङ्क्याह। तदभावेति। कामाद्यभावमात्रमेव व्युत्थानमित्युक्तत्वात्तस्य नानुष्ठेयत्वमित्यर्थः। एवमनियमशङ्कां निरस्य व्युत्थानस्य शास्त्रार्थत्वे यथेष्टचेष्टत्वमाशङ्क्य निराकरोति। यथा कामित्वन्त्विति। चेष्टामात्रमेव कामादिप्रयुक्तं। निषिद्धचेष्टा तु शास्त्रार्थज्ञानशून्यात्यन्तमूढविषया। तदुभयञ्च विदुषो नास्तीति चेष्टामात्रमेवाप्रसक्तं निषिद्धचेष्टा तु दूरापास्तेत्यर्थः। एतदेव विवृणोति। तथेति। तथा चार्थे तथाशब्दः। गुरुभारतयाऽतिक्लेशतया यतोऽवगम्यतेऽतोऽप्राप्तमित्यन्वयः। अविवेकादिनिमित्तापगमे नैमित्तिकापगम इत्यत्र दृष्टान्तमाह। न हीति। उन्माददृष्ट्युपलब्धं गन्धर्व्वनगरादितिमिरदृष्ट्युपलब्धं द्विचन्द्रादीति विवेकः। न चान्यदिति वैदिकं कर्म्मेत्यर्थः।

ऐ॰भा॰ वेदोभयꣳ सहेति । न विद्यावतो विद्यया सहाविद्यापि वर्तत इत्यर्थः । कस्तर्ह्येकस्मिन् पुरुषे एकदैव सह सम्भवेयातामित्यर्थः । यथा शुक्तिकायां रजतं शुक्तिकाज्ञाने एकस्य पुरुषस्य । दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञातेति हि काठके । तस्मान्न विद्यायां सत्यामविद्यासम्भवोऽपि । तपसा ब्रह्म विजिज्ञासस्वेत्यादिश्रुतेः । तपआदि विद्योत्पत्तिसाधनं गुरूपासनादि च कर्माविद्यात्मकत्वादविद्योच्यते । तेन विद्यामुत्पाद्य मृत्युं

---

भा॰ ननु विद्यया अविद्यायाः सहभावस्त्वत्वाद्विदुषोऽपि तन्मूलकामादिकं स्यादेवेति तन्निमित्ता यथेष्टचेष्टा स्यादित्यत आह न यस्मिन्निति । यत्तु विद्याश्चेति वचनं तस्य भावमयं इति । तस्येति शब्दाध्याहारेण वाक्यं योज्यं । एकस्मिन्निति कालभेदेन स्थितयोरप्येकस्मिन् पुरुषे साहित्यमस्त्येवेत्यर्थः । तन्निदं साहित्यं न सत्यं किन्त्वेककाले सहत्वं सत्यमित्याशयः श्रुत्यन्तरे विद्याविद्ययोः साक्षात्साहित्यस्यासम्भवोक्तेस्तमेव साहित्यं मास्त्रमित्याह । दूरमेते इति । विषूचीति विष्वगञ्चने विरुद्धे इत्यर्थः । यस्मिन्नपि मनसि अविद्यया मृत्युं तीर्त्वा तदुत्तरकालं पश्चाल्लोचनया अविद्याया विद्योत्पत्तिहेतुत्वसम्भवात् तयोः कालभेदेनैव सहत्वमित्याह । तपसेत्यादि । यदा गुरूपासनतपसी अविद्येत्युच्यते । तयोश्च श्रवणादिकालेऽनुष्ठेयत्वाद्विद्योत्पत्तिकाले एकस्मिंस्तयोः साहित्यमस्तीत्यर्थान्तरमाह । तपसेति । यस्मिन्नर्थे मन्त्रश्लेषोऽप्यनुगुण इत्याह । तेन विद्यामिति । साक्षादविद्या मृत्युत्वेन मृत्युतरणहेतुत्वानुपपत्तेरविद्याशब्देन तपआदिकमेवोच्यते । तद्विद्यासाधनत्वात् कस्यस इत्यर्थः । अविद्वद्विषयत्वेनेति जिजीविषेदिति जीवितेच्छारूपाविद्याकार्यस्य तस्याः सूचनादित्यर्थः । परिहृतमिति यावज्जीवादिश्रुतिन्यायेन परिहृतप्रायमित्यर्थः । तारा तृतीयस्य चतुर्थपादे सूत्रं नाविशेषादिति सूत्रेण परिहृतमित्यर्थः । असम्भवादिति विरोधेन विद्यया सहासम्भ-

ऐ॰भा॰ काममतितरति। ततो निष्कामस्यात्मैषणो ब्रह्मविद्यया ऽमृतत्वमश्नुत इत्येतमर्थं दर्शयन्नाह । अविद्यया मृत्यु-न्तीर्त्वा विद्ययाऽमृतमश्नुते इति । यत्तु पुरुषायुः सर्व्वंकर्म-णैव व्याप्तं । कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा इति अविद्वद्विषयत्वेन परिहृतं इतरथाऽसम्भवात् । यत्तु ज्ञा-नमपि पूर्व्वोक्तं तुल्यत्वात् कर्म्मणा विरुद्धमात्मज्ञानमिति तत्सविशेषनिर्व्विशेषात्मतया प्रत्युक्तं उत्तरत्र व्याख्याने दर्श-यिष्यामः । अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्श-

---

आ॰ वादित्यर्थः । उदाहृतश्रुतिस्मृत्यसम्भवादिति वा ॥ प्रत्युक्तमिति निर्व्विशेषात्मज्ञानस्य कर्त्रादिकारकोपमर्द्दकत्वेन विरुद्धत्वादुप-मर्द्दं चेति सूत्रेणाविरुद्धत्वं प्रत्युक्तमित्यर्थः । तस्मादप्रमाद्यवि-द्याया अकर्म्मनिमित्तत्वं कर्म्मासम्बन्धित्वं केवलात्मविषयत्वञ्च सिद्ध-मिति पूर्व्वोक्तकर्म्मभिर्व्विद्यया च शुद्धसत्त्वस्य तत एव साधन-चतुष्टयसम्पन्नस्य केवलात्मस्वरूपावस्थानलक्षणमोक्षसिद्ध्यर्थं केव-लात्मविद्याऽऽरभ्यत इत्युपसंहरति । अत इति ॥ नन्वात्मनः सविशेषत्वप्रतीतेस्तद्विरोधात् कथं कैवल्यमित्याशङ्क्य विशेषस्य सर्व्वस्यात्मनि मायाकल्पितत्वान्न वास्तवनिर्व्विशेषत्वविरोध इति तदर्थं माययात्मनः सकाशात् सृष्टिं वक्तुं सृष्टेः पूर्व्वमात्मनो निर्व्वि-शेषत्वं दर्शयितुमात्मा वा इत्यादि वाक्यं । तत्रात्मशब्दार्थ-माह । आप्नोतीति ॥ आत्मेतिपदेन सर्व्वज्ञादिरूप आत्मोच्यत इत्यन्वयः । अदश्च इत्यनन्तरमुच्यत इति शेषः । नन्वात्मशब्देन कथमुक्तलक्षण आत्मोक्त इत्यत आत्मशब्दस्य व्युत्पत्तिब-लाज्ज्ञेय इत्याह । आप्नोतेरिति ॥ वा शब्दश्चार्थे आदानञ्च समु-च्चिनोति । तथा च स्मृतिः । यच्चाप्नोति यदादत्ते यच्चात्ति विष-यानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्तित इति । आ-प्तिर्ज्ञानं व्याप्तिर्बोधश्चेत् सत्तास्फुरणाभ्यां सर्व्वं व्याप्नोतीति सर्व्व-ज्ञत्वं सर्व्वशक्तित्वं बोध्यते । तत्रादानेनोपादानत्वसूचनात् सर्व्व-

## ऋग्वेदीयैतरेयोपनिषत् ॥

ऐ॰उ॰ ॥ ॐ परमात्मने नमः ॥ हरिः ॐ ॥

आत्मा वा इदमेक एवाग्र आसीत्

---

ऐ॰भा॰ सार्थमुत्तरो ग्रन्थ आरभ्यते। आत्मेति। आप्नोतेरत्तेरततेर्वा परः सर्वज्ञः सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽभयोऽद्वयः। वै इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतः सृष्टेः प्रागासीत्। किं नेदानीं स एवैको न कथं तर्ह्यासीदित्युच्यते। यद्यपीदानीं स एवैकस्तथाप्यस्ति विशेषः। "प्रागुत्पत्तेरव्याकृतनामरूपभेद-

---

आ॰ अखिलं। आप्नोतीत्यनेन संबद्धत्वं। अततीत्यनेन त्रिविधपरिच्छेदराहित्यमुच्यत इति। अशनायादिवर्जितत्वादिति विषयादानेन सृष्ट्या च प्रत्यग्भेदबोधत इत्युक्तस्य आत्मपदेनोच्यत इत्यर्थः। अभिव्यक्तनामरूपव्यावर्तनेनात्ममात्रावधारणार्थो वैशब्द इत्याह। वै इति। यदुक्तमिति पूर्वत्र प्राणप्रभृतिप्रजापतिरूपत्वेन यदुक्तमित्यर्थः। यदुक्तेति पाठः साधुः। अत्रेदमितिपदेन प्रत्यक्षादिप्रसिद्धमुच्यते। अग्रे इति विशेषणादासीदिति भूतत्वोक्तेश्च पूर्वमेवात्ममात्रं इदानीं त्वात्ममात्रं न भवति किन्तु पृथक् सदिति प्रतीयत इति नाद्वितीयात्मेति शङ्कते। किं नेदानीमिति। यदस्य मायिकस्य कदाचिदपि स्वतः सत्त्वायोगादात्मनो द्वितीयत्वस्य न विरोध इत्याह। नेति। तर्ह्यात्ममात्रस्येदानीमपि सत्त्वे तस्य भूतत्वोक्तेः का गतिरिति पृच्छति। कथं तर्ह्यासीदिति। इदमुपलक्षणमग्रे इत्यपि कथमिति द्रष्टव्यं। जगतः कारणत्वेऽप्यात्मव्यतिरेकेणाभावो यद्यपि तथापि तथा बोधने बोध्यस्य प्रत्यक्षादिविरोधादद्वयात्ममात्रत्वं बुद्धौ नारोहेत्। अतः प्रागुत्पत्तेरासीदित्युच्यते बोध्यस्य चित्तमनुरुध्य सदपि जगतो नामरू-

ऐ० भा० मात्मभूतं आत्मैकशब्दप्रत्ययगोचरं जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरश्चेति विशेषः। यथा सलिलात् पृथक् फेनं नामरूपव्याकरणभाक् सलिलैकशब्दप्रत्ययगोचरमेव फेनं। यदा सलिलात् पृथङ्नामरूपभेदेन व्याकृतं भवति तदा सलिलं फेनश्चेत्यनेकशब्दप्रत्ययभाक् सलिलमेवेति चैकशब्दप्रत्ययभाक् च फेनं भवति तद्वत्। नान्यत् किञ्चन

---

व्या० प्राभिव्यक्त्यभावमपेक्ष्यैव न त्विदानीमात्मानात्माभावाभिप्रायेणेत्युत्तरमाह। यद्यपीत्यादिना। व्याकृतो नामरूपभेदो यस्मिन्नात्मनि तथाविधात्मभूतमित्यर्थः। आत्मैकशब्दप्रत्ययगोचरमिति यद्यपि प्रागुत्पत्तेर्व्युत्पत्त्यभावेन शब्दप्रत्ययौ तावपि न स्तस्तथापीदानीं तदानीन्तनात्मतत्त्वं बुद्धावुपस्थितः सृष्टिकाले नात्मतत्त्वमिव प्रमाणान्तरे ज्ञात्वा तदानीमात्मैव एवासीदिति वदसि। प्रत्येति चेति। तयोरात्मैकशब्दप्रत्ययौ स्त इति मन्तव्यं। अनेकशब्देति अविवेकिनां घटादिशब्दप्रत्ययगोचरं घटः सच्चित्यात्मशब्दपर्यायसच्छब्दगोचरश्चेत्यर्थः। गोचरशब्दस्य भावप्रधानत्वमङ्गीकृत्य गोचरत्वं यस्येति बहुव्रीहिणा नपुंसकत्वं मन्तव्यं। आत्मैकशब्देति विवेकिनामित्यर्थः। उक्तमर्थं दृष्टान्तेन विशदयति। यथेति। अनात्मशब्दप्रयुक्तविवक्षात् सत्यज्ञानादिशब्दोपलक्षितं तत्त्वज्ञानान्तरूपेऽखण्डैकरस आत्मोपलक्षितः। तस्यैवार्थस्य मठीकरणार्थमेकादिपदानि। तथैव ह्यात्मान्तराभाव उच्यते। एवेत्यनेन वृक्षादाविकत्वेऽपि शाखादिभिर्नानात्ववदेकस्यात्मनो नानात्वाभाव उच्यते इति सजातीयभेदस्वगतभेदनिराकरणार्थत्वेन पदद्वयमित्यभिप्रेत्य विजातीयभेदनिराकरणार्थत्वेन नान्यत् किञ्चनेति पदं व्याचष्टे। नान्यदिति। ननु जडप्रपञ्चस्य कारणीभूता जडा माया वर्त्तत इति कथं विजातीयभेदनिषेध इत्यत आह। मिषदिति। मायायाः सत्त्वेऽपि तदानीं व्यापाराभावादव्यापारवतोऽन्यस्य निषेधः सम्भवतीत्यर्थः। ननु निर्व्यापारापि

ऐ॰भा॰ यथा साङ्ख्यानामनात्मपक्षपाति स्वतन्त्रं प्रधानं । यथा

---

व्या॰ सिद्धत्वेन प्रयोजनाभावेन च तत्प्रतिपादनस्यानुपपत्तेश्च स्पष्टा-
र्थमेव तदर्थः । मिषदित्यनेन स्वातन्त्र्यनिषेधेन स्वतः सत्तानि-
षेधादपि स्पष्टार्थसिद्धेश्च । स्वतः सत्तावत्त्वे स्वव्यापारे स्वातन्त्र्यमेव
स्यात् । न चानेन प्रकारेणेदानीमपि स्पष्टार्थस्यात्माखण्डस्य च
वस्तु स्पष्टत्वादस्य इति विशेषणं व्यर्थमिति वाच्यं । इदानीमात्म-
भिन्नतया पृथक् सत्त्वेन च प्रतीयमानत्वेन तस्य सदसदात्मना-
त्वे बोधिते विरोधप्रतीत्या तस्य शून्यवादोऽपि स्यादिति गुड-
जिह्विकान्यायेनादौ पृथङ्नामरूपानभिव्यक्तिदशायामात्मा-
त्मत्वं बोध्यते । तस्मिन् बोधिते पश्चात्तन्न्यायेनेदानीमपि स्वयमे-
वात्ममात्रत्वं ज्ञास्यतीत्यभिप्रायेणाय इति विशेषणोपपत्तेः । यद्वा
वाजसनेयिके तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुतेः प्राक्कार्यस्या-
नभिव्यक्तनामरूपावस्थाबीजभूताव्याकृतात्मतोच्यते इह त्वात्मना-
त्मता अतः श्रुत्योर्विरोधपरिहारायोपसंहारे कर्त्तव्ये इदा
व्याकृतपदमुपसंक्रियते । तत्र आत्मपदमितीदमग्रे अव्याकृत-
मासीत्तथ सदात्मैवासीदिति वाक्यं सिध्यति । तत्राव्याकृतशब्देन
तम आवीतमग्रा गूढमग्रे । मायां तु प्रकृतिं विद्यादित्यादि
जगद्बीजावस्थायामाद्यादिशब्दप्रयोगात् तमोरूपा मायोच्यते
तत्कार्यस्यापेऽनभिव्यक्तनामरूपात्मकमायात्मकत्वं सिध्यति । न
स्याद्यात्मतादात्म्योक्त्या साङ्ख्यमतवत् स्वतन्त्रत्वनिरासेन तच्च क-
ल्पितत्वं सिध्यति । तयोः कार्यकारणभावाद्यभावेन प्रकारान्तरेण
तादात्म्यानिर्वाहात्तदात्मनोऽखण्डत्वं तद्भिन्नस्य स्पष्टत्वादात्मनः
परिच्छिन्नमानोऽविद्याधिष्ठानत्वेन विवर्त्तोपादानत्वं तस्याध
परिणामित्वञ्च सूचितम्भविष्यति । कार्यस्य स्पष्टात्मार्थमेवाव्याकृ-
तात्मत्वमुच्यते । तस्याप्याव्याकृतस्यात्मतादात्म्येन मायात्वेन च स्पष्टा-
त्वादिदानीन्तु नानभिव्यक्तनामरूपबीजात्मत्वमित्यत इति वि-
शेषणमप्यर्थवत् । तदभिप्रेत्यैव भाष्ये प्रागुत्पत्तेरनभिव्यक्तनामरू-
पभेदात्मभूतमात्मैकशब्दप्रत्ययगोचरं जगदिदानीन्तु व्याकृत-
नामरूपभेदवत्त्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचर-
ञ्चेति विशेष इतोदानीमनभिव्यक्तनामरूपबीजात्ममेवायश-
ब्दस्य व्यावर्त्त्यमुक्तं । न च साक्षादिदानीमेव मायात्मत्वेन स्पष्टा-

ऐ॰भा॰ च काणादानामणवो न तद्वदिहान्यदात्मनः किञ्चि-

---

व्या॰ स्वमुच्यतामिति वाच्यं। इदानीं प्रत्यक्षादिविरोधेन तथा बोधयितु-
मशक्यत्वादित्युक्तत्वादस्माभिरुक्तेः सृष्टेः पूर्व्वमभावेनेदानी-
मेव विद्यमानत्वेन कादाचित्कत्वादपि रज्जुसर्पादिवन्मृषात्वमिति
वक्तुमपि प्रामाण्याद्यवस्थैरास्थिरर्थवतीति न किञ्चिदवद्यं। अथवा ज-
गदधिष्ठानं किञ्चित् सद्रूपं सम्भावयितुमिदमग्र आसीदित्युच्यते।
असम्भाविते तस्मिन्नखण्डलोकोक्तेर्निर्व्विषयत्वं प्रसज्येत। अनेनासच्छ-
शविषाणादेरिव सद्रूपेणोत्पत्त्यसम्भवात् कार्य्यस्य प्रागवस्था सदा-
त्मिका चित्सम्भाविता। तस्याश्च चेतनत्वे कार्य्याकारेण स्वतोऽप्रवर्त्त-
नादिति चेतनाधिष्ठानाङ्गीकारे च गौरवात्। उपादानाधिष्ठान-
त्वयोरेकस्मिन्नेवात्मनि घटसम्भवाच्च चेतनत्वमात्मन्येवेत्यनेन सम्भाव्यते।
एवं सम्भाविते ह्यधिष्ठाने उपादानकारणे चात्मन्यखण्डैकरसत्वं
तस्य वक्तुमेक एव नान्यत्किञ्चनेति पदानि अस्मिन् पक्षे चेदमग्रे
आत्मैवासीदित्यनेन सम्भावितं कार्य्यस्य प्रागुपमर्द्य यदात्मक-
मिदमासीत् स एक एव नान्यत् किञ्चनेत्यखण्डैकरसत्वं विधीयते
इति न कस्यचिदप्यानर्थक्यम्। अत एव छान्दोग्ये सदेव सोम्येद-
मग्र आसीदित्यस्य सद्रूपकारणसम्भावनार्थत्वादेव तत्सिद्ध्यर्थं
तद्धैक आहुरित्यादिना सत्कार्य्यवादो निरस्तः। अन्यथा सिद्धस्य
सतोऽद्वितीयत्वमात्रविवक्षायां तस्याप्रस्तुतत्वप्रसङ्गात्। अस्मिन्नपि
व्याख्याने कारणस्याद्वितीयत्वादिवचनात् तदन्यस्य मृषात्वमपि सि-
ध्यति। कार्य्यांशमपहाय तन्निरूपितं कारणत्वमपि तथेति। तथा-
विधात्मज्ञानान्मुक्तिरपि अनायासा सिध्यतीति न किञ्चिदवद्यं।
दीपिकायान्तु इदमात्मैवासीदिति सामानाधिकरण्यबाधायां
यश्चौरः स स्थाणुरितिवदिदानीं जगदधिष्ठानप्रतिभासेन तत्र
बाधानुपपत्त्या स्थितिकालमपरित्यज्याग्रशब्देन सृष्टेः प्राचीनः
काल उपादीयते। दृश्यप्रपञ्चबाधया चिज्जस्याखण्डैकरसत्वस्य
स्पष्टीकरणार्थमेकादिशब्दा इति न कस्याप्यानर्थक्यमित्युक्तं। तत्रा-
ऽग्रशब्दस्य न प्रयोजनमारोप्य प्रतीतिदशायामेव यश्चौरः स
स्थाणुरित्यादौ बाधदर्शनेनेहापि जगत्प्रतीतिदशायामेव तद्बाध-
नस्य न्याय्यत्वात् सृष्टेः प्रागप्रतीतस्य बाधानुपपत्तेश्च। किञ्च कालत्र-
यनिषेधो हि बाधः प्रागभाव एवेति त्रिविधे बाध एव न स्यात्।

ऐ॰भा॰ जवनो ग्रहीता इत्यादिः । केनाऽभिप्रायेणेत्याह । लोकानम्भःप्रभृतीन् प्राणिकर्मफलोपभोगस्थानभूतान् नु सृजै सृजेयमिति । एवमीक्षित्वाऽऽलोच्य स आत्मा इमाँल्लोकानसृजत सृष्टवान् ॥ २ ॥

---

आ॰ भिप्रायं शङ्कापरिहाराभ्यां स्पष्टीकरोति। नन्विति। तत्र करणाभावेऽपि धियाऽपि कार्य्ये प्रत्येतुमिति विवेकः। तद्रहितस्यापि सार्व्वज्ञ्ये श्रुतिमाह। तथा चेति। अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति मन्त्रशेषः। न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधोऽनुभूयते स्वाभाविकी ज्ञानबलक्रियापि चेत्यादिरादिशब्दार्थः। ननु स्वाभाविकनित्यचैतन्येन कथं कादाचित्केक्षणमिति। अत्र केचित् सर्गादौ प्राणिकर्मभिरीक्षा रूपाकाराऽविद्यावृत्तिरुत्पद्यते। तस्यामात्मचैतन्यम् प्रतिबिम्बितं तदेवेक्षणं तच्चादिकार्य्यत्वात् स्वपरनिर्व्वाहकमिति न तथापीक्षणान्तरापेक्षा सर्व्वैरपि प्रथमकार्य्येऽनवस्थापरिहारायैवमेवेष्टव्यमित्याहुः। अपरे तु प्राणिकर्मवशात् सृष्टिकालेऽभिव्यक्त्युन्मुखीभूतानभिव्यक्तनामरूपावच्छिन्नं सत्स्वरूपचैतन्यमेवोन्मुखस्य कादाचित्कत्वात् कदाचित् कर्म्मेक्षणमित्याहुः। अन्ये त्वीक्षणवाक्यस्य कारणस्य चैतन्यार्थत्वपरत्वादीक्षणे तात्पर्य्याभावाच्च न तत्र भूयानाग्रहः कर्त्तव्य इत्याहुः। नु शब्दो वितर्कार्थ इति मतमभिप्रेत्याह। न्विति। लोडर्थस्य विध्यादेः स्वात्मन्यसम्भवात् लोटो लडर्थत्वमाह। सृजे इति। अहमितीक्षितवानिति पूर्व्वेणान्वयः। ईक्षणस्य पूर्व्वकालीनत्वं वदन् सृष्टिहेतुत्वमाह। एवमिति। १।

ऐ॰ उ॰ अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं

---

ऐ॰भा॰ स्वात्मभूतनामरूपोपादानः सन् सर्व्वज्ञो जगन्निर्मिमीत इति न विरुद्धं । अथवा यथा विज्ञानवान्मायावी निरुपादान आत्मानमेवात्मान्तरत्वेनाकाशे गच्छन्तमिव निर्मिमीते तथा सर्व्वज्ञो देवः सर्व्वशक्तिर्महामाय आत्मानमेवात्मान्तरत्वेन जगद्रूपेण निर्मिमीत इति युक्ततरं । एवञ्च सति कारणकार्य्योभयासद्वादादिपक्षाश्च न प्रसज्यन्ते सुनिराकृताश्च भवन्ति । स इमाँल्लोकानसृजतेत्याह ।

---

आ॰ आत्मन एवोपादानत्वं । माया तु सहकारिमात्रमित्यभिप्रेत्यात्मनि चैवं विचित्राश्च हीति द्वितीयस्य प्रथमपादे सूत्रोपष्टम्भेन परिहारान्तरमाह । अथवेति । विज्ञानवानित्याकाशेन गच्छन्तमिव भिन्नमात्मान्तरं दर्शयतीति मायावानित्यर्थः । इदञ्च विशेषणमीश्वरस्य स्रष्टृत्वस्य च शुक्तिरजतादौ विवर्त्ते अदर्शनात् कार्य्यस्य तत्तुल्यत्वेन तदुभयं न स्यादिति शङ्कानिरासार्थं तन्निरासश्च मायाविनिर्म्मिते विवर्त्ते तदुभयदर्शनादिति । निरुपादान इति व्यतिरिक्तोपादानरहित इत्यर्थः । सर्व्वशक्तित्वे हेतुमाह । महामाय इति । आत्मान्तरत्वेनेत्यात्मभिन्नत्वेनेत्यर्थः । युक्ततरमिति इन्द्रो मायाभिः पुरुरूप ईयते मायया त्वन्यदिव भवति बहु स्याम्प्रजायेय, वाचारम्भणं विकारः, मायामात्रमिदं द्वैतमित्यादिबहुश्रुतिसमन्वितत्वादित्यर्थः । एवञ्च सति सत एवात्मनः कारणकार्य्यरूपेणावस्थानात्क्वचिदकारणान्निर्हेतुकमेव कार्य्यमुत्पद्यत इति यदृच्छावादिनां । असदेव कार्य्यमुत्पद्यत इति नैयायिकानां । उभयमप्यसदिति शून्यवादिनां पक्षः । आदिशब्देन सदेव कार्य्यमुत्पद्यत इति साङ्ख्यादीनां परिणामपक्ष उक्तः । असत्कार्य्यपक्षे त्वसतः सत्त्वापत्तिः शशविषाणादेरुत्पत्तिप्रसङ्गश्च दोषः । परिणामवादे च तस्य पूर्व्वमेव कारणे सत्त्वात्कुलालादिकारकव्यापारवैयर्थ्यं पूर्व्वमसत्त्वे कारणस्यैवावस्थान्तरापत्तिलक्षणपरिणामत्वानु-

ऐ॰उ॰ द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः । पृथिवी म-
रोया अधस्ताता आपः॥ २॥

ऐ॰भा॰ अम्भो मरीचीर्मरमाप इति। आकाशादिक्रमेणाण्डमु-
त्पाद्याम्भःप्रभृतीँल्लोकानसृजत । तानम्भःप्रभृतीन् स्वय-
मेव व्याचष्टे श्रुतिः । अदस्तदम्भःशब्दवाच्यो लोकः परेण
दिवं द्युलोकात्परेण परस्तात् सोऽम्भःशब्दवाच्यो लोकः ।
अम्भोभरणात् । द्यौः प्रतिष्ठाऽऽश्रयस्तस्याम्भसो लोकस्य ।
द्युलोकादधस्तादन्तरिक्षं यत्तन्मरीचयः। एकोऽप्यनेकस्था-

व्या॰ प्रपञ्चितः। उत्पद्यमानारम्भपक्षे ततो यथद्वारासिद्धिप्रदोषाद्यनु-
पपत्तिश्च दोषः। उभयासत्त्वे चोभयपक्षोक्तदोषः। ते विवर्तवादेन
प्रसज्यन्त इत्यर्थः। यदास्माभिर्विवर्तवादस्याङ्गीकारात् परिणामा-
दिपक्षानङ्गीकारे पदपदार्थाङ्गीकारलक्षणो दोषो न सम्भवतीत्याह।
एवच सतीति। दुर्निराकरत्वेऽपि विवर्तवादस्यैव परिग्रहे पक्षा-
न्तरेषु दोषबहुत्वादद्वितीयात्मनस्तद्विपरीतप्रपञ्चाकारताभिधा-
यिन्या बहु स्यामिति श्रुत्या विवर्तवादस्यैव परिग्रहीतत्वेन पक्षा-
न्तराणां श्रुतिबाह्यत्वाच्च ते निरस्ता भवन्तीत्यर्थः। लोकानां
भौतिकत्वादण्डान्तर्वर्तित्वाच्च भूतसृष्टितत्पञ्चीकरणाण्डसृष्ट्यनन्तरं
तत्सृष्टिरिति गुणोपसंहारन्यायमाश्रित्याह । आकाशादीति ।
स्वयमेव व्याचष्टे श्रुतिः। तेषां लोकेष्वप्रसिद्धत्वादित्यर्थः। द्युलो-
कात्परस्तात् महरादयो लोका यत्र तस्याम्भसो लोकस्याश्रयो
द्युलोकस्ते सर्वे अम्भःशब्देनोच्यन्ते । अम्भसस्तत्र विद्यमानत्वा-
दित्याह । अद इति। अन्तरिक्षं मरीचयः इत्यस्यार्थमाह ।
द्युलोकादिति। मरीचिशब्देन सूर्यकिरणसम्बन्धादन्तरिक्षलोकं
लक्षयित्वा तस्यैकत्वेऽपि प्रदेशभेदाद्बहुवचनं युक्तं इदानीं बहूनां
मरीचीनां [illegible]दानत्वात्कृतबाहुल्यं गङ्गायां घोष इत्यत्र ताच्छ-
ब्दिकत्वमिवेत्याह । मरीचिभिर्वेति। ननु मरीचिशब्दे-
नान्तरिक्षलोकस्वीकारे मरीचिसम्बन्धो निमित्तान्तरमुच्यत इति

ऐ॰भा॰ न भेदत्वादङ्गवचनभाक्। मरीचिभिर्वा रश्मिभिः सम्ब-
न्धात् पृथिवी मरो म्रियन्तेऽस्मिन् भूतानीति। या अधस्तात्
पृथिव्यास्ता आप उच्यन्ते। आप्नोतेर्लोकाः। यद्यपि पञ्च-
भूतात्मकत्वं लोकानां तथापि अब्बाहुल्यादम्भआदिनामभिरेवाम्भो
मरीचीर्मरमाप इत्युच्यन्ते ॥ २ ॥

---

था॰ प्रसिद्धमित्यर्थः। स्वर्द्युलोकस्य निमित्तस्य पूर्वमनुक्तत्वेन विवक्षायर्थस्तस्य
अम्भाधेर्मादाय उच्यते इत्यधोलोकवासिभिर्व्यावृत्तमान-
त्वादाप्नोतेर्धातोरर्थयोगात्ते लोका आप इत्युच्यन्त इत्यन्वयः।
ननूक्तानां पञ्चभूतसम्बन्धाविशेषाद्धर्मान्तरेण पृथिव्यादीनामुप-
रितनलोका उच्यन्ते अन्तरिक्षस्य मरीचिव्यतिरिक्तपदार्थान्तरैश्च
मेघादिनापि सम्बन्धात्तेन स लोकः पृथिव्यास्ततोऽधो लोकानाञ्च
मरत्वाम्भस्त्वातिरिक्तगमनादिक्रियान्तरेणैव वक्तव्यतामिति शङ्कते।
यद्यपीति। भूतात्मकत्वमिति भूतसम्बन्धित्वमित्यर्थः। इदमुपल-
क्षणं मेघादिपदार्थान्तरसम्बन्धोऽपि वर्तत इति द्रष्टव्यम्। अम्भ
आदीनामेव तेषु लोकेषु प्राचुर्यात्तैरेव ते लोका व्यपदेश्याः। प्रा-
चुर्येण व्यपदेशा भवन्तीति न्यायादिति परिहरति। तथा-
पीति। अब्बाहुल्यादित्युपलक्षणं मरीच्यादीनामपि बाहुल्या-
दित्यपि द्रष्टव्यम्। अम्भआदिभिरित्यत्रापि मरीच्यादिनामभिरित्यपि
द्रष्टव्यम्। यथा श्रुते अबात्मकत्वेनाम्भआदिशब्दस्य तत्तल्लोकानुक्तेर्वा-
नामतो अत्रानुपपत्तेर्मरीच्यादीनामम्भस्त्वाभावादप्शब्दस्याप्या-
प्तिक्रियार्थत्वेनाप्नोतेरप्नामत्वाभावेनाप्नामभिरिति परिहारानुप-
पत्तेस्तेषूपरितनलोकान् दृष्टिद्वारेणाम्भसस्तत्र दृष्टाभिः साक्षा-
दुपलभ्यते न तु भूतान्तरमिति। अम्भश्चाद्धा अब्बाहुल्यमुपरित-
नलोकानामूर्ध्वलोकगामिप्राण्यपेक्षया अधोलोकगामिनां प्राणिनां
पुरादिषु बाहुल्योक्तिर्वैकभिरापाद्यन्ते अधोलोका इत्यधोलोकेषु त-
त्स्पृष्टत्वादपि बाहुल्यं पृथिव्यामतिशीघ्रं प्राणिनां मरत्वात्तथापि
तत्र बाहुल्यं अन्तरिक्षे तु मरीचिबाहुल्यं प्रति सिद्धमेवेति
शेषं अम्भो मरीचिर्मरमाप इत्यन्ता इत्येतैर्नामभिरुच्यन्ते॥ २॥

ऐ॰उ॰ स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति।
सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् ॥ ३ ॥

---

ऐ॰भा॰ सर्व्वप्राणिकर्म्मफलोपादानाधिष्ठानभूतान् चतुरो लोकान् सृष्ट्वा स ईश्वरः पुनरेवेक्षत। इमे न्वम्भःप्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः। तस्मादेषां रक्षणार्थं लोकपालान् लोकानां पालयितॄन् सृजेऽहमिति। एवमीक्षित्वा सोऽद्भ्य एवाप्प्रधानेभ्यः पञ्चभूतेभ्यो येभ्योऽम्भःप्रभृतीन् सृष्टवान् तेभ्य एवेत्यर्थः। पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्याद्भ्यः समुपादाय मृत्पि-

---

व्या॰ अनात्मा वा इत्युक्तप्रकारेण संसारी मोचयितव्यत्वेन विवक्षितः। असंसारिणो मोक्षानुपपत्तेः। संसारश्च संसरणाधिकरणलोकान् तदुपाधिभूतं लिङ्गशरीरं तदभिमानिनो देवान् तदधिष्ठानं स्थूलशरीरं संसाररूपाशनायादीन् तदभिमानिनं नन्वेतावन्मात्रेणैव नोपपद्यत इति तस्य सृष्टिमपवादयत्यन्तेन ग्रन्थेन क्रमेण वक्ष्यन् संसरणाधिष्ठानलोकसृष्टिमुक्त्वा तत्पालयितृदेवतासृष्टीच्छयद्वारा समष्टिस्थूलशरीरस्य समष्टिलिङ्गशरीरस्य तदभिमानिनो देवानाञ्च सृष्टिं वक्तुमारभते॥ स ईक्षतेति॥ तद्व्याचष्टे। सर्व्वप्राणीति॥ कर्म्मणस्तदुपादानस्य तत्साधनस्य चाधिष्ठानभूतानीत्यर्थः। अप्शब्दस्यानेकार्थत्वान्नुशब्दस्तु शब्दार्थः। वैलक्षण्यं लोकानामाह। इमे न्विति॥ अहमितीत्यस्येक्षतेति पूर्व्वेणान्वयः॥ समष्टिलिङ्गशरीरतदभिमानिनां विराडवयवजन्यत्वात्तदर्थं विराट्सृष्टिमाह। एवमीक्षित्वेति॥ यद्यपि लोकोत्पत्तेः पूर्व्वमेवाण्डोत्पत्तिरुक्ता अण्डमुत्पाद्याम्भःप्रभृतीन् लोकानसृजतेति भाष्यकारेण तथापि सैवोत्पत्तिरिहानूद्यते लोकपालसृष्ट्यर्थमिति न विरोध इति भावः। अद्भ्य एवेत्येतत्कारणार्थमाह। येभ्य इति॥ कुलालः पृथिव्याः सकाशान्मृत्पिण्ड-

ऐ॰उ॰ तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतां अक्षिभ्यांश्चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत

---

ऐ॰भा॰ मिव कुलालः पृथिव्या समूर्च्छयत् संमूर्च्छितवान् समपिण्डितवान् स्वावयवसंयोजनेनेत्यर्थः ॥ ३ ॥

तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत् तदभिध्यानं सङ्कल्पं कृतवानित्यर्थः । यस्य ज्ञानमयं तप इति श्रुतेः । तस्याभितप्तस्येश्वरसङ्कल्पेन तपसाभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत । यथा पक्षिणोऽण्डं निरभिद्यत । एवं तस्माद्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्तत तदधिष्ठाताग्निस्ततो वाचो लोकपालः । तथा

---

आ॰ मिवेत्यन्वयः । स्वावयवेति । भूतानां परस्परावयवसंयोजनेनेति श्लिष्टिः संयोगस्तेनेत्यर्थः । ३ ।

विराडुत्पत्तिमुक्त्वा तदवयवेभ्यो लोकपालोत्पत्तिमाह । तं पिण्डमित्यादिना । तपःशब्देनाभिध्यानमभिप्रेतं पापकृच्छ्रे न कृच्छ्रादीत्यत्र श्रुतिमाह । यस्येति । यस्य तपो ज्ञानमेव न कृच्छ्रादीत्यर्थः । ततो वाचो लोकपालोऽग्निर्वागधिष्ठाता निरवर्ततेत्यन्वयः । यद्यपि यागादिकारणत्वात् वपनोद्गतभूतकार्य्यं न मुखादिगोलककार्य्यं तथापि मुखाद्याश्रये तदभिव्यक्तेर्मुखाद्यादित्युक्तं । नासिकाभ्यां प्राण इत्यत्र प्राणशब्देन प्राणवृत्तिसहितं घ्राणेन्द्रियमुच्यते । अधिष्ठानमिति गोलकमित्यर्थः । त्वग्लोमकं लोमेति । लोमसहचरितं स्पर्शनेन्द्रियमुच्यते । ओषधिवनस्पतय इति ओषध्याद्यधिष्ठातृदे-

ऐ॰उ॰ त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ ४ ॥ इति प्रथमः खण्डः ॥ १ ॥

---

ऐ॰भा॰ नासिके निरभिद्येतां। नासिकाभ्यां प्राणः प्राणाद्वायुरिति सर्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति। अक्षिणी कर्णौ त्वक् हृदयमन्तःकरणाधिष्ठानं। मनोऽन्तःकरणं। नाभिः सर्वप्राणनिबन्धनस्थानं। तस्मादपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्याधिष्ठात्री देवता मृत्युर्यथान्यत्र तथा शिश्नं निरभिद्यत

---

घ्रा॰ घ्राता वायुरुच्यते। भिन्नम् भेदो हृदयं। हृदयस्य बाह्यहृदयस्थेन्द्रियत्वादर्शनान्मनःशब्देनापि तस्यैवाभिधाने पौनरुक्त्यमित्यत आह। हृदयमिति। अन्तःकरणाधिष्ठानं हृदयकमलमुच्यत इत्यर्थः। सर्वप्राणनिबन्धनस्थानमिति गुदामूलमित्यर्थः। अपानशब्देन पाय्विन्द्रियलक्षणायां सम्बन्धमाह। अपानेति। ननु शिश्नं निरभिद्यतेति पर्याये शिश्नरेतसोरुत्पत्त्यभिधाने स्त्रीयोन्यादेरुत्पत्तिरनुक्ता स्यादित्याशङ्क्य शिश्नशब्देनोपस्थेन्द्रियस्थानं लक्ष्यते। रेत इति तद्विसर्गार्थत्वेन तत्सहितमुपस्थेन्द्रियं। आप्शब्देन तल्लक्षितमप्भूतोपाधिकः प्रजापतिरुच्यत इत्याह। यथेति। यथाऽन्यत्र पर्यायान्तरे स्थानं करणं देवता चेति त्रयमुक्तं एवमिहापि शिश्नादिशब्दैस्त्रयमप्युच्यत इत्यर्थः। रेत इति। इन्द्रियमुच्यत इत्यन्वयः। तल्लक्षणायां सम्बन्धमाह। सह रेतसेति। रेतसा सहितं तत् संबद्धमित्यर्थः।

ऐ॰भा॰ महत्याऽऽत्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्व्वत्याग-
मार्गे मोक्षतीरे एतस्मिन्महत्यर्णवे प्रापतन् पतितवन्तः ।
तस्मादग्न्यादिदेवतात्मलक्षणापि या गतिर्व्याख्याता ज्ञान-
कर्मसमुच्चयानुष्ठानफलभूता सापि नालं संसारदुःखोप-
शमायेत्ययमत्र विवक्षितार्थः ।

---

आ॰ नितसुखलेशरूपो विश्रामो यस्मिन्, पञ्चेन्द्रियाणामर्थेषु विषयेषु
शब्दादिषु या तृष्णा सा एव मारुतस्तदुत्थितो यो विक्षोभ-
स्तेनोत्थितान्यनर्थशतानि विषयसम्पादिनि क्लेशाश्च एवोर्म्मयो
यस्मिन् महारौरवादय एवानेके निरया नरकविशेषास्तदु-
ताशं गर्भवासजन्मव्याधिजरादयो नरकान्ता ये ऽनेके निरया
दुःखजनकास्तत्कारणानि यानि हा हेत्यादीनि कूजितानि स-
म्प्रलम्भ आक्रोशनानि महास्वनयः तदुद्भूतो महारवो यस्मिन् ।
महापातकाद्यनेकनिरयेति पाठे महापातकजन्या निरया इति
द्रष्टव्यं । संसारार्णवस्यैवम्भूतत्वे तस्य तरणासम्भवान्नेत्याशङ्क्याम-
र्थ्यादविवेकिनो तथात्वेऽपि विवेकिनां तत्तरणोपायोऽस्तीत्याह ।
सत्येति । सत्यादयो ये आत्मगुणास्त एव पाथेयं पथ्यदनं तेन
पूर्णश्चासौ ज्ञानमेवोडुपः प्लवो यस्मिन् । सत्सङ्गः सन्न्यासः तावेव मार्गो
यानोडुपप्रवृत्तिहेतुर्यस्मिन् मोक्षे सति पुनः संसारार्णवसम्बन्धा-
भावात् स एव तीर्त्वा तीरं यस्मिन्नेतस्मिन् प्रत्यक्षसिद्धेऽर्णवे
इत्यर्थः । अथ पतनं नाम स्वरूपाज्ञानेन संसारे ऽहमभिमा-
नेन स्थानं । ननु संसारार्णवपतितत्वं वक्ष्यमाणाशनायादियोग
इत्यादि सर्व्वोऽपि बन्धस्तदभिमानिनो जीवस्य सम्भवो न
देवतानां । न च तासामपि तत्राभिमानोऽस्तीति तदुक्तमिति
ग्रहणीयं । तथापि प्राधान्यतोऽभिमानिनं जीवं विहायाप्राधा-
न्यतोऽभिमानिनीषु तदुक्तेरभिप्रायो वक्तव्य इत्यत आह । तस्मा-
दिति । यस्मात् संसारार्णवपतितत्वं तासां तस्मादित्यर्थः ॥

ऐ॰उ॰ प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत् ।

---

ऐ॰भा॰ यत एवं तस्मादेवं विदित्वा परं ब्रह्मात्मात्मनः सर्व्वभूतानाञ्च यो वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थितिसंहारहेतुत्वेन सर्व्वसंसारदुःखोपशमनाय वेदितव्यस्तस्मादेष पन्थाः । एतत् कर्म्मैतद्ब्रह्मैतत् सत्यं यदेतत् परब्रह्मात्मज्ञानं । नान्यः पन्था विद्यतेऽयनायेति मन्त्रवर्णात् । तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं

---

आ॰ महारौरवाद्यनेकनिरयगतिरेवेति पाठे अज्ञानिनां गतिर्यथा दुःखोपशमाय ज्ञानं तथा ज्ञापि ज्ञानमिति पूर्व्वेणान्वयः। तद्विवक्षाया अपि प्रयोजनमाह । यत एवमिति । एवं विदित्वेति ज्ञानमिति विदित्वेत्यर्थः । आत्मनः सर्व्वभूतानाञ्चात्मा य आत्मा वा इदमित्यादिना जगदुत्पत्त्यादिहेतुत्वेन च यः प्रकृतः स परम्ब्रह्म वेदितव्य इत्यन्वयः। तस्यैव पन्थाः एतत्कर्म्मैतद्ब्रह्मैतत् सत्यमित्युपक्रम्योपसंहृतमिति वा इत्यादिना कर्म्मसम्बन्धिसगुणब्रह्मज्ञानस्यैवोक्तत्वात् तस्यैव मोक्षसाधनत्वं नोक्तमेवेत्यात्मज्ञानमात्रस्यैवाग्रे एष पन्था इत्यादि ब्रह्मज्ञानमेवोक्तं न कर्म्मसमुच्चितं ज्ञानं। सगुणज्ञानेन संसारहेतुत्वावगमेन तत्त्यागोगादित्याह । तस्मादेव पन्था इति । यस्मात् कर्म्मसहितस्य प्राणविज्ञानस्य संसारफलत्वं तस्मादेव इत्युक्तेन पदेन यद्ब्रह्मात्मविज्ञानं तदेवोक्तमित्यन्वयः। तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यतेऽयनायेत्यत्रापि केवलात्मज्ञानव्यतिरिक्तपथनिषेधादप्युक्तमेव ज्ञानं पन्था इत्याह । नान्य इति । एष पन्था इति ब्रह्मज्ञानमुपक्रम्य मध्ये प्राणविज्ञानोक्तिस्तु प्राणोपासकस्य चित्तैकाग्र्ये सति तत्प्रसादाद् वैराग्ये सति एष पन्था इत्युपक्रान्तं मुख्यं ज्ञानं लब्धुं शक्यमित्यभिप्रायेणेति भावः। यद्यपीतदाख्यायिकावसरे कर्म्ममार्गोऽपि यथाशब्दार्थत्वेनोक्तस्तथापि ज्ञानमार्गोपायत्वेन स उक्तो न प्राधान्येनेति भावः । ननु

ऐ०उ० ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥
ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति।

---

शं०भा० पिण्डमात्मानमशनायापिपासाभ्यामन्ववार्जदनुगमितवान् संयोजितवानित्यर्थः। तस्य कारणभूतस्याशनायादिदोषवत्त्वात् तत्कार्यभूतानामपि देवतानामशनायादिमत्त्वं। तास्ततोऽशनायापिपासाभ्यां पीड्यमाना एनं पितामहं स्रष्टारमब्रुवन्नुक्तवत्यः। आयतनमधिष्ठानं नोऽस्मभ्यं प्रजानीहि विधत्स्व। यस्मिन्नायतने प्रतिष्ठिताः समर्थाः सत्योऽन्नमदाम भक्षयाम इति ॥ १ ॥

एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गां गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत् पिण्डं समुद्धृत्य मूर्छयित्वा आनयत् दर्शितवान्। ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन्। न वै

---

आ० पिण्डस्याशनायादियोगे देवतानां कथं तद्वत्त्वं येन तासामन्नादनार्थमायतनप्रश्नः स्यात् यस्मिन् प्रतिष्ठिता इत्यनेनेत्यत आह। तस्येति। पितामहमिति सर्वजनकपितृजनकमित्यर्थः। अधिष्ठानमिति शरीरमित्यर्थः। ननु विराड्देह एवायतनं वर्तते इत्याशङ्क्य तस्यातिप्रौढत्वात्तमापूर्य तत्र स्थातुं वयमसमर्थाः। अथच तद्देहमर्थ्यादं सम्पादयितुमसमर्थाः। अतोऽस्मदीयं व्यष्टिदेहं सृजस्वेत्युक्तवत्य इत्याह। यस्मिन्निति। यद्यप्यस्मदादिव्यष्टिदेहं विनापि चरुपुरोडाशादिहविरदनमस्ति तथापि तदपि हविरदनं व्यष्टिदेवतादेहमन्तरा नाप्नोतीति भावः ॥ १ ॥

व्यष्टिदेहसृष्टिमाह। ताभ्य इति। मूर्छयित्वेति निविडतया परस्परावयवसंयोजनेनेत्यर्थः। न वोऽयमिति। शरीरेभ्योपरि

ऐ॰उ॰ ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥

ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतं। ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥

---

ऐ॰भा॰ गोऽश्मद्यमधिष्ठानायासमानयत् पिण्डोऽन्नं। न वै नोऽलं पर्य्याप्तं। न योग्य इत्यर्थः। गवि प्रत्याख्याते तथैवाश्वमानयत्। ता अब्रुवन्न वै नोऽयमलमिति पूर्व्ववत् सर्व्वमत्याख्याने ॥ २ ॥

ताभ्यः पुरुषमानयत् स्वयोनिभूतं। ताः स्वयोनिं पुरुषं दृष्ट्वाऽखिन्नाः सत्यः सुकृतं शोभनमिदमधिष्ठानं बतेत्यब्रुवन्। तस्मात् पुरुषो वाव पुरुष एव सुकृतं सर्व्वपुण्यकर्म्महेतुत्वात्। स्वयं वा स्वेनैवात्मना स्वमायाभिः कृतत्वात्सुकृतमुच्यते। ता देवता ईश्वरोऽब्रवीत्। इष्टमासामिदमधिष्ठानमिति मत्वा सर्व्वा हि स्वयोनिषु रमन्ते। अतो

---

आ॰ दन्ताभावेन दूर्व्वादिमूलच्छेदानुकूलत्वाभावादित्यर्थः। अश्वमिति। तस्योभयतो दन्तत्वेनोक्तदोषाभावादित्यर्थः। न वै नोऽयमलमित्यश्वस्यापि विवेकज्ञानाभावादयोग्यत्वादित्यर्थः। गवाश्वप्रदर्शनं सर्व्वतिर्य्यग्देहोपलक्षणार्थमित्यभिप्रेत्योक्तं। सर्व्वेति ॥ २ ॥

स्वयोनिभूतमिति। स्वयोनिभूतं विराट्पुरुषदेहसजातीयमित्यर्थः। यस्मात् स्वकीयपरितोषद्योतकेन सुकृतं बतेत्यनेन शब्देन पुरुषदेहमुक्तवत्यस्तस्मात्तदिदानीमपि सुकृतत्वमित्याह। तस्मादिति। स्वयं वेति। ईश्वरेण स्वेनैव कृतं सत्यादिसत्यपेक्षया सुकृतं सुष्ठु कृतमित्यर्थः। पृषोदरादित्वात् स्वयमिति स्थाने सुशब्द इत्यर्थः। एवं अधिदेवतारूपमुक्त्वा तत्र कार्य्याणां देवतानाम्

ऐ॰उ॰ अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन् मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशत् ॥ ४ ॥

---

ऐ॰भा॰ यथाऽऽयतनं यस्य यददनादिक्रियायोग्यमायतनं तत्प्रविशतेति ॥ ३ ॥

तथास्त्वित्यनुज्ञां प्रतिलभ्य ईश्वरस्य नगर्यामिव बलाधिकृताः । अग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्तथोक्तार्थमन्यत् । वायुर्नासिके । आदित्योऽक्षिणी । दिशः कर्णौ । ओषधिवनस्पतयस्त्वचं । चन्द्रमा हृदयं । मृत्युर्नाभिं । आपः शिश्नं प्राविशन् ॥ ४ ॥

---

आ॰ अधिष्ठानत्वरूपेण प्रवेशमाह । ता देवता इति ॥ इदमेव हेतुमाह । सर्वे चेति ॥ आयतनमिति गोलकरूपस्थानमित्यर्थः ॥ ३ ॥

राज्ञोऽनुज्ञां प्रतिलभ्य बलाधिकृतादयः सेनापत्यादयो नगर्यां यथा प्रविशन्ति तद्वदीश्वरस्यानुज्ञां प्रतिलभ्याग्न्यादिः प्राविशदित्यन्वयः । यद्यपि वागभिमान्यग्निर्न तु वागेव तथापि तस्य वाचं विना प्रत्यक्षमनुपलब्धेः । तस्या अपि देवतां विना स्वविषयग्रहणसामर्थ्याभावात् तयोरेकलोलीभावेनाभेदोक्तिरित्याह ॥ वागेवेति ॥ यद्यपि देवतानामीश्वरेण प्रवेशश्चोदितस्तथापि करणैर्विना तासां साक्षाददनादिभोगासम्भवात् तेषामपि प्रवेशोऽर्थाच्चोदित एवेति तेषामपि स उक्तः ॥ ४ ॥

ऐ॰उ॰ तमशनायापिपासे अब्रूतामावाभ्यामभिप्र-

ऐ॰भा॰ एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्याव-शनायापिपासे तमीश्वरमब्रूतामुक्तवत्यौ आवाभ्यामधिष्ठा-नमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः । स ईश्वर एवमुक्त-स्तेऽशनायापिपासेऽब्रवीत् । न हि युवयोर्भावरूपत्वाच्चेतनाव-द्वस्त्वनधिष्ठायात्मलाभः सम्भवति । तस्मादेतास्वेवाग्न्यादिषु देवतास्वध्यात्माधिदैवतासु वां युवां आभजामि वृत्तिसंवि-

---

आ॰ अशनायापिपासयोरपि व्यष्टिदेहेऽपि वस्त्वधिष्ठानदेवता-यत्नं वक्तुं तयोः प्रश्नमवतारयति । एवमिति । निरधिष्ठाने सत्याविति कारणीभूते विराड्देहेऽधिष्ठानविशेषो यदि स्याद-शनायापिपासयोरग्न्यादीनां सुखादय इव तदा व्यष्टिदेहेऽपि तदेव स्यात् तयोरधिष्ठानं तेषामिव न त्वेतदस्ति अतो निरधि-ष्ठाने ते इत्यर्थः । विधत्स्वेत्यनन्तरं यस्मिन् प्रतिष्ठिता अशन-दामेति शेषः । समाधिष्ठानविशेषस्तावत् युवयोः कारणे समष्टि-देहेऽभावाद्व्यष्टावपि नास्त्येव । कारणपूर्वकत्वात् कार्यस्याधिष्ठानं स्यात् । यदत्र तु युवयोर्धर्मरूपत्वाद्धर्मिणमनाश्रित्य धर्मस्य स्वात्मलाभायोगाच्चेतनावद्धर्मिभूतदेवतागतमेवाऽऽश्रयणं युवयो-रित्याह । स ईश्वर इति । भावरूपत्वादिति धर्मरूपत्वादि-त्यर्थः । धर्मिणोऽप्यचेतनस्य भोक्तृत्वादर्शनाच्चेतनावदित्युक्तं । अध्यात्मेति । अध्यात्मदेवता व्यष्टिदेहगतदेवताः । अधिदैवतदे-वताः समष्टिविराड्देहगता हविर्भुजोऽग्न्यादयः प्रसिद्धास्ता-स्वित्यर्थः । वृत्तीति भागैकदेशदानेनेत्यर्थः । एतदेव स्पष्टीकरोति । एतासु भागिन्याविति । साक्षाद्देवतासु भागवत्त्वायोगाद्देवता-भागेन भागवत्त्वमंशवत्त्वमुक्तमिति व्याचष्टे । यदिति । यद्देवता यद्देवतासम्बन्धी यो भागः स्यात् तस्या देवतायाः सम्बन्धिना तेनैव भागेनेत्यर्थः । हविरादीत्यादिशब्देन वचनादीन्द्रियविषयोऽपि गृह्यते । करोमीत्यनन्तरमुक्तेति शेषः । उक्तमर्थमिदानीन्तनेष्वव-

ऐ॰उ॰ जानीहीति। स ते अब्रवीदेतास्वेव वां देवता-
स्वाभजाम्येतासु भागिन्यौ करोमीति। तस्मा-

---

ऐ॰भा॰ भागेनानुगृह्णामि। एतासु भागिन्यौ यद्देवत्यो यो
भागो हविरादिलक्षणः स्यात् तस्यास्तेनैवभागेन भागिन्यौ
भागवत्यौ वां करोमीति सृष्ट्यादावीश्वर एवं व्यदधात्
यस्मात् तस्मादिदानीमपि यस्मै कस्मै च देवतायै अर्थाय

---

आ॰ चारेण घटयितुं तस्मादित्यादिवाक्यं तद्व्याचष्टे। यस्मादिति।
यस्मात् सृष्ट्यादावेवं व्यदधात् तस्मादित्यर्थः। हविरित्युपलक्षणं
अधिदैवतं हविर्गृह्यते। अध्यात्मं देवतार्थं शब्दादिविषयो गृह्यत
इति योज्यं। भागिन्यावेवेति यद्यपि शब्दादिविषयेण हविषा
चाग्न्यादिदेवतातृप्तौ तयोर्भागश्च दृश्यते न तु तद्भागेन भा-
गित्वं तथापि तयोः सर्व्वात्मना नाशे पुनः कालान्तरे ते न
स्यातां। अतः सूक्ष्मेण स्थितयोरिव तयोः कदाचिदिन्द्रियदेवतानां
विषयोन्मुखतया प्रेरकत्वरूपं कार्य्योन्मुखं कदाचित्तदभावरूपो-
पशान्तिरित्यभ्युपगन्तव्यं। तथा च हविषा देवतातृप्तावशनाया-
पिपासयोरपि तृप्तिरूपशान्तिर्दृश्यत इति तद्भागेन भागवत्त्वमु-
क्तमित्यर्थः। न च चक्षुरादिना रूपादिग्रहणदशायामशनाया-
पिपासयोर्न शान्तिर्दृश्यते इति न सर्व्वत्र भागवत्त्वं तयोरिति
शङ्क्यं। क्षुत्पिपासार्त्तस्यापमानदर्शनश्रवणादिनाऽपमानमत्य-
न्तमपहितीयेन मनसि क्षुधा शान्तेव भाति। न तु यथा पूर्व्वं
बाधत इति चक्षुरादिष्वपि तयोर्भागवत्त्वमित्युक्तं। न्यायनिर्णय?
दीपिकायां वस्तुतस्त्वशनायापिपासाशब्देनेन्द्रियाणां स्वस्वविषय-
गोचरौ व्यापारावुच्येते। अन्नमदनीयमित्यादावदनं स्वस्वविष-
यग्रहणमेव चक्षुरादीन्द्रियदेवतानां मुख्याशनासम्भवात्। .
तथा च रूपादिविषयग्रहणे तत्तद्विषयगोचरयोस्तयोः पृथक्
प्रसिद्दृश्यत इति वाच्यं। इन्द्रियदेवतानां स्वस्वविषयोन्मुखतया
प्रेरकत्वरूपकार्य्योन्मुखनिवृत्तिरूपोपशान्तिरेव पृथक् तयोस्तृप्ति-

ऐ०उ० यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनायापिपासे भवतः ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥ १ ॥

---

ऐ०भा० हविर्गृह्यते चरुपुरोडाशादिलक्षणं भागिन्यौ एव भागवत्यावेवास्यां देवतायामशनायापिपासे भवतः ॥५॥ इति द्वितीयखण्डभाष्यं ॥ २ ॥

स एवमीश्वर ईक्षत ईक्षत। कथमिमे नु लोकाश्च लोकपालाश्च मया सृष्टा अशनायापिपासाभ्यां च संयोजिताः। अतो नैषां स्थितिरन्नमन्तरेण तस्मादन्नमेभ्यो लोकपालेभ्यः सृजै सृजे इत्येवं हि लोके ईश्वराणामनुग्रहे निग्रहे च स्वातन्त्र्यं दृष्टं तेषु तद्वन्महेश्वरस्यापि सर्वेश्वरत्वात् सर्वान् प्रति निग्रहानुग्रहे स्वातन्त्र्यमेव ॥ १ ॥

---

आ० इत्युक्तत्वात्। यद्यप्ययं वप्रवेशनमशनायापिपासादिमत्त्वं तन्निमित्तमन्नादनमित्यादि सर्वं कार्यकरणसंघातपञ्जराध्यक्षस्य जीवस्य भोक्तुरेव नेन्द्रियदेवताशनायापिपासादीनां। तथापि तस्य वस्तुतोऽभोक्तृब्रह्मभूतस्य स्वतो भोक्तृत्वायोगादिन्द्रियदेवतासूपाधिष्वस्तमेव तस्य भोक्तृत्वादिसर्वसंसार इति वक्तुं तेष्वेव तमारोप्य श्रुत्योच्यत इति न दोषः ॥५॥ इति द्वितीयखण्डभाष्यटीका ॥ २ ॥

एवं भोक्तृसाधनसृष्टिमुक्त्वा भोग्यसृष्टिं वक्तुमारभते। स एवमिति। सृष्टव्द्योक्तं विवक्षितं स्पष्टीकरोति। लोका इत्यादिना। पूर्ववल्लोकपालप्रार्थनां विना स्वयमेवान्नं स्रष्टुं वितर्कितवानित्युक्तेः प्रयोजनमीश्वरत्वप्रापमित्याह। सृजै इति ॥ १ ॥

ऐ॰उ॰ सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिर-
जायत। या वै सा मूर्तिरजायतान्नं वै तत्॥२॥
तदेतदभिसृष्टं नदत् पराङत्यजिघांसत् त-

---

शं॰भा॰ स ईश्वरोऽन्नं सिसृक्षुस्ता एव पूर्वोक्ता अप उद्दि-
श्याभ्यतपत् ताभ्योऽभितप्ताभ्य उपादानभूताभ्यो मूर्त्तिर्घन-
रूपं धारणसमर्थं चराचरलक्षणमजायतोत्पन्नं अन्नं वै
तन्मूर्त्तिरूपं या वै सा मूर्त्तिरजायत तदेतदन्नं ॥ २ ॥
लोकपालानामभिमुखोत्सृष्टं सत् यथा मूषकादिर्मार्जा-
रादिगोचरे सन् मम मृत्युरस्मात् इति मत्वा परागच-

---

व्या॰ अप इति पञ्च भूतानीत्यर्थः। सोऽभ्यतपदिति एतेभ्यो भूतेभ्यो म-
नुष्यादीनामन्नभूता व्रीह्यादयो जायन्तां मार्जारादीनामन्नभूतानि
मूषकादीनि जायन्तामिति पर्यालोचनं सङ्कल्पं कृतवानित्यर्थः।
मूर्त्तिशब्देन चराचरयोरादिमतो विधाने व्रीह्यादेरग्रहणं स्यादत
आह। घनरूपमिति। कठिनमित्यर्थः। तन्मूर्त्तानामपि वायुच-
न्द्रकिरणादीनामपि सर्पादीन् प्रत्यन्नमस्तीति तद्व्युदासार्थमाह।
धारणसमर्थञ्चेति। शरीरधारणसमर्थमित्यर्थः। चरेति चरं
मूषिकादि अचरं व्रीह्यादीत्यर्थः। या वै सा मूर्त्तिरजायतान्नं वै
तदिति पूर्व्वेणान्वयः। तच्छब्दार्थमाह। मूर्त्तिरूपमिति। शब्दा-
दिभोक्तृत्वमिन्द्रियदेवतोपाधिकं न स्वत आत्मन इत्यभिप्रायेण
तेषां शब्दादिभोगमुक्त्वा इदानीमन्नपानभोक्तृत्वमप्यपानवृत्तिम-
न्नाद्योपाधिकं न स्वत आत्मन इत्यभिप्रायेण तस्य भोक्तृत्वं प्रति-
ज्ञेयाभिधारयितुमाह। तदेतदिति। २।
एवं सत्पराङ् सत् अजिघांसदित्यन्वयः। पराङ्पदं व्याख्या-
दयति। परागञ्चतीति। उक्तार्थे दृष्टान्तमाह। यथेति।
यथैतदन्नं पराङ्चति तद्वदिति शेषः। अतिगन्तुमैच्छदिति।
यद्यपि व्रीह्याद्यचेतनानाम् एवमिच्छा न सम्भवति तथापि भोक्तृ-

ऐ॰उ॰ द्वाचा जिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं । स यद्धै-
नद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ ३ ॥
तत् प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुं ।
स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्
॥ ४ ॥ तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुं ।
स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥
तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं । स
यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥

---

ऐ॰भा॰ तीति पराङ् सदन्नमतीत्याजिघांसदतिगन्तुमैच्छत्
पालयितुं प्रारभत इत्यर्थः। तदन्नाभिप्रायं मत्वा स लोक-
लोकपालसंघातैः कार्य्यकारणलक्षणः पिण्डः प्रथमज-
त्वादन्यांश्चान्नादवद्वाचा वदनक्रियया ग्रहीतुमुपादातुं स
प्रथमजः शरीरी यद्यदि हैनद्वाचाऽग्रहीष्यद्गृहीतवान् स्या-

---

व्या॰ शरीरान्तर्गं प्रविष्टं किन्तु बहिरेव स्थितमित्यत्र तात्पर्यं। कार्य्य-
करणलक्षणः पिण्डस्तदन्नं वाचा जिघृक्षदित्यन्वयः। नन्विदानी-
मिव प्रथममेवापानेनैवान्नग्रहणात् तस्य किमिति नासीदि-
त्याशङ्क्य तस्येदानीन्तनशरीरापेक्षया प्रथमजत्वादिति व्यष्टि-
दाद्यपेक्षयेत्यर्थः । यस्मिन् प्रतिष्ठिता अपानादयोऽनुपक्रान्तस्य
व्यष्टिशरीरस्य समष्टिपिण्डापेक्षया प्रथमजत्वाभावादपानग्रह-
णमित्यर्थः। वदनक्रियया प्रथमजस्य पिण्डस्य कारणस्यान्नग्रह-
णासामर्थ्यं कार्य्यगतासामर्थ्येन तत् गमयति । स प्रथमज
इति । अत्र प्रथममग्रपदं गृहीतवान् स्यादित्यत्र कर्मत्वेन
सम्बध्यते । तत्कार्य्यभूतत्वादिति तदनन्तरभूतत्वादित्यर्थः । इ-
दानीन्तनशरीरस्य पूर्वकालीनव्यष्टिशरीरकार्य्यत्वाभावादिति

ऐ॰उ॰ तत्त्वचाऽजिघृक्षत् तन्नाशक्नोत् त्वचा ग्रहीतुं। स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥७॥ तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुं। स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्॥ ८॥ तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुं। स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्॥ ९॥ तदपानेनाजिघृक्षत् तदावयत्। स एषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥

ऐ॰भा॰ सर्व्वोऽपि लोकस्तत्कार्य्यभूतत्वादन्नमभिव्याहृत्यैवात्रप्स्यत् तृप्तोऽभविष्यत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

न चैतदन्नं नाशक्नोत् पूर्व्वजोऽपि वाचा ग्रहीतुमित्यवगच्छामः पूर्व्वेण समानमुत्तरं तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन् पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत् तदावयत्तदन्नमेवं जग्राहाशितवान्। तेन स एषो न वायुरन्नस्य ग्रहोऽन्नग्राहक इत्येतत्। यद्वायुर्यो

ब्या॰ अभिव्याहृत्येति वाचकशब्देनाभिधायेत्यर्थः। पूर्व्वजोऽपीत्यस्य नाशक्नोदिति पूर्व्वेणान्वयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

प्राणेन घ्राणेनाभिप्राणनव्यापारेणेत्यर्थः। अपानेनेति मुखच्छिद्रेणान्तर्गच्छता वायुनेत्यर्थः। अन्नग्रहणमपि अशनवृत्तिमतः प्राणस्य धर्म्मो नात्मनः स्वत इत्येतत्। तदेतत् स्पष्टं पराङ्व्यादिनोक्तं। अस्य सन्दर्भस्य प्रयोजनमुपसंहरति। तेन स एष इति। येन कारणेनापानेनान्नमशितवान् तेनेत्यर्थः। अपानवृत्तिमतः प्राणस्यान्नग्राहकत्वप्रसिद्धा अतीकर्त्तुमन्नायुरिति नाम्नं लाघवे। यथा:

ऐ॰उ॰ स ईक्षत कथं न्विदं मदृते स्यादिति स

---

ऐ॰भा॰ वायुः अन्नायुरन्नबन्धनोऽन्नजीवनो हि प्रसिद्धः स एष यो वायुः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

स एवं लोकलोकपालसङ्घातस्थितिमन्ननिमित्तां कृत्वा पुरपौरस्तत्पालयितृस्थितिसमां स्वामीव ईक्षत। कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनम्। यदिदं कार्यकारणसङ्घातं कार्यं वक्ष्यमाणं कथं नु खलु मामन्तरेण स्यात् परार्थं सत् यदि वाचाऽभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि

---

व्या॰ युरिति। अन्नमदानेत्यादिष्वन्तरे प्राणस्यान्नायुष्ट्वं प्रसिद्धमि-त्यर्थः ॥७॥८॥९॥१०॥

एवं भोगाधिकरणभूतानां लोकानां भोगायतनस्य समष्टिव्यष्टिशरीरस्य भोगोपकरणानां वागादीनां समष्टिशरीरे लोकपालत्वेन व्यष्टिशरीरे करणाधिष्ठातृत्वेन च स्थितानां देवतानां भोगे प्रेरकयोरशनायापिपासयोस्तत्प्रयुक्तस्य करणनिविष्टस्य शब्दादिविषयग्रहणव्यापारस्य भोगस्याप्युत्पत्तिमत् प्राणनिरूपणान्तमभ्यवहरणव्यापारस्य च भोगस्यात्मनः संसारित्वसिद्ध्यर्थं सृष्टिमभिधायेदानीं संसारिणं भोक्तारं दर्शयितुं स्रष्टुरीश्वरस्य विचारं दर्शयितुं स ईक्षतेति वाक्यं व्याचष्टे। स एवमिति। परस्य पौराणां पुरवासिनां तत्पालयितॄणां राजनियुक्ताधिकारिणां स्थितिसमां तत्तुल्यामन्ननिमित्तां अन्नाधीनां सङ्घातस्थितिं कृत्वेत्यन्वयः। कृत्वेत्युपस्कार्यं लोकादीन् सृष्ट्वेत्यपि द्रष्टव्यं पदार्थानुक्त्वा वाक्यार्थमाह। यदिदमिति। वक्ष्यमाणमिति वाचाभिव्याहृतमित्यादिना। वक्ष्यमाणमभिव्याहरणादिकमित्यर्थः। हेतुगर्भितमिदंशब्दार्थस्य विशेषणं परार्थं सदिति परार्थत्वात् परार्थिनं मामृते कथं स्यादित्यस्यैवार्थस्य कथं शब्दसूचितं व्यति-

ऐ०उ० ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि

ऐ०भा० तन्निरर्थकं न कथञ्चन भवेत्। बलिस्तुत्यादिवत् पौरवन्द्यादिभिः प्रयुज्यमानं स्वाम्यर्थं तत्स्वामिनमन्तरेणाऽसत्येव स्वामिनि तद्वत् । तस्मान्मया परेण स्वामिनाधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा । यदि नामैतत्संहतकार्यस्य परार्थत्वं परार्थिनश्चेतनमन्तरेण भवेत् पुरपौरकार्यमिव तत्स्वामिनमन्तरे-

आ० रेणमाह । यदीति । केवलं भोक्तृरहितत्वाद्व्यवहारादि यत्तत्र कथञ्चन भवेत् कथञ्चिदपि न भवेदित्यन्वयः । तत्र हेतुर्निरर्थकमिति अर्थयत इत्यर्थः । यथाह्यर्थ । अर्थयिता पुरुषस्तद्रहितमित्यर्थः । अर्थयिता हि पुरुषः स्वस्य प्रयोजनसिध्यर्थं वागादिकं प्रेरयति । तदभावप्रेरकाभावाद्वागव्यवहारादिकं न भवेदित्यर्थः । यद्वा अर्थः प्रयोजनमर्थिनोऽभावे स्वस्यार्थत्वाभावान्निष्प्रयोजनं यत् तन्न भवेत् । प्रयोजनप्रयुक्तत्वात् सर्व्वप्रवृत्तेरिति । तत्र दृष्टान्तो बलिस्तुत्यादिवदिति । एतदेव विवृणोति । पौरेति । अत्र यथा-शब्दो द्रष्टव्यः । यथा पौरादिभिः प्रयुज्यमानं बलिस्तुत्यादिकं स्वामिनमन्तरेण न भवेत् तद्वदित्यन्वयः । स्वामिनमन्तरेणेत्यस्य व्याख्यानमसत्येवेति । विचारस्य फलमाह । तस्मादिति । परेणाऽर्थयदन्येन स्वामिना अर्थिना वागादिव्यवहारकर्त्तृप्रकारभावाधिष्ठात्रा वागादिप्रेरकं साक्षिधात्वस्वायस्कान्तवच्चेतनस्य सन्निधानमात्रमेव साक्षितया न व्यापार इत्याह । कृतेति । कृताकृतयोस्तत्फलस्य चेत्यर्थः । फलसाक्षित्वमेव भोक्तृत्वमपीत्याह । भोक्त्रेति । राज्ञेवास्येति पदाध्याहारेणेति ईक्षतेति पूर्व्वेणान्वयः । एवं वागव्यवहारादिकार्य्यसिध्यर्थं मया प्रवेष्टव्यमित्युक्त्वाऽऽत्मस्वरूपबोधार्थं च मया प्रवेष्टव्यमिति वक्तुं स ईक्षत यदि वाचाभिव्याहृतमित्याद्यथ कोऽहमित्यन्तं वाक्यं तत्प्रवेशप्रयोजनकथनार्थत्वेन कथं न्विदमिति वाक्यतुल्यत्वात् स ईक्षत कतरेणेति वाक्येन व्यवहितसमीपेनाश्रय व्याचष्टे । यदि

ऐ॰उ॰ वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि
चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं

ऐ॰भा॰ अथ कोऽहं किंरूपः कस्य वा स्वामी यद्यहं कार्य-
करणसङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोप-
लभेयं। राजेव पुरमाविश्याधिकृतपुरुषकृताकृतावेक्षणं। न
कश्चिन्मामयं सन्नेवंरूपश्चेत्यधिगच्छेद्विचारयेत्। विपर्यये
तु योऽयं वागाद्यभिव्याहृतादीदमिति वेद स सन्निति
संवेदनरूपश्चेत्यधिगन्तव्योऽहं स्यां यदर्थमिदं संहतानां
वागादीनामभिव्याहृतादि। यथा स्तम्भकुड्यादीनां प्रा-
सादसंहतानां स्वावयवैरसंहतपरार्थत्वं तद्वदित्येवमीक्षि-

---

आ॰ यामेति। संहतस्य वागादिकलापस्य कार्यस्य परार्थत्वं परो-
पकारकत्वमभिव्याहरणादिकारित्वं परार्थिनमुपकारभाजनमन्तरेण
भवेदित्यर्थः। अनेन यदि वाचैव केवलयाभिव्याहृतं भवेदित्ये-
वकाराद्याहारेण वाक्यं योजितं। एवमुत्तरत्रापि यदि प्राणे-
नैवाभिप्राणितं भवेदित्यादि द्रष्टव्यं। अभिप्राणितमाघ्रातं अभ्य-
पानितं अन्तर्गतं भक्षितमित्यर्थः। उक्तमेव वाक्यार्थं स्पष्टीक-
रोति। यद्यहमित्यादिना। अयं सन्निति अयमात्माऽस्ति स एवं-
रूपश्चेति नाधिगच्छेदित्यर्थः। अप्रवेशे अस्याधिगमो न स्यादित्यु-
क्त्वा प्रवेशे तु सोऽस्तीति प्रवेशप्रयोजनमाह। विपर्यये त्विति। प्रविश्य
अभिव्याहृताद्युपलम्भे त्वित्यर्थः। वेदनरूपः संश्चेत्यधिगन्तव्योऽहं
स्यामित्यन्वयः। वेदनरूपत्वमुपपादयति। योऽयमिति। योऽयं
वागाद्यभिव्याहृतादि वेद स वेदनरूप इत्यधिगन्तव्यः स्यामित्य-
न्वयः। न च वेदितुः कथं वेदनरूपत्वमिति वाच्यं। वेदितुरवेदन-
रूपत्वे तस्य वेदनान्तरकर्मत्वं वाच्यं। तस्मिन् वेदने वेदितैव कर्त्ता।
चेदेकस्मिन् वेदितरि कर्तृत्वं कर्मत्वञ्च विरुद्धं प्रसज्येत। अन्यो
वेदिता कर्त्ता चेत् तस्याप्यन्यो वेदितेत्यनवस्था स्यादिति वेदि-
तुर्वेदनरूपत्वं सिध्यति अत एव श्रुत्यन्तरे यो वेदेदं जिघ्राणीति।

ऐ०उ० यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ ११ ॥

---

ऐ०भा० त्वाऽतः कतरेण प्रपद्य इति। प्रपदञ्च मूर्द्धा चास्य सङ्घातस्य प्रवेशमार्गावनयोः कतरेण मार्गेणेदं कार्य्यकारणसङ्घातलक्षणं पुरं प्रपद्ये प्रपद्येयमित्येवमीक्षित्वा न तावन्मा-भृत्यप्राणस्य मम सर्व्वार्थाधिकृतस्य प्रवेशमार्गप्रपदाभ्यामधःप्रपद्ये किन्तर्हि पारिशेष्यादस्य मूर्द्धानं विदार्य्य प्रपद्येयमिति ॥ ११ ॥

---

टी० स यत्नेति प्रागप्रमेयप्रमावेदनस्यात्मत्वमुक्तमिति भावः॥ तस्य वेदनरूपत्वे प्रमाणमुक्त्वाऽस्तित्वे प्रमाणमाह। यद्यपीति॥ संहतानां वागादीनामभिव्याहृतादि यदर्थं सोऽन्यो वागादिभिरसंहतः संवेदधिगन्तव्य इति पूर्व्वेणान्वयः॥ संहतानामसंहतपदार्थत्वे दृष्टान्तमाह। यथेति। एतदुक्तं भवति। वागाद्यभिव्याहृतादि चासंहतपदार्थं भवितुमर्हति संहतत्वात् कुड्यादिमत्प्रासादादिवच्चेति तदादित्यनन्तरं श्रुतिगतं स ईक्षतेति पदं द्रष्टव्यं। भाष्ये तु स्पष्टतया व्यक्तुं प्रयोजनद्वयवशात् प्रवेशस्य पर्य्यन्ते विशेषप्रवेशद्वारस्य विचारस्यावसर इति। इदानीं स ईक्षत कतरेणेति वाक्यं व्याचष्टे। एवमीक्षित्वेति॥ अत इति यतः प्रवेशस्य वागादिप्रवर्त्तकसिद्धिर्भोक्तृत्वबोधश्चेति प्रयोजनद्वयसिद्ध्यर्थं पर्य्यालोचनम इत्यर्थः। अतादिति पाठे शरीरस्यान्तः प्रपद्ये इत्यन्वयः॥ कतरेणेति पदं गृहीत्वा तद्व्याख्यातुं मार्गद्वयं दर्शयति। प्रपदञ्चेति॥ इदानीं गृहीतं पदं व्याख्याति॥ अनयोः कतरेणेति॥ प्रपद्य इत्यनन्तरं श्रौतं स ईक्षतेति पदं द्रष्टव्यं। अनन्तरं स ईक्षत यदि वाचेत्यादिवाक्यं पूर्व्वमेव व्याख्यातमिति तदुत्तरं स एतमेव सीमानमिति वाक्यं व्याख्यातुं तदपेक्षितमाह। एवमीक्षित्वेति॥ पर्य्यालोच्येत्यर्थः। स्वस्य प्रवेशमार्गेण स्वामिनः प्रवेशोऽनुचित इत्यनेनैव मार्गेण प्रवेशं निषिद्धवानित्याह। न तावदिति॥ अ-स्येति पिण्डस्येत्यर्थः। प्रपद्येयमित्यनन्तरं विचिन्त्येति शेषः॥११॥

ऐ॰उ॰ स एतमेव सीमानं विदार्य्यैतया द्वारा प्रा-

ऐ॰भा॰ लोक इवेचितकारी य ईश्वरः स्रष्टा एतमेव मूर्द्ध-सीमानं केशविभागावसानं विदार्य्य छिद्रं कृत्वा एतया द्वारा मार्गेणेमं लोकं कार्य्यकारणसङ्घातं प्रापद्यत प्रविवेश। सेयं हि प्रसिद्धा द्वाः। मूर्द्धनि तैलादिधारणकाले तद्रसादिसंवेदनात् सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः। इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नानन्दहेतूनि इदन्तु द्वारं परमेश्वरस्यैव केवलस्येति। तदेतन्नान्दनं नन्दनमेव नान्दनमिति दैर्घ्यं छान्दसं। नन्दत्यनेन द्वारेण गत्वा परस्मिन् ब्रह्मणीति तस्यैव सृष्ट्वा प्रविष्टस्य जीवेना-

---

था॰ एवमपेक्षितमुक्त्वा स एतमिति वाक्यं व्याचष्टे। लोक इवेति॥ एवमीक्षित्वा मूर्द्धानं विदार्य्य प्रपद्येयमिति निश्चित्येमं सङ्घातं प्रापद्यत इत्यन्वयः। ननु नव वै पुरुषे प्राणाः। सप्त वै शीर्षण्याः प्राणाः। द्वाववाञ्चौ। नवद्वारे पुरे देहीत्यादिषु द्वारनवकं प्रसिद्धं न तु मूर्द्धनि द्वारान्तरमित्याशङ्क्य प्रत्यक्षत्वत्तयोर्द्वमाथसम्मतत्वमे-वोक्ति श्रुतिसत्व तस्य प्रसिद्धेर्नैवमिति वक्तुं सैषेति वाक्यं॥ तद्व्या-चष्टे। सेयमिति॥ प्रत्यक्षतः प्रसिद्धिं सेयमिति पदाभ्यां दर्शयति। मूर्द्धनीति॥ मूर्द्धनि चिरं विपक्वतैलादिधारणकाले तिक्तादिर-ससंवेदनं दृश्यत इति सा द्वाः प्रत्यक्षतः प्रसिद्धेत्यर्थः। न केवलं द्वारः प्रत्यक्षस्य एव प्रसिद्धिः किन्तु तस्य विदृतिरिति नाम्नापि सिद्धिरित्याह। विदृतिरिति॥ अनेनेश्वरेण सप्रवेशार्थमसा-धारणतया विदारितत्वात् भृत्यस्थानीयचक्षुरादिप्रवेशद्वारैः सप्त नव वै पुरुषे प्राणा इत्यादि पूर्व्वोक्तश्रुतिषु परिगणितमि-त्युक्तं। श्रौतप्रसिद्धिं वक्तुं तदेतन्नान्दनमिति वाक्यं तच्चैव देवना-न्दनं नान्यानीत्युक्तमिति कृत्वा व्याचष्टे। इतराणि त्विति॥ सम्-

ऐ०उ० पद्यत १ सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनं

ऐ०भा० त्मना राज्ञ इव स्वं पुरं। त्रय आवसथा जागरितकाले। इन्द्रियस्थानं दक्षिणं चक्षुः। स्वप्नकालेऽन्तर्मनः। सुषुप्तकाले हृदयाकाशमित्येतद्वक्ष्यमाणा वा त्रय आवसथाः। पितृशरीरं मातृगर्भाशयः स्वं शरीरमिति। त्रयः स्वप्नाः जाग्रत्स्वप्नसुषुप्ताख्याः। ननु जागरितं प्रबो-

व्या० ड्डीनोति। सप्तम्युद्भिदादन्द्वो येषु तानीति विग्रहः। हेतुशब्दं भावप्रधानं स्वीकृत्यागन्तुम् प्रति हेतुत्वं येषामिति बहुव्रीहिणा हेतुर्नेति नपुंसकत्वं द्रष्टव्यं। नन्दत्यनेन द्वारेण गतेत्यनेन तयोर्ध्वमायन्नमृतत्वमेतीति श्रुतौ प्रसिद्धिर्दर्शिता॥ ईश्वरस्यैवं प्रवेशमुक्त्वा तस्यैव पूर्वोक्तकार्यकरणसङ्घातोपाधिकसंसारमाह। तस्येति॥ एवं पुरं सृष्ट्वा जीवेनात्मना प्रविष्टस्य तस्य राज्ञ इव त्रय आवसथाः क्रीडास्थानानीत्यन्वयः। तान्येवाह। जागरितेति॥ चक्षुरिति चक्षुर्गोलकमित्यर्थः। मन इति मनसोऽधिष्ठानं कण्ठस्थानमित्यर्थः। कण्ठे स्वप्नं समादिशेदिति श्रुतेः। हृदयाकाश इति हृदयावच्छिन्नभूताकाश इत्यर्थः। यद्यपि ब्रह्मण्येव सुषुप्तौ जीवो वर्तते सता सोम्य तदा सम्पन्न इति श्रुतेस्तथापि ब्रह्मणोऽपि हृदयाकाशेऽवस्थानात्तत्सम्पन्नोऽपि तत्रैव वर्तत इति यथोक्तं। अन्यथा हृदयाकाशशब्देनैव दहराधिकरणन्यायेन ब्रह्माभिधानेन तस्य त्रयः स्वप्ना इति वक्ष्यमाणस्वप्नतुल्यत्वानुपपत्तिरित्यत एव पक्षान्तरमाह। वक्ष्यमाणा वेति॥ तानेवाह। पितृशरीरमिति॥ नन्वात्मा वा इदमेक एवेत्यद्वितीयत्वेनोक्तस्य कथमावसथानां योग इत्याशङ्क्या-वसथानां मायात्वान्न पारमार्थिकाद्वितीयत्वविरोध इति वक्तुं त्रयः स्वप्ना इत्युक्तं तद्व्याचष्टे। त्रयः स्वप्ना इति॥ स्वप्नतुल्या इत्यर्थः। जाग्रदित्युपलक्षणं पित्रादिशरीरत्रयस्यापि द्रष्टव्यं। तेषां स्वप्नतुल्यत्वं नास्तीति शङ्कते। नन्विति॥ अत्रापि शरीरत्रयमुपलक्षितं तत्प्रतिबोधस्य स्वप्नप्रबोधतुल्यत्वात् स्वप्नत्वमेवेत्याह। नैवमिति॥ तथा

ऐ॰उ॰ तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथो
ऽयमावसथोऽयमावसथ इति ॥ १२ ॥
स जातो भूतान्यभिव्यैक्षत् किमिहान्यं वाव-

ऐ॰भा॰ धरूपत्वान्न स्वप्नो नैवं स्वप्न एव। कथं परमार्थस्वात्मप्रबोधाभावात् स्वप्नवदसद्वस्तुदर्शनाच्च। अयमेवावसथश्चक्षुर्दक्षिणं प्रथमः। मन आन्तरं द्वितीयः। हृदयाकाशस्तृतीयः। अयमावसथ इत्युक्तानुकीर्त्तनमेव ॥ १२ ॥

तेषु ह्यवसथेषु पर्यायेणात्मभावेन वर्त्तमानोऽविद्यया दीर्घकालं गाढं प्रसुप्तः स्वाभाविक्या न प्रबुध्यते। अनेकशतसहस्रानर्थसन्निपातजदुःखं मुद्गरैरभिघातानु-

आ॰ प्रसिद्धिर्नास्तीति चेद्धते। कथमिति। अविवेकिनां तथा प्रसिद्ध्यभावेऽपि विवेकिनां तत्त्वदृष्ट्या तथाप्रसिद्धिरस्तीत्याह। परमार्थेति। वस्तुतत्त्वतिरोधानेनासद्वस्तुप्रतिभासः। स्वप्न इति लक्ष्यं जागरितमपि तथाभूतमेव। ब्रह्मस्वरूपतिरोधानादविद्यमानजगत्प्रतीतेश्चेत्यर्थः। आन्तरं मनस्तत् द्वितीय आवसथ इत्यन्वयः। अयमावसथ इत्यादिनाऽर्थान्तरं नोच्यते। प्रासादभूमिकावदुपर्यधोभावेन स्थित इव चक्षुरादयोऽङ्गुल्या निर्दिश्य प्रदर्श्यन्ते त्र्यावसथाभिप्रायेणेत्याह। अयमावसथ इति। उक्तानुकीर्त्तनमेवेति। १२।

नन्वावसथशब्दस्य गृहविशेषवाचिनः कथमक्ष्यादिषु प्रयोग इत्याशङ्क्यावसथसाम्येषु स्थितस्य दीर्घनिद्रादर्शनात्तेषु सुखसुप्तस्येव प्रौढप्रबोधदर्शनात् गौण्या वृत्त्याऽऽवसथत्वमाह। तेषु ह्यवसथेष्विति। स्वाभाविक्या विद्ययेत्यन्वयः। अनुभवैरित्यनन्तरमित्यर्थे आवसथा इत्युच्यन्ते इति शेषः। ननु जागरितादिकं भूतकार्यस्य कार्यकरणसङ्घातस्य धर्मो न त्वात्मनः। तद्विषयस्यापि तत्सं-त्वादाभ्याभिमानात्तद्धर्मत्वमिति वक्तुं सजात इति वाक्यं

ऐ०उ० दिवदिति । स एतमेव पुरुषं ब्रह्म तत-
ममपश्यदिदमदर्शमिति ॥ १३ ॥

---

ऐ०भा० भवैरपि स कदाचित् परमकारुणिकेनाचार्येणात्मज्ञा-
नप्रबोधकृच्छब्दकर्ण्यां वेदान्तमहाभेर्यां तत्कर्णमूले ताड्य-
मानायाम् स एतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरि श-
यानमात्मानं ब्रह्म बृहत्ततमं अन्ततकारेणैकेन लुप्तेन तत-
मं व्याप्ततमं परिपूर्णमाकाशवत् प्रबुध्यत अपश्यत् । कथ-

---

व्या० तद्व्याचष्टे । स जात इति ॥ भूतान्येवाभिमुख्येन तादात्म्येन व्याक-
रोत् व्यक्तं ज्ञातवानुक्तवांश्च । मनुष्योऽहं काणोऽहं सुखदुःखीत्या-
दिप्रकारेणेत्यर्थः । तथा च श्रुत्यन्तरं । अनेन जीवेनात्मनानुप्रविश्य
नामरूपे व्याकरवाणीति । ननु व्यतिरिक्तात्मज्ञाने सति कथमुक्त-
तादात्म्यभ्रम इत्याशङ्क्याह श्रुतिः । किमिहान्यमिति ॥ इहा-
स्मिन् शरीरेऽन्यं व्यतिरिक्तमात्मानं वावदिषत् किमिति काक्वा नो-
क्तवानित्यर्थः । न ज्ञातवानित्यपि द्रष्टव्यं । इतिशब्दो यस्मादित्यर्थे ।
यस्मादेवं तस्मादभिव्यैख्यदित्यध्याहारः प्रकरणसमाप्त्यर्थो वा । इदं
वाक्यं भाष्यकारैः स्पष्टत्वादुपेक्षितं लेखकदोषात् पतितं वा ॥ एव-
मध्यारोपं प्रदर्श्य तदपवादार्थं स एतमित्यादिवाक्यं व्याचष्टे ।
स कदाचिदित्यादिना ॥ यद्वा स जात इत्यादिरपवादः । तस्मिन्
पक्षे एवं योजना । भूतानि व्याकरोत् विविच्याकरोत् । किमेषां
स्वतः सत्तास्ति न वेति विचारितवानित्यर्थः । विचार्य च किम-
न्यमात्मव्यतिरिक्तं स्वतः सत्ताकं वावदिषदित्यासि न किञ्चिद-
प्यात्मव्यतिरिक्तं वक्तुं शक्नोमीति निश्चितवानित्यर्थः ॥ एवं पदा-
र्थशोधनवतो वाक्यार्थज्ञानमाह । स एतमिति ॥ आचार्यवान्
पुरुषो वेदेति श्रुतेः ॥ तेन विना स्वतो वाक्यार्थज्ञानं न सम्भवती-
त्यभिप्रेत्याह । परमिति ॥ वेदान्तेति ॥ उपनिषल्लक्षणस्य समुदा-
यस्य भेरीस्थानत्वं तद्गतानां तत्त्वमसीत्यादिवाक्यानां प्रबोधजन-
कशब्दत्वमिति शेषः । पुरि शयनमिति मूर्धन्यया द्वारा प्रविश्येति

ऐ॰उ॰ तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्रमित्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । परोक्षप्रिया इव हि देवाः ॥ १४ ॥ इति तृतीयः खण्डः ॥ ३ ॥ इत्यैतरेये द्वितीये आरण्यके चतुर्थोऽध्यायः ॥ उपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥ ॐ तत् सत् ॥

---

ऐ॰भा॰ मिदं ब्रह्म ममात्मनः स्वरूपमदर्शं दृष्टवानस्मि । अहो इति विचारणार्था प्लुतिः । यस्मादिदमित्येव । यस्मात्साक्षादपरोक्षाद्ब्रह्म सर्वान्तरमपश्यदपरोक्षेण ॥ १३ ॥

तस्मादिदं पश्यतीति इदन्द्रो नाम परमात्मा । इदन्द्रो ह वै नाम प्रसिद्धो लोके ईश्वरः । तमेवं इदन्द्रं । इति परोक्षाभिधानेनाचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतमत्वात् प्रत्यक्षनामग्रहणभयात् । तथा हि परोक्षप्रियाः परो-

---

या॰ र्थः । श्रुतेनेति तेन सहेत्यर्थः । किं परोक्षतया ज्ञातमिति पृच्छति । कथमिति । तस्य ज्ञानप्रकाशकेन वाक्येन तस्यापरोक्षत्वमाह । इदमिति । इतीति श्रुतेरर्थमाह । अहो इति । विचारणपूर्वमिति विचारणार्थप्लुतेर्विहितत्वात् प्लुत्या मन्दब्रह्मज्ञानं न वेति विचार्य सम्यग्ज्ञातमिति निश्चयार्थो इति स्वस्य कृतार्थत्वं प्रख्यापितवानित्यर्थः । १३ ।

तस्येदन्द्रनामप्रसिद्धावपि तस्य ज्ञानस्याऽपरोक्षत्वमिति वक्तुं तस्मादिदन्द्र इति वाक्यं । व्याचष्टे । यस्मादिति । यस्मात् सर्वान्तरं ब्रह्म इदमित्यपरोक्षं प्रत्यगात्मत्वेनाऽपश्यदित्यन्वयः । कथमिदन्द्रनामत्वमत आह । इदन्द्रो ह वा इति । नन्विन्द्रो मायाभिरित्यादाविन्द्रप्रसिद्धेर्नेदन्द्र इत्यत आह । तमेवमिति । इदन्द्रस्यैव सतः परोक्षत्वार्थं वकारलोपेनेन्द्र इत्याकृतिरित्यर्थः । परो-

ऐ०भा० चनामग्रहणप्रिया इव ह्येव हि यस्माद्देवाः। किमु सर्व्वदेवानामपि देवो महेश्वरः। द्विर्वचनं प्रकृताध्यायपरिसमाप्त्यर्थं॥ इत्यैतरेयोपनिषद्भाष्ये प्रथमोऽध्यायः॥१॥ ॐ तत् सत्॥

अस्मिन्नध्याये एष वाक्यार्थः। जगदुत्पत्तिस्थितिलयकृदसंसारी सर्व्वज्ञः सर्व्वशक्तिः सर्व्ववित् सर्व्वमिदं जगत् स्वतोऽन्यद्वस्त्वन्तरमनुपादायैवाकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्व्वाणि च प्राणादिमच्छरीराणि स्वयं प्रविवेश। प्रविश्य च स्वमात्मानं यथा भूतमिदं ब्रह्मास्मीति साक्षात् प्रत्यबुध्यत। तस्मात् स एव सर्व्वशरीरेष्वेक

---

आ० परोक्षे प्रयोजनमाह। पूज्येति। पूज्यानां परोक्षतयैव नाम वक्तव्यमित्यत्र प्रमाणमाह। तथा हीति। देवा इति पूज्या इत्यर्थः। अत एवाचार्या उपाध्याया इत्युक्तावेव प्रीतिं कुर्व्वन्ति लोके न तु विष्णुमित्रादिनामग्रहणे इति भावः। नाम्नः परोक्षत्वं नाम यथार्थभासो रूपान्तरकरणेन स्वरूपाच्छादनमिति ज्ञेयं। इत्यैतरेयोपनिषद्भाष्यटीकायां प्रथमोऽध्यायः॥१॥ ॐ तत् सत्॥

अस्मिन्नध्याये आत्मैकत्वलोकपालसृष्ट्यशनायापिपासासंयोजनादीनां बहूनामर्थानामुक्तत्वात् सर्व्वेषामपि विवक्षितत्वशङ्कावारणाय विवक्षितमर्थमाह। अस्मिन्निति॥ सर्व्वेष्वपि प्रदेशेष्वेक एवात्मा स एव परमेश्वर इति वक्ष्यमाणोऽर्थ एतच्छब्दार्थः। वाक्यार्थ इति विवक्षित इति शेषः॥ कथमयमेवार्थो विवक्षित इत्याशङ्क्य पूर्व्वसन्दर्भपर्य्यालोचनयेत्याह। जगदित्यादिना॥ यद्यपि लोकादिसृष्ट्या अण्डसृष्ट्या चोत्पत्तिस्थित्येवोक्ते तथाप्युत्पत्तिस्थित्युक्त्याऽर्थात् प्रलयोऽप्युक्तप्राय इति। अशनादित्युक्ते लोकपालादीनामेव भोक्तृत्वोक्त्या असंसारीत्युक्तमित्यर्थः॥ सामान्यतः सर्व्वं जानातीति सर्व्वज्ञः। विशेषतः सर्व्वप्रकारेणापि सर्व्वं जानातीति सर्व्ववित्॥ एतदन्तेन जगतस्तत्कार्य्यत्वात्तद्व्यतिरेकेण नास्तीत्युक्त्वा प्रत्यगात्मनस्तदभेदमाह। स्वात्मेति॥ न केवलं प्रवे-

ऐ॰भा॰ एवात्मा नान्य इति। अन्योऽपि सम आत्मा ब्रह्मास्मीत्येवं विद्यादिति आत्मा वा इदमेक एवाग्र आसीद्ब्रह्म ततममिति चोक्तः। अन्यत्र चासर्व्वगतस्य सर्व्वात्मनो वालाग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य्य प्रापद्यत पिपीलिकेव सुषिरं। नन्वत्यल्पमिदं चोद्यं बहु चात्र चोदितव्यं। अकरणः सन्नीक्षत अनुपादाय किञ्चिल्लोकानसृजत अद्भ्यः पुरुषं समुद्धृत्यामूर्च्छयत्। तस्याभिध्यानान्मुखादि निर्भिन्नं मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषाञ्चाशनायादिसंयोजनं तदायतनप्रार्थनं तदर्थं गवादिप्रदर्शनं तेषाञ्च यथायतनं प्रवेशनं सृष्टस्यान्नस्य पलायनं वागा-

---

व्या॰ प्रोक्तैव तदभेदः किन्तु तदभेदज्ञानोक्तेत्याह। प्रविश्य चेति॥ सत्त्वबुद्ध्यवेति। यस्मात् सर्व्वशरीरेष्वेकस्यैव प्रवेश उक्तः। यस्माच्च प्रविष्टस्य प्रत्यक्तया ज्ञानमुक्तं तस्मात् सर्व्वशरीरेष्वेक एवात्मा स च सर्व्वज्ञ ईश्वर एव नान्य इत्येष वाक्यार्थो विवक्षित इति पूर्व्वेणान्वयः। सम आत्मेति विद्यादिति संहितोपनिषद्गत-वाक्यशेषोऽप्येतमेवार्थमाहेत्याह। अन्योऽपीति॥ सम इति सर्व्वभूतेष्वेक इत्यर्थः॥ स ईक्षतेत्यादिसन्दर्भादयमर्थः प्रतीयत इत्युक्तं पूर्व्वं इदानीमुपक्रमोपसंहाराभ्यामप्ययमेवार्थः प्रतीयत इत्याह। आत्मा वा इति॥ सदेव सोम्येदमग्र आसीत् तदेतद्ब्रह्मा-पूर्व्वमित्यादौ चाद्वितीयत्वमुक्तमित्याह। अन्यत्र चेति॥ प्रवेशवा-क्यादात्मन एकत्वमुक्तं तदयुक्तं तस्यैवासम्भवार्थत्वादिति शङ्कते सर्व्वगतस्येति। [illegible] सर्व्वगतत्वात् प्रवेशश्च न सङ्गच्छत इत्यर्थः। [illegible] प्रवेशमात्रार्थे सङ्गतत्वमुत विवक्षितार्थे। आद्ये सर्व्वव्याप्यसङ्गतार्थत्वेन सर्व्वव्याप्यप्रामाण्यं स्यात्। न च वेद-स्य तद्युक्तमित्याह। नन्विति॥ चक्षुरादिकरणैरीक्षणं प्रसिद्धं मृदा-द्युपादानवत एव सृष्टत्वं हस्ताभ्यामेव समुद्धरणसंमूर्च्छने इत्यश-रीरस्य तदसङ्गतं शस्त्रादिना मूर्द्धन विदारणं न त्वमूर्त्तानां मुखा-

ऐ॰भा॰ दिभिस्तज्जिघृक्षा एतत् सर्वं सीमाविदारणप्रवेशनमेव। अस्तु तर्हि सर्वमेवेदमनुपपन्नम्। न। अत्रात्मावबोधार्थमात्रस्य विवक्षितत्वात्। सर्वोऽयमर्थवाद इत्यदोषः। मायाविवद्वा महामायावी देवः सर्वज्ञः सर्वशक्तिः सर्वमेतच्चराचरसुखावबोधप्रतिपत्त्यर्थं लोकवदाख्यायिकादिप्रपञ्च इति युक्ततरः पक्षः। न हि सृष्ट्याख्यायिकादिपरिज्ञानात् किञ्चित् फलमिष्यते। ऐकात्म्यस्वरूप-

---

आ॰ दिभ्योऽन्याद्युत्पत्तौ तस्य दाहादिः स्यात् मूर्तस्यैवान्येन संयोजनं कर्तुं शक्यं नात्मनामादेरमूर्तस्य। अग्न्यादीनां शरीरस्थैः पूर्वं प्रार्थनाया अयोगः। तदा गवादिशरीराभावात् स्वयं चाशरीरत्वादानयनायोगः। तेषामशरीरत्वादमूर्तत्वात् प्रवेशानुपपत्तिः। अन्नस्याचेतनस्य पलायनानुपपत्तिः। वागादीनां वक्त्रादिवदस्वादानासामर्थ्यात् तैर्जिघृक्षानुपपत्तिः सर्वमसङ्गतार्थमित्यर्थः। तर्हि सर्वमप्रमाणमस्त्विति कश्चिच्छङ्कते। अस्त्विति॥ विवक्षितार्थे विषं भुङ्क्ष्व। प्रजापतिरात्मनो वपामुदक्खिददित्यादीनामिव प्रामाण्यसम्भवेनाप्रामाण्यं न कस्यचिदपि युक्तं॥ विवक्षितार्थे च नासङ्गतिरिति द्वितीयं दूषयति। नेति॥ लोके स्वयमेव हारं हृत्वाऽनेकेषु गृहेषु प्रतिष्ठितस्य देवदत्तस्यैकत्वदर्शनात्तद्दिशात्मन एकत्वमिति बोधयितुं विदारणप्रवेशने उच्येते न तु सोऽर्थो विवक्षितः। विवक्षितात्मैकत्वबोधद्वारतयोक्तत्वात् प्राशस्त्यार्थवादतयोक्तवपोत्खननादिवदर्थवाद इत्यर्थः। असत एव प्रवेशादेरिहोक्तिरित्यङ्गीकृत्य तस्य गुणार्थवादत्वं वपोत्खननादिवाक्यवदुक्ता अग्निर्हिमस्य भेषजमिति वद्भूतार्थवादत्वमङ्गीकृत्याह। मायावीति॥ मायया घटितमपि सर्वमुपपद्यते। अघटितघटकत्वात्तस्या इत्यर्थः। अनेन सृष्ट्यादेरघटितार्थत्वाद्गन्धर्वनगरादिवन्मृषात्वमेवेति स्पष्टीकर्तुमघटितमपि सृष्ट्यादि मृषा दर्शितमित्युक्तं॥ नन्वात्मावबोधश्चेद्विवक्षितस्तर्हि साक्षादेव स उच्यतां किमनेन वृथा प्रपञ्चनेनेत्यत आह। सुखेति॥ अवबोधः अव-

ऐ॰भा॰ परिज्ञानादमृतत्वं फलं सर्व्वोपनिषत्प्रसिद्धं। स्मृतिषु च गीताद्यासु। समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरमित्यादि। ननु त्रय आत्मानो भोक्ता कर्त्ता संसारी जीव एकः सर्व्वलोकशास्त्रप्रसिद्धः। अनेकप्राणिकर्म्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्म्माणेन लिङ्गेन यथाशास्त्रप्रदर्शितेन पुरप्रासादादिनिर्म्माणलिङ्गेन तद्वि-

---

आ॰ बोधनं प्रतिपादनं सुखेन वक्तुः प्रतिपादनार्थं सुखेन श्रोतुः प्रतिपत्त्यर्थं चेत्यर्थः। ननु लोकसृष्ट्यादेर्म्मानान्तरागोचरत्वेनापूर्व्वत्वात् तत्परत्वमेवाख्यायिकाया अस्त्वित्याशङ्क्यापूर्व्वत्वेऽपि तत्प्रतिपत्त्या फलाभावात् सफलत्वज्ञाने श्रुतेस्तात्पर्य्यनियमात्। अन्यथा स्वर्गोदनादेरप्यपूर्व्वत्वेन तथापि तात्पर्य्यापत्तेर्नाख्याद्यौ तात्पर्य्यमित्याह। न चेति। आत्मप्रतिपत्तौ तु फलदर्शनात् परत्वमेव युक्तमित्याह। ऐकात्म्येति। सर्व्वेति। ब्रह्मवदेव ब्रह्मैव सन् ब्रह्माप्येति अमृतत्वं समेत्य विद्वानमृत इह भवति विद्वानमृतः समभवदित्यादिषु परिज्ञानादमृतत्वं सिद्धमित्यर्थः। समं सर्व्वेषु भूतेष्वित्यनेनैकात्म्यमुक्त्वा समं पश्यन् हि सर्व्वत्र न हिनस्त्यात्मनाऽऽत्मानमिति ज्ञानादमृतत्वमुक्तमित्याह। स्मृतिषु चेति। यत्त्वाऽन्ततममृत इत्यादिविष्णुवाक्यार्थः। सोऽहं स च त्वं स च सर्व्वमेतदात्मस्वरूपं त्यज भेदमोहं। इतीरितस्तेन स राजवर्य्यस्तत्याज भेदं परमार्थदृष्टिरित्यैकात्म्यमुक्त्वा, स चापि जातिस्मरणात् प्रबोधस्तत्रैव जन्मन्यपवर्गमापेत्यादिविष्णुपुराणवाक्यार्थः। आत्मैक्यमेवाख्यायिकार्थं इत्युक्तमर्थं सम्यक्‌ स्थिरीकर्त्तुमाशङ्कते। नन्विति। जीव ईश्वरो निर्व्विशेषं ब्रह्म चेति त्रय आत्मान इत्यर्थः। तत्र जीवोऽयं कर्त्तेति। लोके एष हि द्रष्टा स्प्रष्टा यजेत स्वर्गकाम इत्यादिशास्त्रे च प्रसिद्ध इत्याह। भोक्तेति। एक इति त्रयाणां मध्ये एक इत्यर्थः। येन लोकदेहनिर्म्माणेन लिङ्गेनावगम्यते सर्व्वज्ञ ईश्वरः स द्वितीय इत्याह। अनेकेति। अनेकेषां विचित्राणां प्राणिनां यान्यनेकानि विभिन्नानि कर्म्मफलानि तदुप-

ऐ॰भा॰ पयकौशलज्ञानवान् तत्कर्त्ता तक्षादिरिव । ईश्वरः सर्व्वज्ञो जगतः कर्त्ताऽद्वितीयश्चेतन आत्माऽवगम्यते । यतो वाचो निवर्त्तन्ते । नेति नेतीत्यादिशास्त्रप्रसिद्ध औपनिषदः पुरुषस्तृतीयः । एवमेते त्रय आत्मानोऽन्योन्यविलक्षणाः । तत्र कथमेक एवात्मा अद्वितीयो ऽसंसारीति ज्ञातुं शक्यते । तत्र जीव एव तावत् कथं ज्ञायेत । नन्वेवं ज्ञायते श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञातेति । ननु विप्रतिषिद्धं विज्ञायते यः श्रवणादिकर्त्तृत्वेनाऽमतो मन्ताऽविज्ञातो विज्ञातेति च । तथा न मतेर्मन्तारं मन्वीथा न विज्ञाते-

---

व्या॰ भोगार्थत्वानि यान्यनेकानि विचित्राण्यधिष्ठानानि स्थानविशेषा-स्तदन्तो लोका देहाश्च तेषां निर्म्माणे लिङ्गेनेत्यर्थः । इदं विशेषणं कर्त्तुः सर्व्वज्ञतार्थं । यथाशास्त्रप्रदर्शनेनेति स इमाँल्लोकानसृजतेत्यादिशास्त्रप्रदर्शितलिङ्गेनेत्यर्थः ॥ अनुमाने दृष्टान्तमाह । पुरेति ॥ अचेतनं प्रधानं स्वयमेव विचित्रजगदाकारेण परिणमते न तु सर्व्वज्ञोऽधिष्ठाता कश्चिदिति साङ्ख्याः । तन्निरासायाह । चेतन इति ॥ चेतनानधिष्ठितस्याचेतनस्य स्वतः प्रवृत्त्यदर्शनादवश्यं सर्व्वज्ञश्चेतनोऽधिष्ठाताऽङ्गीकार्य्य इत्यर्थः ॥ तृतीयमाह । यत इति ॥ एकस्यैव रूपभेदेन भेद इत्याशङ्क्याह । एवमिति ॥ अन्योन्येति ॥ अन्योन्यविरुद्धधर्म्मवत्त्वाद् दहनतुहिनवद्भिन्ना इत्यर्थः ॥ तत्र जीवस्य यत् कर्त्तृत्वभोक्तृत्वादिवैलक्षण्यमुक्तं तदसिद्धं तस्य मानान्तराविषयत्वेन तद्धर्म्मवत्तया प्रमातुमशक्यत्वात् ॥ इतो न भेद इत्यभिप्रायेण परिहरति सिद्धान्ती । तत्र जीव एवेति ॥ कथमिति तस्य ज्ञेयत्वाभावे कर्त्तृत्वादिधर्म्मविशिष्टतयापि स ज्ञातुं न शक्यत इत्यर्थः ॥ अविज्ञाताभिप्रायप्रकारः प्रश्नं मत्वा शङ्कते । नन्विति ॥ आदेष्टा वर्णात्मकशब्दवक्ता । आघोष्टा ध्वन्यात्मकशब्दवक्तेत्यर्थः ॥ पूर्व्ववाक्ये स एषोऽश्रुतोऽमतोऽविज्ञात इति विशेषणस्य प्रतिषेधाकाङ्क्षाविरुद्धं ज्ञेयत्वमि-

बृ०भा० विज्ञातारं विजानीयात् इत्यादि च । सत्यं विप्रतिषिद्धं यदि प्रत्यक्षेण ज्ञायते सुखादिवत् प्रत्यक्षज्ञानस्य निवार्य्यते न मतेर्मन्तारमित्यादिना । ज्ञायते तु श्रवणादिलिङ्गेन तत्र कुतो विप्रतिषेधः । ननु श्रवणादिलिङ्गेनापि कथं ज्ञायते यावता यदा शृणोति आत्मा श्रोतव्यः शब्दस्तदा तस्य श्रवणादिक्रिययैव वर्त्तमानत्वान्मननविज्ञानक्रिये न सम्भवत आत्मनि परत्र वा । तथान्यत्रापि मनना-दिक्रियासु श्रवणादिक्रियास्तु स्वविषयेष्वेव । न हि मन्त-व्यादन्यत्र मन्तुर्मननक्रिया सम्भवति । ननु मनसः सर्व्व-मेव मन्तव्यं । सत्यमेवं तथापि सर्व्वमपि मन्तव्यं मन्तार-

---

आ० त्याह । ननु विप्रतिषिद्धमिति । यः श्रवणादिकर्तृत्वेन ज्ञायते स एवात्मसोऽविज्ञातव्यैतेतदिप्रतिषिद्धमित्यन्वयः । सत्यमदे विप्रतिषिद्धत्वेन्याह । तथा न मतेरिति । मतेर्मन्तोऽतस्तेर्मन्तारं साक्षित्वमित्यर्थः । आदिपदेनामतो मन्ताऽविज्ञातो विज्ञाते-त्यादिसङ्ग्रहः । श्रुत्योः प्रमाणाविशेषादिप्रतिषेधानुपपत्तेः प्रत्य-क्षेणाविशेषत्वमनुमानेन विशेषत्वमुच्यते । ताभ्यामिति । प्रकृते पूर्व्ववादी । तस्यामिति । आत्मनि युगपज्ज्ञानद्वयायोगात् श्रव-णादिकाले मननविज्ञानयोरसम्भवात् श्रवणादिना मननविज्ञा-नद्वयात्मविषयकमन्यविषयकं वानुमितिज्ञानं न सम्भवतीत्याह सिद्धान्ती । ननु श्रवणादीति । श्रवणक्रिययैव सह वर्त्तमानत्वात् श्रवणक्रियाधारत्वादात्मनि विषये परविषये वा तस्य मननवि-ज्ञानक्रिये न सम्भवत इत्यर्थः । अत्र प्रकरणे मननविज्ञानश-ब्दाभ्यामनुमितिरुच्यते आत्मनस्तद्विषयत्वस्यैवेह श्रद्धादिनोक्त-त्वादिति तर्हि श्रवणयोर्युगपदसम्भवे अन्यविषयकमननक्रियया आत्मा मन्तव्य इत्याशङ्क्य विजातीयक्रियाद्वयवत् सजातीयक्रिया-द्वयमपि युगपन्न सम्भवतीत्याह । तथेति । मननादिक्रियास्विति मननादिक्रियान्तरमपि न सम्भवतीति शेषः । ननु मननक्रिया

ऐ॰भा॰ मन्तरेण न मन्तुं शक्यं। यद्येवं किं स्यादिदमत्र स्यात्
सर्व्वस्य योऽयं मन्ता स मन्तैवेति न मन्तव्यः स्यात्। न च
द्वितीयो मन्तुर्मन्ताऽस्ति। यदा च आत्मनैव मन्तव्यस्तदा
येन चात्मना मन्तव्यो यश्च मन्तव्य आत्मानौ द्वौ प्रस-

---

आ॰ ष्टि लिङ्गं। न च लिङ्गद्वयस्यमतीतलिङ्गेनाप्यनुमितिदर्शनात्।
किन्तु लिङ्गज्ञानं कारणं। न च तस्याप्यनुमितिकाले सत्त्वनियमः।
पूर्व्वक्षणसत्त्वमात्रेण कारणत्वोपपत्तेरिति तयोर्योगपद्याभावेऽपि
न दोष इति चेत्। न। अयमन्तनाद्यलिङ्गविज्ञानस्य साक्षिरूपस्य
ततो विशेषाभावेन श्रवणादिनिरूपितत्वमेषणैव। तस्यानुमाप-
कस्य वक्तव्यत्वेन तत्सत्ताया अपि तत्काले वक्तव्यत्वादिति भावः॥
ननु तर्हि वाह्यगोचरश्रवणादिक्रियया मन्तुरनुमानं माभूत्
किन्तु वाह्यगोचरश्रवणादिक्रियैवात्मानमपि विषयीकरिष्यती-
त्यत आह। श्रवणादिक्रियाश्चेति॥ स्वविषयगोचरा एव न तु
आत्मविषयगोचरा इत्यर्थः॥ किञ्च न मतेर्मन्तारं मन्वीथा इत्यात्मनो
मन्तव्यत्वनिषेधात् मन्तर्य्यात्मनि मननक्रिया न सम्भवतीत्याह।
न चेति॥ अन्यत्रेति आत्मनीत्यर्थः। कुठारादिक्रियाया दारुणो
ऽन्यत्र व्यापाराद्दर्शनादित्यर्थः॥ ननु मनसो वशे सर्व्वमिदं बभूवेति
श्रुतेः सर्व्वस्य मनोविषयत्वादात्मन्यपि मन्तव्यत्वमेवेति प्राप्ते। ननु
मनस इति॥ एवमपि मनसः करणत्वात् क्रियायाश्च कर्त्तारमन्त-
रेणानुपपत्तेर्मन्ताऽवश्यमङ्गीकर्त्तव्य इति सिद्धान्ती यदाह। स-
त्यमेवमिति॥ तथापीति न मन्वीथा इति विशेषः। श्रुत्या मन्त-
व्यत्वनिषेधादभ्युपगम्योच्यते इति सूचयत्यपिशब्दः॥ अस्तु मन्तु-
रात्मत्वं तावता किं स्यादिति प्राप्ते। यद्येवमिति॥ एवं
सत्यात्मनो मन्तव्यत्वाभावः सिध्यतीत्याह। इदमिति। कुत एत-
दिति चेत्तत्र वक्तव्यं किमात्मनो मनने स्वयमेव मन्ता उतान्यो
वेति विकल्पाद्यं दूषयति। सर्व्वस्येति॥ एकत्र कर्त्तृकर्मभावस्य
विरोधान्मन्तुर्मन्तव्यत्वं न सम्भवतीत्यर्थः। द्वितीये स मन्ता
अनात्माऽऽत्मा वेति विकल्प्य आद्ये आह। न चेति॥ द्वितीय इत्य-
नन्तरमनात्मेति शेषः। अनात्मनोऽचेतनस्य मन्तृत्वानुपपत्तेरि-

ऐ० भा० ज्येयातां। एक एवात्मा द्विधा मन्तृमन्तव्यत्वेन विश-कलीभवेद्वंशादिवदुभयथाप्यनुपपत्तिरेव। यथा प्रदीपयोः प्रकाश्यप्रकाशकत्वानुपपत्तिः समत्वात् तद्वत्। न च मन्तुर्मन्तव्ये मननव्यापारशून्यः कालोऽस्त्यात्ममननाय। यदापि लिङ्गेनात्मानं मनुते मन्ता तदापि पूर्ववदेव लिङ्गेन मन्तव्य आत्मा। यश्च तस्य मन्ता तौ द्वौ प्रसज्येयातां एक एव वा द्विधेति पूर्वोक्तो दोषो न प्रत्य-

---

आ० त्यर्थः। द्वितीयमनुवदति। यदेति। यस्मिन् पक्षे एकस्मिन् शरीरे आत्मद्वयं स्यादित्याह। तदेति। चशब्दौ परस्परसमुच्चयार्थौ। येन चात्मनात्मा मन्तव्यो यश्चात्मा मन्ता इत्यन्वयः। तृतीयान्त-प्रथमान्तयच्छब्दाभ्यामुक्तौ द्वावात्मानौ स्यातामित्यर्थः। एतद्दो-षपरिहारार्थैकस्यैवात्मन एकांशेन मन्तृत्वमंशान्तरेण मन्तव्य-त्वमित्युक्तौ सावयवत्वं स्यादित्याह। एक एवेति। अस्तु को दोष इत्याशङ्क्यात्मभेदे तयोरैकमत्यायोगाद्विरुद्धदिक्प्रियतया शरीरमुन्मथ्येत सावयवत्वे नित्यत्वेन ध्वंसनादिकं स्यादिति दोषमाह। उभयथेति। भिन्नयोरपि समानस्वभावयोर्दी-पयोः कर्तृकर्मभावादर्शनादात्मभेदपक्षे आत्मैकत्वभेदपक्षे वा तयोः समानस्वभावत्वाद्भिन्नयोरिव कर्तृकर्मभावो न सम्भवतीत्यनुपपत्तिप्रकारमाह। यथेति। पराञ्चि खानि व्यतृ-णत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्निति श्रुत्या करणानां बहिर्विषयत्वनियमस्यात्मविषयत्वाभावस्य चोक्तत्वात्। यन्मनसा न मनुते इति श्रुतेश्च। मनसो बहिर्विषये मननाय एव व्यापारो नात्मनीत्याह। न च मन्तुरिति। न चैवं सति कश्चिद्धीरः प्रत्य-गात्मानमैक्षन्मनसैवानुद्रष्टव्यमित्यादीनां का गतिरिति वाच्यं। मनसो बहिर्विक्षेपाभावेनैकाग्र्ये सत्यात्मा स्वयमेव प्रकाशत इति तदर्थत्वात्। अन्यथा पूर्वोक्तन्यायोपबृंहितानामतो विज्ञात इत्यादिनञ्श्रुतिव्याकोपः स्यादिति भावः। एवमात्मनः सा-क्षान्मनसा मन्तव्यत्वपक्षे एकस्मिन् शरीरे आत्मभेदस्तस्य प्रक-

ऐ॰भा॰ ध्येयं नाप्यनुमानेन ज्ञायते चेत् कथमुच्यते मम आ-
त्मेति विद्यादिति। कथं वा श्रोता मन्तेत्यादि। ननु श्रोतृ-
त्वादिधर्म्मवानात्मा अश्रोतृत्वादिप्रसिद्धमात्मनः किमत्र
विषमं पश्यसि। यद्यपि तव न विषमं मम तु विषमं प्रति-

---

आ॰ तीभावो वा स्यादित्युक्तरीत्यनुमितिविषयत्वेऽप्याह। यदा-
पीति ॥ एवमपतो विज्ञात इति श्रुत्वा न्यायोपबृंहितया सर्वा-
त्मना ज्ञेयत्वाभावादिति स्थितं। तत्र पूर्व्ववादी पृच्छते। न प्रत्य-
क्षेणेति ॥ कथमिति ज्ञेयत्वप्रतिपादकश्रुतेः श्रोतृत्वादिधर्म्मवत्त्वप्र-
तिपादकश्रुतेश्चानुपपत्तिरित्यर्थः। तत्र विद्यादिति श्रुतौ इतर-
निषेधे सति स्वप्रकाशत्वेन स्वतः स्फुरणमेवोच्यते न तु कर्म्मतया
वेद्यत्वमिति परिहारं वक्ष्याम इत्यभिप्रेत्य श्रोतृत्वादिश्रुतौ
परिहारमाह। नन्विति ॥ तत्र किं धर्म्मवत्त्वप्रतिपादकस्य का
गतिरिति पृच्छ्यते किं वा श्रोतृत्वादिप्रतिपादकेनाश्रोतृत्वादिक-
मप्रसिद्धमित्युच्यते वेति विकल्प्य आद्यः। नित्यमेव श्रोतृत्वादिध-
र्म्माङ्गीकारादित्याह। श्रोतृत्वादीति ॥ न श्रोता न मन्तेत्यादि-
श्रुतेर्नित्यमेवाश्रोतृत्वादेरपि प्रामाणिकत्वात्। न द्वितीयोऽपी-
त्याह। अश्रोतृत्वादीति ॥ उभयोरविरोधप्रकारश्च वक्ष्याम इति
भावः॥ एवञ्च श्रोता मन्ता न श्रोता न मन्तेति चोभयश्रवणे सति
श्रोतृत्वादिधर्म्मवानेवेत्यन्यतरपरिग्रहवैषम्यं तव न युक्तमि-
त्याह। किमत्रेति ॥ न च श्रोतृत्वश्रुतेरन्यपरत्वोपपत्तेर्न वैषम्य-
मित्याशङ्क्य कालभेदेनोभयोरपि दर्शनादन्यतरस्यान्यपरत्वे हेत्व-
भावात् श्रोतेत्यादिश्रुत्यङ्गीकारे वैषम्यं स्यादेवेत्याह। यद्य-
पीति ॥ अश्रोतृत्वादि प्रसिद्धं चनात्मन इति पाठे नन्विति वाक्य-
मपि प्रश्नान्तरपरत्वेनैव। श्रोतेत्यादिश्रुत्या श्रोतृत्वादिधर्म्मवानात्मा।
ननु तत् कथं स्यादित्यन्वयः। ननु न श्रोतेत्यादिश्रुतेरश्रोतृत्वादि-
धर्म्मवत्त्वमात्मन इत्याशङ्क्य लोकेऽप्रसिद्धेर्नैवमिति स एवाह।
अश्रोतृत्वादीति ॥ उभयोरप्यात्मधर्म्मत्वश्रवणे समानेऽन्यतरस्या-
नात्मधर्म्मत्वाभिधानमयुक्तमिति सिद्धान्ती दूषयति। किमत्रेति ॥
ननु लोकप्रसिद्धिप्रसादनात्मधर्म्मत्वनिश्चयान्न वैषम्यमित्याशङ्क्य

ऐ॰भा॰ भाति। कथम्। यदासौ श्रोता तदा न मन्ता यदा मन्ता तदा न श्रोता। तत्रैवं सति पक्षे श्रोता मन्ता पक्षे न श्रोता नापि मन्ता। तथाऽन्यत्रापि च यदैवं तदा श्रोतृत्वादिधर्मवानात्मा ऽश्रोतृत्वादिधर्मवांश्चेति संशयस्थाने कथं तव न वैषम्यं। यदा देवदत्तो गच्छति तदा न स्थाता गन्तैव। यदोत्तिष्ठति न गन्ता स्थाता एव तदाऽन्यत्र एव गन्तृत्वं स्थातृत्वञ्च न नित्यं गन्तृत्वं स्थातृत्वं वा तद्वत्। तथैवाच काणादादयः पश्यन्ति। पक्षे प्राप्ते नैव

---

आ॰ निराकरोतीति। यद्यपीति। श्रोतृत्वादेरात्मधर्म्मत्वेऽपि प्रसिद्धेरविशेषात् श्रुत्यनुरोधेनोभयोरप्यात्मधर्म्मत्वमिति प्रश्नपूर्व्वकमाह। कथमिति। इतरत् सर्व्वं समानं। त्वया हि कादाचित्कज्ञानेन नित्यमेव श्रोतृत्वादिकमङ्गीक्रियते तदयुक्तमित्याह। यदाऽसाविति। मन्तृत्वमन्तरं न तु नित्यमेव श्रोता मन्ता वेति शेषः। तथान्यत्रापीति। मन्तृत्वविज्ञातृत्वादावप्येवमेव कादाचित्कत्वमित्यर्थः। श्रोतृत्वादेः पाक्षिकत्वं दृष्टान्तेन स्पष्टीकरोति। यदेति। तदाशब्दश्च यदेवमिति पदमध्याहृत्य यदैवं व्यवस्था तदान्यत्र एव गन्तृत्वमिति वाक्यं योज्यं। तद्वदिति श्रोतृत्वादिकमपि न नित्यमित्यर्थः। अस्माकमिवाविदिताभिप्रायाः काणादादय उभयमपि कादाचित्कमेवास्तीति चोदयन्तीत्याह। पक्षेति। ननु सिद्धान्तिनामपि श्रोतृत्वयोरङ्गीकारस्य सिद्धान्तितत्वात् कथं भेद इत्याशङ्क्य तन्मते नित्यवाचित्वो नित्यमेव श्रोतृत्वं। कादाचित्कज्ञानस्य सत्त्वेन तदभावेन च नित्यमेवाश्रोतृत्वं। अस्मन्मते तु कादाचित्कज्ञानेनैव श्रोतृत्वादिकमिति विशेषमाह। संयोगजत्वमिति। ज्ञानस्य कादाचित्कत्वे यौगपद्ये च यथाक्रमं प्रमाणमाह। दर्शयन्ति चेति। युगपदिति यदि मनो न स्यात् तर्हि चक्षुरादीन्द्रियाणां युगपदेव रूपादिभिः सम्बन्धे युगपदेव सर्व्वेन्द्रियैः सर्व्वविषयज्ञानानि स्युः। सामग्र्याः सत्वात्। न

ऐ॰भा॰ श्रोतृत्वादिनात्मोच्यते श्रोता मन्तेत्यादिसंयोगजत्व-
मयौगपद्यञ्च ज्ञानस्य ख्याप्यते । दर्शयन्ति चान्यत्रमना
ऽभवं नादर्शमित्यादि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग-
मिति च न्याय्यम् । भवत्वेवं किं तव नेष्टं । यद्येवं स्यादस्त्वेवं
तवेष्टं चेत् श्रुत्यर्थस्तु न सम्भवति किं न श्रोता मन्तेत्यादि-
श्रुत्यर्थः । न श्रोता मन्तेत्यादिवचनात् । ननु पाक्षिक-
त्वेन मत्युक्तं त्वया न नित्यमेव श्रोतृत्वादि अभ्युपगमात् ।
न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यत इत्यादिश्रुतेः । एवं

---

व्या॰ च तथाऽस्यतः क्रमेण तत्तदिन्द्रियसंयोगि अणुपरिमाणं मनो
ऽङ्गीकार्यं । तथा च युगपत् सर्व्वेन्द्रियैर्मनःसंयोगाभावान्न युग-
पत् सर्व्वविषयकं ज्ञानं । अतो युगपद्रूपादिसर्व्वविषयकज्ञाना-
नुत्पत्तिलिङ्गेन मनोऽस्तीति वदन्तो युगपत् सर्व्वज्ञानानुत्पत्ति-
रित्युक्तवन्त इत्यर्थः । इममर्थं न्याय्यं पश्यन्तीति पूर्व्वेणान्वयः ॥
काणादादिमते सिद्धान्तिना प्रदर्शिते सति तर्हि काणादादि-
रीत्या श्रुतिद्वयोपपत्तेरात्मनः श्रोतृत्वादिधर्म्मसिद्धेश्च न तथैवा-
स्त्विति पूर्व्वपक्षी तटस्थो वा सिद्धान्तिनं प्रति पृच्छते । भवत्विति ॥
यद्येवं न्याय्यं स्यादेवमेव भवतु किं तव नेष्टमित्यर्थः । आत्मनः
कादाचित्कज्ञानेन श्रोतृत्वादिधर्म्मवत्त्वस्य श्रुत्यनभिमतत्वान्न त-
थात्वमिति सिद्धान्ती तं पक्षं दूषयति । अस्त्वेवमिति ॥ ननु
श्रोता मन्तेति श्रुत्या तद्धर्म्मवत्त्वप्रतिपादनात् कथमनभिमतत्वमसि-
द्धमिति शङ्कते । किं चेति ॥ न श्रोतेति श्रुत्या विशेषतः काल-
त्रयेऽपि श्रोतृत्वादिधर्म्माभावप्रतिपादनात् तद्धर्म्मवत्त्वमनभि-
मतमेवेति सिद्धान्ती उत्तरमाह । न श्रोतेति ॥ यदाऽसौ श्रोते-
त्यादिना श्रोतृत्वादेः पाक्षिकत्वस्य त्वयैवोक्तत्वात् काणादपक्षप्रदर्श-
नवेलायाञ्च कादाचित्कज्ञानेन तदुपपादनात् पाक्षिकश्रोतृत्वादि
तदभावविषयतया श्रुतिद्वयस्योपपत्तिं शङ्कते । नन्विति ॥ अपा-
क्षिकत्वेन श्रोतृत्ववदभावयोः श्रुतिभ्यां स्वरसतः प्रतीतेः पाक्षि-

शं॰भा॰ तर्हि नित्यमेव श्रोतृत्वाद्यभ्युपगमे प्रत्यक्षविरुद्धा युगप-
ज्ज्ञानोत्पत्तिरज्ञानाभावश्चात्मनः कल्पितः स्यात्। तथा-
निष्टमिति नोभयदोषोपपत्तिः। आत्मनः श्रुत्यादिश्रोतृ-
त्वादिधर्म्मवत्त्वश्रुतेः। अनित्यानां मूर्त्तानाञ्च चक्षुरादीनां
द्रष्टृत्वाद्यनित्यत्वमेव संयोगवियोगधर्म्मिणां। यथाऽग्नेर्ज्वलनं
तृणादिसंयोगजत्वात्तद्वत्। न तु नित्यस्यामूर्त्तस्यासंयो-
गविभागधर्म्मिणः संयोगजद्रष्टृत्वाद्यनित्यधर्म्मत्वं संभवति।
तथा च श्रुतिः। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत

---

आ॰ कालेन तत्सङ्कोचो न युक्त इति स्वाभिप्रायं विवृण्वन् सिद्धा-
न्त्याह। न नित्यमेवेति। ननु श्रुतेरनित्यत्वे सति तद्घटितं श्रोतृ-
त्वमप्यनित्यमिति सङ्कोच आवश्यकोऽत आह। न हीति। श्रुतेः
श्रोतृत्वस्य चानित्यत्वपक्षं श्रुतिविरुद्धमित्यर्थः। श्रुतिमत्यादीनां
नित्यत्वे युगपत् सर्व्वज्ञानं स्यात् कदाचिदपि कस्यचिदपि ज्ञानस्या-
भावो न स्यात्। श्रुत्यादिशब्दितानां सर्व्वेषां ज्ञानानां नित्यत्वात्।
न चेष्टापत्तिः। प्रत्यक्षविरोधात्। अतो न हि श्रोतुः श्रुतेरित्यादि-
श्रुतेरन्यपरत्वं वक्तव्यमिति शङ्कते। एवं तर्हीति। इतिशब्दः
शङ्कासमाप्त्यर्थः। परिहरति। नोभयेति। युगपज्ज्ञानोत्प-
त्तिरज्ञानभावश्चेत्युभयदोषस्योपपत्तिसम्भवो नास्तीत्यर्थः। श्रो-
तृत्वादेर्नित्यत्वे कथमुभयदोषाभाव इत्याशङ्क्यात्मस्वरूपभूतस्या-
विरूपश्रुत्यादेर्नित्यत्वेऽपि वृत्तिरूपस्यादाचित्कश्रुत्यादेरप्यभ्युपग-
मादुक्तदोषाभाव इति परिहरन् नित्यश्रोतृत्वादिकं दर्शयति।
आत्मन इति। आत्मनः स्वरूपभूतं यत् श्रुत्यादि श्रोत्रमन्यदस्ति-
मत् साक्षिरूपं तदाश्रयश्रोतृत्वादि तद्धर्म्मवत्त्वस्य श्रोता मन्ते-
त्यादिश्रुतेरित्यर्थः। अनित्यश्रुत्यादिकं तर्हि कथमित्याशङ्क्य तद्-
र्शयति। अनित्यानामिति। तेषामनित्यत्वमाह। मूर्त्तानामिति।
द्रष्टृत्वादेरनित्यत्वे हेतुमाह। संयोगेति। संयोगजन्यत्वाद्द्रष्टृत्वा-
देरनित्यत्वमित्यर्थः। ज्वलनमित्यनन्तरमनित्यमित्यनुषङ्गः। ननु
यद्यनित्यद्रष्टृत्वाद्यभ्युपगम्येत तर्हि तदेवात्मनोऽपि धर्म्मोऽस्तु किं

भा॰ इत्यादि। एवं तर्हि द्वे दृष्टी चक्षुषोऽनित्या दृष्टिर्नित्या चात्मनः। तथा च द्वे श्रुती श्रोत्रस्यानित्या आत्मस्वरूपस्य च नित्या। तथा मती विज्ञाती वाह्यावाह्ये। एवं ह्येव चेयं श्रुतिरुपपन्ना भवति दृष्टेर्द्रष्टा श्रुतेः श्रोता इत्याद्या। लोकेऽपि प्रसिद्धं चक्षुषस्तिमिरागमापाययोर्नष्टा दृष्टिर्जाता दृष्टिरिति चक्षुर्दृष्टेरनित्यत्वं। तथा श्रुति-

---

टी॰ नित्यदृष्ट्यादिनैकत्व आह। नन्विति। नित्यत्वादमूर्त्तत्वममूर्त्तत्वात् संयोगादिधर्म्मराहित्यं ततः संयोगजदृष्ट्याद्यसम्भव इत्यस्यात्मनो नित्यदृष्ट्याद्यनुपपन्नत्वमित्यर्थः। श्रुतिबलेऽपि नित्यदृष्ट्यादिसिद्धिरित्याह। तथा चेति। नित्यानित्यदृष्टिद्वयाङ्गीकारे गौरवमिति शङ्कते। एवं तर्हीति। श्रुतिप्रामाण्याद् द्वैविध्याङ्गीकारे गौरवं प्रामाणिकमित्याह। एवं ह्येवेति। तथा चेति॥ चोऽवधारणे तथैवेत्यर्थः। दृष्टेर्द्रष्टेति दृष्टिविषयकदृष्टिमानिति तदर्थः। तत्र विषयविषयिभावस्यैकस्मिन्नसम्भवाद्दृष्टिद्वयं प्रतीयत इति दृष्टिद्वैविध्ये सत्येवेयं श्रुतिरुपपद्यते नान्यथेत्यर्थः॥ तिमिररोगस्यागमे नष्टा दृष्टिः अपाये च जाता दृष्टिरिति प्रतीतिर्जन्मनाशयोगिनी चानित्या दृष्टिरेका। तदीयजन्मनाशप्रसाक्षिभूता द्वितीया दृष्टिरस्तीति लोकेऽपि प्रतीयत इत्याह। लोकेऽपीति॥ चक्षुर्दृष्टेरित्युपलक्षणमात्मदृष्टेर्नित्यत्वं प्रसिद्धमित्यपि द्रष्टव्यं। तथा च श्रुतिमत्यादीनामपि नित्यत्वमनित्यत्वञ्च प्रसिद्धमित्यनुषङ्गः। आत्मदृष्ट्यादीनां नित्यत्वे हेत्वन्तरमाह। आत्मदृष्ट्यादीनाञ्चेति। स्वप्ने चक्षुषोऽभावेऽपि दृष्टेः सत्त्वान्न सा चक्षुर्जन्येति नित्यैवेत्यर्थः। चक्षुः स्वप्नेऽप्यनुपरतमिति यदि कश्चिद्ब्रूयात् तं प्रति उद्धृतचक्षुरिति तस्य चक्षुःसत्त्वे प्रसक्तिरेव नास्तीत्यर्थः। अवगमेति अवगतं निश्चितं बाधिर्य्यं यस्येत्यर्थः। न च स्वप्ने दृष्ट्यादेश्चक्षुराद्यजन्यत्वात् कथं दृष्टिश्रुत्यादिशब्दवाच्यत्वमिति वाच्यं। रूपादिविषयकापरोक्षभासकत्वेन दृष्ट्यादिशब्दवाच्यत्वादिति भावः। उक्तमर्थं विपर्यये बाधकोक्त्या द्रढयति।

ऐ॰भा॰ सत्यादीनामात्मदृष्ट्यादीनाञ्च नित्यत्वं प्रसिद्धमेव। लोके वदति ह्युद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति। तथावगतबाधिर्य्यः स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि। यदि चक्षुःसंयोगजैवात्मनो नित्यदृष्टिस्तन्नाशे नश्येत तदोद्धृतचक्षुः स्वप्ने नीलपीतादीनि न पश्येत्। न हि द्रष्टुर्दृष्टेरित्याद्या च श्रुतिरनुपपन्ना स्यात्। तच्चक्षुः पुरुषे येन स्वप्नं पश्यतीत्याद्या च श्रुतिः। नित्यात्मदृष्टिर्बाह्यानित्यदृष्टेर्ग्राहिका। बाह्यदृष्टेश्चोपजनापायाद्यनित्यधर्म्मवत्त्वाद्ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वं। अनित्यत्वादि-

---

आ॰ यदीति। न पश्येदिति दर्शनहेतोश्चक्षुषोऽभावादित्यर्थः। न चेदं दर्शनं स्मृतिरिति वाच्यं। तथा सति सन्निहितत्वेनापरोक्षाभासो न स्यात्। न च तदंशे भ्रम इति वाच्यं। बाधकाभावात् पूर्व्वमननुभूतं भ्रात्रादिदर्शनञ्च न स्यादिति भावः। इदमुपलक्षणं सुखमहमस्वाप्समिति परामर्शहेतुभूतसुषुप्तिकालीनानुभवोऽपि नित्योऽभ्युपगन्तव्यः। तदानीं सर्व्वकरणानामभावेनानित्यानुभवाभावादित्यपि द्रष्टव्यं। न केवलं प्रत्यक्षस्यानुपपत्तिः श्रुतिरप्यनुपपन्ना स्यादित्याह। न हि द्रष्टुरिति। न हि श्रोतुः श्रुतेर्व्विपरिलोपो विद्यत इत्याद्या चैवमेव गृह्यते। तच्चक्षुरिति। चष्टे इति चक्षुः। द्रष्टा साक्षी पुरुषे आत्मनि शरीरे वा। येन स्वप्नं पश्यति तच्चक्षुः साक्षीत्याद्या चानुपपन्ना स्यादित्यनुषङ्गः। स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यतीत्यादिरादिशब्दार्थः। अन्यात्मदृष्टेर्न्नित्यत्वे कथं तस्या अनित्यत्वप्रतीतिः। कथं वा लोकस्यानित्यैव सर्व्वापि दृष्टिरिति निश्चय इत्याशङ्क्य ग्राह्यानित्यदृष्टिगतमनित्यत्वादि सर्व्वं ग्राहिकायां नित्यदृष्टौ भासते। ग्राह्याऽयःपिण्डगतवर्त्तुलत्वादिधर्म्माणां दाहकाग्न्यादौ भानदर्शनादतो लोकस्य तथा प्रतीतिरुपपद्यत इत्याह। नित्येत्यादिना। तद्वदवभासत्वमिति ग्राह्यवदवभासमानत्वमित्यर्थः। ग्राह्यधर्म्मस्य

ऐ०भा० भ्रान्तिनिमित्तं लोकस्येति युक्तं। यथा भ्रमणादिधर्म्म-
वद्जालादिवस्तुविषयदृष्टिरपि भ्रमतीव तद्वत्। तथा च
श्रुतिः। ध्यायतीव लेलायतीवेति। तस्मादात्मदृष्टेर्नित्य-
त्वान्न यौगपद्यमयौगपद्यं वास्ति। वाह्यानित्यदृष्ट्युपाधिवशात्
लोकस्य। तार्किकाणां त्वागमसम्प्रदायवर्ज्जितत्वादनित्या-
त्मनो दृष्टिरिति भ्रान्तिरुपपन्नैव। जीवेश्वरपरमात्मभेदक-

---

व्या० प्रागुक्तं भाष्यं दृष्टान्तेन स्पष्टयति। यथा भ्रमणादीति। आदि-
शब्देन गमनादि गृह्यते। द्वितीयेन धावत् पश्वादि। ध्यायती-
वेति श्रुत्या बुद्धिगतं ध्यानादिकं आत्मनि तादात्म्यात् भासते इति
श्रुत्यर्थः। एतच्च यत्पूर्व्वं श्रादिना युगपदनेकशब्दोत्पत्तिः प्रत्यक्षविरु-
द्धा इत्यादिना तत् परिहृतमित्याह। तस्मादिति। तस्मादित्य-
स्यार्थमाह। आत्मदृष्टेरिति। पूर्व्वोक्तनिरूपितस्य यौगपद्यस्य
तदभावरूपस्यायौगपद्यस्यैकस्यां दृष्टौ तदुभयमपि नास्तीत्यर्थः।
नन्वात्मदृष्टेर्नित्यत्वे पक्षं परीक्षाकुशलानां नैयायिकानां सर्व्वस्य
च भ्रमः स्यादित्याशङ्क्य न तर्केणागमेन प्रोक्त एष सुविज्ञेयो
बहुधा चिन्त्यमानः नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सु-
ज्ञानाय प्रेष्ठेत्यादिश्रुतेः स्वबुद्ध्या आत्मतत्त्वस्याज्ञानात् सम्प्रदाय-
परम्परयैव आगम्यत्वाभावात् तेषां तद्विरुद्धत्वाद्भ्रमो युक्त
इत्याह। वाह्यानित्येति। न केवलं आत्मभेदपक्षे एव तेषां
भ्रमः किन्त्वात्मभेदकल्पनाद्येतन्मूलो भ्रम इत्येतदाह। जीवेश्व-
रेति। एतन्निमित्तेति आत्मानित्यत्वतद्भेदकल्पनानिमित्तैव नि-
त्यानित्यज्ञानवतोर्जीवेश्वरयोर्विभिन्नज्ञानवत्त्वात् जीवानां पर-
मात्मनश्चैकत्वं न सम्भवतीति युक्त्याभासेन तैर्भेदकल्पनादि-
त्यर्थः। किञ्चात्मनैवायं ज्योतिषाऽऽस्ते अयमात्मा ब्रह्म सर्व्वानुभूः
प्रज्ञानघन एवेत्यादिश्रुतिभ्य आत्मन एव नित्यदृष्टिरूपत्वादा-
त्मनश्च सर्व्वाः प्रजा यथैकं भवन्तीत्यादिना सर्व्वकल्पनां तन्मा-
त्रत्वेन तद्व्यतिरेकेणाभावेऽपि निर्व्विशेषत्वात्तद्रूपाया अपि दृष्टे-
र्निर्व्विशेषत्वात् सम्यगात्मज्ञानाधाराः सर्व्वाः कल्पना भ्रान्तिनिमित्ता

ऐ॰भा॰ मन्त्रादीनामात्मदृष्ट्यादीनाञ्च नित्यत्वं प्रसिद्धमेव । लोके वदति ह्युद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति । तथावगतबाधिर्यः स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि । यदि चक्षुःसंयोगजैवात्मनो नित्यदृष्टिस्तन्नाशे नश्येत तदोद्धृतचक्षुः स्वप्ने नीलपीतादीनि न पश्येत् । न हि द्रष्टुर्दृष्टेरित्याद्या च श्रुतिरनुपपन्ना स्यात् । तच्चक्षुः पुरुषे येन स्वप्नं पश्यतीत्याद्या च श्रुतिः । नित्यात्मदृष्टिर्बाह्यानित्यदृष्टेर्ग्राहिका । बाह्यदृष्टेश्चोपजनापायाद्यनित्यधर्मवत्त्वाद्ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वं । अनित्यत्वादि-

---

आ॰ यदीति ॥ न पश्येदिति दर्शनहेतोश्चक्षुषोऽभावादित्यर्थः । न चेदं दर्शनं स्मृतिरिति वाच्यं । तथा सति सन्निहितविषयदेशाभावो न स्यात् । न च तद्दर्शनं भ्रम इति वाच्यं । बाधकाभावात् पूर्व्वमननुभूतं भ्रात्रादिदर्शनञ्च न स्यादिति भावः । इदमुपलक्षणं सुखमहमस्वाप्समिति प्रत्यभिज्ञाहेतुभूतसुषुप्तिकालीनानुभवोऽपि नित्योऽभ्युपगन्तव्यः । तदानीं सर्व्वकरणानामभावेनानित्यानुभवाभावादित्यपि द्रष्टव्यं । न केवलं प्रत्यक्षस्यानुपपत्तिः श्रुतिरप्यनुपपन्ना स्यादित्याह । न हि द्रष्टुरिति ॥ न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यत इत्याद्या चेत्यनेन गृह्यते । तच्चक्षुरिति । चष्टे इति चक्षुः । मता साक्षी पुरुषे आत्मनि शरीरे वा । येन स्वप्नं पश्यति तच्चक्षुः साक्षीत्याद्या चानुपपन्ना स्यादित्यनुषङ्गः ॥ स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यतीत्यादिरादिशब्दार्थः । नन्वात्मदृष्टेर्नित्यत्वे कथं तस्या अनित्यत्वप्रतीतिः । कथं वा लोकस्यानित्यैव सर्व्वापि दृष्टिरिति निश्चयश्चेत्याशङ्क्य बाह्यानित्यदृष्टिगतमनित्यत्वादि सर्व्वं ग्राहिकायां नित्यदृष्टौ भासते । बाह्यायःपिण्डगतवर्त्तुलत्वादिधर्म्मा यथा दाहकाग्न्यादौ भ्रमदर्शनादतो लोकस्य तथा प्रतीतिरुपपद्यत इत्याह । नित्येत्यादिना ॥ तद्वदवभासत्वमिति ग्राह्यवदवभासमानत्वमित्यर्थः । ग्राह्यधर्म्मस्य

ऐ० भा० भ्रान्तिनिमित्तं लोकस्येति युक्तं। यथा भ्रमणादिधर्म्म- वदलातादिवस्तुविषयदृष्टिरपि भ्रमतीव तद्वत्। तथा च श्रुतिः। ध्यायतीव लेलायतो वेति। तस्मादात्मदृष्टेर्नित्य- त्वान्न यौगपद्यमयौगपद्यं वास्ति। बाह्यानित्यदृष्ट्युपाधिवशात् लोकस्य। तार्किकाणां त्वागमसम्प्रदायवर्ज्जितत्वादनित्या- त्मनो दृष्टिरिति भ्रान्तिरुपपन्नैव। जीवेश्वरपरमात्मभेदक-

---

आ० ग्राहके भानं दृष्टान्तेन स्पष्टयति। यथा भ्रमणादीति॥ आदि- शब्देन गमनादि गृह्यते। द्वितीयेन धावत् मशादि। ध्यायती- वेति ग्राह्यबुद्धिगतं ध्यानादिकं ग्राहके साक्षिण्यि भासते इति श्रुत्यर्थः। एवञ्च यत्पूर्व्वं वादिना युगपदनेकज्ञानोत्पत्तिः प्रत्यक्षविरु- द्धा स्यादित्युक्तं तत् परिहृतमित्याह। तस्मादिति॥ तस्मादित्य- स्यार्थमाह। आत्मदृष्टेरिति॥ अनेकनिरूपितत्वाद्यौगपद्यस्य तदभावरूपत्वादयौगपद्यस्यैकस्यां दृष्टौ तदुभयमपि नास्तीत्यर्थः। ननु आत्मदृष्टेर्नित्यत्वे कथं परीक्षाकुशलानां नैयायिकानां सर्व्वस्य च भ्रमः स्यादित्याशङ्क्य न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सु- ज्ञानाय प्रेष्ठेत्यादिश्रुतेः स्वबुद्ध्या आत्मतत्त्वस्यावगमात् सम्प्रदाय- परम्परयैव आत्मतत्त्वावगमाच्च तेषां तद्वर्ज्जितत्वाद्भ्रमो युक्त इत्याह। बाह्यानित्येति॥ न केवलं आत्मभेदकल्पनैव तेषां भ्रमः किन्त्वात्मभेदकल्पनाप्येतन्मूलो भ्रम एवेत्याह। जीवेश्व- रेति॥ एतन्निमित्तेति आत्मानित्यत्वतद्भेदकल्पनानिमित्तैव नि- त्यानित्यज्ञानवतोर्जीवेश्वरयोर्व्विभिन्नज्ञानवत्त्वाच्च जीवानां पर- मात्मनश्चैकत्वं न सम्भवतीति युक्त्याभासेन तैर्भेदकल्पनादि- त्यर्थः। किञ्चात्मनैवायं ज्योतिषाऽऽस्ते अयमात्मा ब्रह्म सर्व्वानुभूः प्रज्ञानघन एवेत्यादिश्रुतिभ्य आत्मन एव नित्यदृष्टिरूपत्वादा- त्मनश्च सर्व्वाः प्रजा यथैकं भवन्तीत्यादिना सर्व्वकल्पना तन्मा- त्रत्वेन तद्व्यतिरेकेणाभावोक्तेर्निर्व्विशेषत्वात्तद्रूपाया अपि दृष्टे- र्निर्व्विशेषत्वात्तस्यागन्तुकीयायाः सर्व्वाः कल्पना भ्रान्तिनिमित्ता

बृ॰भा॰ ल्पना चैतन्निमित्तैव। तथाऽस्ति नास्ति अस्ति नास्तीत्या-
द्याश्च यावन्तो वाङ्मनसयोर्भेदा यत्रैकं भवति तद्विषयाया
नित्यायाद्दृष्टेर्निर्विशेषाया अस्ति नास्तीत्येकं नानागुण-

---

आ॰ एवेत्याह । तथाऽस्तीति । यावन्तो वाग्भेदानामविशेषा म-
नसो भेदा रूपविशेषा यत्रात्मन्येकं भवन्ति सर्वे वेदा यत्रैकं
भवन्ति सर्वाः प्रजा यत्रैकं भवन्तीत्यादिश्रुतेस्तद्विषयायास्तत्स्वरू-
पायाः । अत एव नित्याया निर्विशेषाया दृष्टेरस्तीत्यादिकल्पना
आस्तिकानां । नास्तीति कल्पना शून्यवादिनां । अस्ति नास्तीति क-
ल्पना दिगम्बराणां । अन्येषाञ्च यथायथं सावयवत्वादिकल्पना सा
सर्वाऽपि तथा भ्रान्तिनिमित्तैवेति पूर्वेणान्वयः । ननु ते ते तार्किका
आत्मनोऽस्तित्वादीन् तर्कैश्च साधयन्ति। अतो न तेषां भ्रान्ति-
निमित्तत्वमित्याशङ्क्य श्रुतिविरुद्धत्वादसङ्गे आत्मन्यनुपपत्तेस्तेषां
कल्पनानां सत्ये मोक्षानुपपत्तेश्च। तेषां तार्किकाणां कल्पना
न प्रमाणपथमारोहतीत्याह । अस्ति नास्तीति । सुषुप्तौ न
ज्ञानादन्यत्र नानास्तीति चार्वाकस्याभाववादकल्पना वैषयिका-
दीनामात्मा परलोकं प्रतिगच्छतीति केषाञ्चित् क्रियावत्त्वकल्पना
इहैव स्थित्वा शरीरान्तरं प्रज्ञातीत्यन्येषां देहात्मवादे क्षणि-
कविज्ञानवादे वा पूर्वं परलोकस्थायिनोऽभावात्। अन्येषां फल-
वद्देहात्मक्षणिकवादिपक्षे एव कर्म तद्वासनानामाश्रयाभावात्
परलोके निर्बीजं नित्यात्मवादिनां सबीजं दुःखसुखरूपं
वैशेषिकादिवादे । यदा विज्ञानवादे सोपप्लवचित्तसन्तानरू-
पस्य संसारिणो देहत्वाद्याकारादुःखरूपत्वमात्मनः शरीरमध्य
एव वर्तत इति दिगम्बराणां मते। अन्येषान्तु तदहिरप्यस्तीत्य-
मध्यमं परोऽहमिति ततः परोऽयमहं ततोऽन्य इति पृथक् परा-
गभेदादिकल्पना अस्तीत्याद्याः परोऽयमहमन्य इत्यन्ताः कल्पना
वाङ्मनसयोर्गोचरे वाङ्मनसोर्गोचरे यो विकल्पयितुमिच्छती-
त्यन्वयः । आरोढुमिव खमित्यनुषङ्गो यथा मीनाना खे
पयसामित्यन्वयः । वाङ्मनसभेदा आत्मनि प्रयन्ति । तदगोच-
रत्वादित्यत्र प्रमाणं श्रुतिदर्शयमाह । नेति नेतीति । वाङ्मन-

ऐ० भा० वदगुणं। जानाति न जानाति क्रियावदक्रियं। फलवदफलं। सबीजं निर्बीजं। सुखं दुःखं। मध्यममध्यमं। शून्यमशून्यं। परोऽहमन्य इति वा सर्व्ववाक्प्रत्ययागोचरे परे यो विकल्पयितुमिच्छति स नूनं खमपि चर्म्मवद्वेष्टयितुमिच्छति। सोपानमिव च खं पद्भ्यामारोढुमिच्छति। जले खे च मीनानां वयसाञ्च पदं दिदृक्षते। नेति नेति यतो वाचो निवर्त्तन्त इत्यादि श्रुतिभ्यः। कोऽद्धा वेदेत्यादि मन्त्रवर्णात्। कथं तर्हि तस्य मम आत्मेति वेदनं ब्रूहि केन प्रकारेण तमहं मम आत्मेति विद्यां। अत्राख्यायिकामाचक्षते। कश्चित् किल मनुष्यो मुग्धः कैश्चिदुक्तः कस्मिंश्चिदपराधे सति धिक् त्वां नासि मनुष्य इति। स मुग्धतया ऽऽत्मनो मनुष्यत्वं प्रत्याययितुं कञ्चिदुपेत्याह। ब्रवीतु भवान् कोऽहमस्मीति। स तस्य मुग्धतां ज्ञात्वाऽऽह। क्रमेण

---

व्या० सगोचरे श्रुत्यन्तरमाह। कोऽद्धेति। अत्र साद्धाद्दिदेति मनोगोचरत्वं स इह प्रावोचदिति वाग्गोचरत्वस्य निषेधतीत्यर्थः। वाङ्मनसागोचरत्वे अवयमनयोरसम्भवादात्मनो वेदनं न सम्भवतीति शङ्कते। कथमिति। तर्हि नास्त्यात्मवेदनमित्याशङ्क्य श्रुतेरनतिशङ्क्यत्वादात्मवेदनविधायोगात्तदुपायं पृच्छामीत्याह। ब्रूहीति। केन प्रकारेण मम आत्मेति विद्यात् तं प्रकारं ब्रूहीत्यन्वयः। नेति नेतीत्यादिश्रुत्युदाहृतमेवेतरनिषेधेनैव तस्य स्वप्रकाशस्य बोध इति वेदनप्रकारस्योक्तत्वात् प्रकारान्तरस्याभावादनेनैव प्रकारेणाविषयतया वेदितव्य इति मत्वा सोपाख्यानमुत्तरमाह। अत्राख्यायिकामिति। मुग्ध इति मूढ इत्यर्थः। स्थावरादीति। न त्वं स्थावरादिरूप इत्युक्तोऽर्थः। नन्वितरनिषेधेन तद्वेदनात्तेऽपि त्वमेवम्भूत इत्यनभिधानेऽहमेवम्भूत इति

शं०भा० बोधयिष्यामीति स्थावराद्यात्मभावमपोह्य न त्वममनुष्य इति उक्त्वा उपरराम । मुग्धः स तं प्रत्याह । भवान् मां बोधयितुं प्रवृत्तस्तूष्णीं बभूव किं न बोधयतीति । तादृगेव तद्भवतो वचनं नासि त्वममनुष्य इति उक्ते मनुष्यत्वमात्मनो न प्रतिपद्यते यः स कथं मनुष्योऽसीत्युक्तेऽपि मनुष्यत्वमात्मनः प्रतिपद्येत । तस्माद्यथाशास्त्रोपदेश एवात्मावबोधविधिर्नान्यः । न ह्यग्नेर्दाह्यं दाह्यान्येन केन चिद्दग्धुं शक्यं । अत एव शास्त्रं आत्मस्वरूपं बोधयितुं प्रवृत्तं सदमनुष्यत्वप्रतिषेधेनैव नेति नेतीत्युक्त्वोपरराम । तथा

---

आ० ज्ञानाभावापादर्थे विधिमुखेन बोधनं कार्यमत आह । नासीति । अपरोक्षतया प्रतीयमानवस्तुनि विपर्ययेण प्रतीते विपर्यये निरासमात्रे यत्नः कार्यो न तु स्वरूपबोधे तस्य स्वयमेव प्रतीतेः । तथापि चेन्न बोद्धुं न शक्नोति तर्हि मूढत्वादुपदेशानर्ह एव स इत्यर्थः । अतः प्रकृते आत्मनो मिथ्याध्यारोपस्यार्थे अमनुष्य इत्यादिनापवादरूपेण प्रतीतेस्तस्य नेति नेति । यतो वाचो निवर्तन्त इत्यादिनिषेधे कृते स्वप्रकाशस्य नियमेन प्रतीतिसम्भवादयमेवोपदेशप्रकारो नान्य इत्युपसंहरति । तस्मादिति । ननु शास्त्रं विनाप्यन्यतो विधिमुखेनात्मावबोधो दृष्टोऽस्त्वत आह । न हीति । शास्त्रैकसमधिगम्यत्वादात्मनो न हेत्वन्तरेण बोधः सम्भवतीत्यर्थः । शास्त्रीयोऽप्यवबोधप्रकारोऽयमेव नान्य इतीतरनिषेधमात्रेणोपरमादवसीयत इत्याह । अत एवेति । इत्यनुशासनमिति पदेनार्थादनुशासनान्तरनिषेधादप्येवमेवेत्याह । तथान्तरमिति । तत्त्वमसीत्यत्रापि तत्पदार्थसामानाधिकरण्येन त्वंपदार्थे कर्तृत्वादिनिषेधेनैव तस्य ब्रह्मत्वबोध इत्याह । तत्त्वमसीति । तत् केन कं पश्येदिति दर्शनक्रियाकर्मत्वनिषेधादप्यवेद्यत्वमेवात्मनो ज्ञानमित्याह । यत्र त्वस्येति । एवमादयोऽपीति वेद्यत्वं निषेधतीति शेषः । तस्मादा-

ऐ॰उ॰ पुरुषे ह वा अयमादितो गर्भो भवति ।

ऐ॰भा॰ ऽनन्तरमवाचममयमात्मा ब्रह्म सर्व्वानुभूरित्यनुशासनं तत्त्वमसि । यत्र त्वस्य सर्व्वात्मैवाभूत्तत् केन कं पश्येदित्येव-मादपि यावदयमेवं यथोक्तमिममात्मानं न वेत्ति तावदयं बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्याविद्योपाधि-धर्म्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्य्यन्तेषु देवतिर्य्यङ्-निरयस्थानेषु पुनःपुनरावर्त्तमानो ऽविद्याकामकर्म्मवशात् संसरति । स एवं संसरन्नुपात्तदेहेन्द्रियसङ्घातं त्यजति । त्यक्त्वा ऽन्यमुपादत्ते । पुनःपुनरेवमेव नदीस्रोतोवज्जन्म-मरणप्रबन्धाविच्छेदेन वर्त्तमानः काभिरवस्थाभिर्वर्त्तत इत्येतमर्थं दर्शयन्त्याह श्रुतिः । वैराग्यहेतोरयमेवाविद्या-

टी॰ त्मनः कर्त्तृत्वादिधर्म्मकतया प्रमाणेन ज्ञातुमशक्यस्यात्मनो ब्रह्म-प्रतीतिरज्ञानमूलत्वेन भ्रमत्वात् संसारित्वेन प्रतीतस्य वस्तुतो ब्रह्ममात्रत्वादनेनैव न्यायेनेश्वरस्यापि सर्व्वज्ञत्वादेरौपाधिकत्वेन भ्रमत्वाद्भेदे मानाभावात्तस्यापि वस्तुतो ब्रह्ममात्रत्वाच्च अथ या-त्मनः नित्यात्मैक एवाखण्डैकरस इत्यभिप्रेत्यैवम्भूतस्य कथं संसा-रप्रतीतिरित्याशङ्क्यात्मनः संसारस्याज्ञानत्वमौपाधिकत्वमुत्तरा-ध्यायसङ्गत्युपयोगितयाह । यावदयमिति ॥ बाह्यानित्यदृष्टिल-क्षणमिति प्रत्यगात्मनो बाह्यमन्तःकरणवर्त्तिं वृत्तिमतोऽभेदा-दन्तःकरणमित्यर्थः ॥ एवमध्यारोपापवादाभ्यामात्मतत्त्वं निरू-प्येदानीं तत्त्वज्ञाने वैराग्यं हेतुरिति तदर्थं जीवावस्थाः प्रपञ्च-यन्नर्थात्तस्य अथ यावत्तथा इत्युपक्रान्तं शरीरत्रयस्य प्रपञ्चयितुं प्रथमाध्यायमवतारयन् भूमिकां करोति । स एवमिति ॥ याव-दयमित्यारभ्य वा उत्तराध्यायस्य भूमिका ॥ इदानीमध्यायमवता-रयति । स एवमिति । इत्येतमर्थमिति जिज्ञासायामवस्था-रूपमित्यर्थः । वैराग्यहेतोरिति । वैराग्यार्थमित्यर्थः । जीवा

ऐ॰उ॰ यदेतद्रेतस्तदेतत् सर्व्वेभ्योऽङ्गेभ्यस्तेजः सम्भृत-

ऐ॰भा॰ कामकर्म्मवान् यज्ञादिकर्म्म कृत्वा अस्माल्लोकाद्धूमादिक्रमेण चन्द्रमसम्प्राप्य क्षीणकर्म्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्यान्नभूतः पुरुषाग्नौ हुतः। तस्मिन् पुरुषे ह वै अयं संसारी रसादिक्रमेणादितः प्रथमं रेतोरूपेण गर्भो भवतीति तदाह। यदेतत् पुरुषे रेतस्तेन रूपेणेति। तच्चैतद्रेतोऽन्नमयस्य पिण्डस्य सर्व्वेभ्य अङ्गेभ्यो रसादिलक्षणेभ्यस्तेजः साररूपं शरीरस्य सम्भूतं परिनिष्पन्नं तत् पुरुषस्या-

---

आ॰ वस्थारूपस्य जन्मत्रयस्यात्यन्त बीभत्सरूपत्वात् तद्विचारे वैराग्यं भवतीतिभावः। पुरुषे ह वा अयमित्यनेन शब्दार्थमाह। अयमित्यादिना। यो मूर्द्धानं विदार्य्य प्रविश्य स्थितः सोऽयमित्युच्यत इत्यर्थः। यज्ञादीति। अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीत्यादिना पञ्चाग्निविद्यायामयमर्थः प्रसिद्ध इत्यर्थः। अन्नभूत इति व्रीह्याद्यन्नसंश्लिष्टः पुरुषाग्नौ हुतः पुरुषेण भक्षित इत्यर्थः। तस्मिन्निति येन पुरुषेण भक्षितस्तस्मिन्नित्यर्थः। पुरुषे ह वाऽयं संसारी आदितः प्रथमतः स्त्रीगर्भप्रवेशात् पूर्व्वं गर्भो भवती[illegible] । पुरुषे स्त्रियामिव [illegible] इष्यते इत्याह [illegible] रसादिक्रमेण रे[illegible] सति [illegible] तथैव रे[illegible] संश्लेषेण रे[illegible] तेन [illegible] विर[illegible] मानकस्य [illegible]

ऐ॰उ॰ त्मन्येवात्मानं बिभर्ति तद्यथा स्त्रियां सिञ्च-
त्यथैतज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥
तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं

---

ऐ॰भा॰ ऽऽत्मभूतत्वादात्मा । तमात्मानं रेतोरूपेण गर्भीभूत-मात्मानमात्मन्येव स्वशरीरे एव बिभर्ति धारयति। तद्रेतो यदा यस्मिन् काले भार्या ऋतुमती तस्यां योषाऽग्नौ स्त्रियां सिञ्चति। उपगच्छन्नथ तदेतद्रेत आत्मनो गर्भभूतं जनयति पिता। तस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतोरूपेणास्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः ॥ १ ॥

तदेतदुक्तं पुरस्तादथावात्माऽमुमात्मानमित्यादिना । तद्रेतो यस्यां स्त्रियां सिक्तं सत् तस्या आत्मभूयमात्माव्यति-

---

आ॰ रस्य सारत्वमवेत्यर्थः । आत्मभूतत्वादिति । आत्माभिमानवि-षयशरीरभूतत्वादात्मानं गर्भीभूतं बिभर्तीति वक्ष्यमाणानुषङ्गेण वाक्यं पूरणीयं । उत्क्रमर्थं शुक्लादावुक्तं करोति । आत्मनीति । अत्र आत्मनेत्यत्र न पुनरुक्तिदोषः । एवं पितृशरीरस्थरूपता-वस्थां । तत्र रेतोरूपेणावस्थानं योषा मातृदेहस्थरूपावस्थां तत्र गर्भरूपेणावस्थानं च दर्शयितुं पितृशरीरान्निर्गमनरूपं जन्म दर्शयति । तदेत इति । यदेत्युक्तं कालं विशदयति । भार्येति । यस्यामिति विधाय योषा वाव गौतमाग्निरित्यादिनाऽयमर्थो दर्शित इति वक्तुं योषाग्नावित्युक्तं । उपगच्छन्निति भार्यां सङ्गच्छन्नि-त्यर्थः । अस्य रेतोरूपेण स्थानान्निर्गमनमित्यन्वयः ॥ १ ॥

रेतो भार्यायां सिक्तमित्यत्र वाक्यान्तरं संवादयति । तदेत-दिति । अथावात्मा पुरुषोऽमुमात्मानं स्वीयं रेतोरूपमात्मान-मसौ आत्मने भार्यारूपाय सङ्गच्छतीत्यर्थः । ननु स्त्रीशरीरे प्रविष्टं पुरुषस्य रेतः स्त्रिया उपद्रवकारि स्यात् शरीरस्थव्याधि-वदित्याशङ्क्योक्तं तत् स्त्रिया इत्यादि । तदेतद्व्याचष्टे । तद्रेतो

ऐ०उ० तथा । तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति ॥ २ ॥

सा भावयित्री भावयितव्या भवति तं स्त्रीगर्भं

---

ऐ०भा० एकतां यथा पितुरेवं गच्छति प्राप्नोति यथा स्वमङ्गं स्तनादि तथा तद्वदेव । तस्माद्धेतोरेनां मातरं स गर्भो न हिनस्ति पिटकादिवत् । यस्मात् स्तनादि स्वाङ्गवदात्मभूयं गतं तस्मान्न हिनस्ति न बाधत इत्यर्थः । सा ऽन्तर्वत्नी एतमस्य भर्तुरात्मानमत्रात्मन उदरे प्रविष्टं गतं बुद्ध्वा भावयति वर्द्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारमनुकूलाशनाद्युपयोगञ्च कुर्वन्ती ॥ २ ॥

सा भावयित्री वर्द्धयित्री भर्त्तुरात्मनो गर्भभूतस्य भावयितव्या रक्षयितव्या च भर्त्रा भवति । न ह्युपकारप्रत्युपकारमन्तरेण लोके कस्यचित् केनचित् सम्बन्ध उपपद्यते ।

---

टी० यस्मादिति । पिटकाः गण्डरूपग्रन्थिविशेषाः । तद्वन्न हिनस्तीति व्यतिरेकेण दृष्टान्तः । पदार्थमुक्त्वा विवक्षितार्थमाह । यस्मादिति । अत्र प्रसङ्गात् स्त्रियाः सावधानेन गर्भरक्षणं कर्त्तव्यमिति विधत्ते । सेति । भावयति भावयेदित्यर्थः । पालनोपायमाह । गर्भविरुद्धेति । २ ।

तस्याप्यन्तर्वत्नी रक्षणं विधत्ते । सा भावयित्रीति । चशब्दस्य भर्त्रेत्यत्र सम्बन्धः । सापीत्यर्थः । तस्या भावयितव्यत्वे हेतुमाह । न हीति । स्त्रीपुरुषयोः परस्परोपकारकत्वमुक्त्वा तयोः पुनः साध्यवक्ष्यमाणपुत्रकर्मप्रतिनिधित्वप्रत्युपकारसिद्ध्यर्थं पुत्रं प्रत्युपकारकत्वमाह । तमिति । अग्र इत्यग्रेशब्दो जन्मनः पूर्वकालं वदति । द्वितीयो जननकालमधिशब्दोऽनन्तरकालं वदतीति ध्या-

ऐ॰उ॰ बिभर्त्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। स यत् कुमारं जन्मनोऽग्रेऽधिभावयति

---

ऐ॰भा॰ तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्त्ति धारयति प्राग्जन्मनः। स पिता अग्र एव पूर्व्वमेव कुमारं जातमात्रं जन्मनोऽध्यूर्द्ध्वं जन्मनो जातं कुमारं जातकर्म्मादिना यद्भावयति तदात्मानमेव भावयति पितुरात्मैव पुत्ररूपेण जायते। तथा ह्युक्तं पतिर्जायां प्रविशतीत्यादि। तत् किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयति। उच्यते। एषां लोकानां सन्तत्यै अविच्छेदायेत्यर्थः। विच्छिद्येरन् हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्य्युः। ते च पुत्रोत्पादनादिकर्म्माऽविच्छेदेनैव सन्तता हि प्रबन्धरूपेण वर्त्तन्ते यस्मादिमे लोकास्तस्मात्तदविच्छेदाय तत्कर्त्तव्यं न मोक्षायेत्यर्थः। तदस्य संसारिणः पुंसः

---

आ॰ अग्रे। प्राग्जन्मन इत्यादिना। पूर्व्वमेवेत्यस्य विवरणमाद्य। जातमात्रमिति। जायमानमित्यर्थः। जातकर्म्मादिनेति। जन्मनः प्राक् सीमन्तादिना जननकाले सुखनिष्क्रमणार्थं मन्त्रजपप्रोक्षणादिना अनन्तरं जातकर्म्मादिनेत्यर्थः। पित्रा जातकर्म्मादिकं कर्त्तव्यमित्यभिधाय तत् स्तौति। स पितेति। प्रविशतीत्यादीति। गर्भो भूत्वा स मातरं तस्यां पुनर्नवो भूत्वा दशमे मासि जायत इति मन्त्रशेषः। मोक्षप्रकरणे पुत्रोत्पादनस्य विधानात् पुत्रोत्पादनं मोक्षसाधनमित्यभिप्रायेण पृच्छति। तत् किमर्थमिति। न कर्म्मणा न प्रजयेत्यादि श्रुतेर्मोक्षप्रकरणे पुत्रोत्पादनोक्तिर्वैराग्यार्थेत्यभिप्रेत्य प्रकृतश्रुत्योत्तरमाह। उच्यत इति। अत्र लोकशब्देन लोकसाधनीभूताः पुत्रपौत्रादयो गृह्यन्ते। तेषां सन्तत्या इत्यर्थः। पुत्रोत्पादनेनैवोक्तानां लोकानां सन्ततत्वं प्रसिद्धमिति मत्वैवं सन्तता हीति वाक्यं व्याचष्टे। ते चेति। स्वेन पुत्रोत्पादने वि

ऐ॰उ॰ आत्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥ सोऽस्यायमात्मा पुण्येभ्यः कर्म्मभ्यः प्रतिधी-

ऐ॰भा॰ कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्गर्भरूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः अस्य पितुः ॥ ३ ॥

सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्मनिष्पादनार्थं प्रतिधीयते पितुः स्थाने पिता यत् कर्त्तव्यं तत्करणाय प्रतिनिधीयत इत्यर्थः । तथाच सम्प्रत्तिविद्यायां वाजसनेयके । पित्रानुशिष्टोऽहं ब्रह्माऽहं यज्ञ इत्यादि प्रतिपद्यत इति । अथानन्तरं पुत्रे निवेश्यात्मनो

आ॰ धिता स्थिते सति स्वपुत्रोऽपि यथा तत्पुत्रोऽपि तथेत्येवं लोकसन्ततिर्भवतीत्यर्थः । पुत्रोत्पादनस्य लोकसन्ततिरेव प्रयोजनमिति वदन्तया श्रुत्या तस्य मोक्षसाधनत्वं निरस्तमित्याह । न मोक्षायेत्यर्थ इति । एवं प्रसङ्गाद्गर्भधारण्यादिविधिमुक्त्वा प्रकृतं वैराग्यार्थं द्वितीयं जन्म दर्शयति । तदस्येति । एवं पितृशरीरेऽत्यन्ताशुचौ अत्यन्ताशुचिरेतोरूपेणावस्थानं ततोऽपि निर्गमनं ततो मातृउदरे मलमूत्राक्रान्ते विण्ठाहमिवदवस्थानं ततो योनिद्वारा निर्गमनमित्यादात्म्यकं कष्टमित्युक्ता जन्मानन्तरमपि न स्वातन्त्र्यम् किन्तु पितृनियोगात्तत्कारतन्त्र्ये सर्वदा कर्मानुष्ठानमित्याह सदन् पुत्रेण कर्त्तव्यं पितुरुपकारान्तरं दर्शयति । सोऽस्येति । वाक्यं व्याचष्टे । अस्येति । पितुर्दायमात्मनो देहो । स्वदेहः पुत्रदेहस्येति ॥ ३ ॥

तत्र पुत्रस्योपयोगमाह । सोऽयमिति । पुत्रस्य प्रतिनिधित्वमन्यत्राप्युक्तमित्याह । तथेति । सम्प्रत्तिः सम्प्रदानं स्वकर्त्तव्यस्य पुत्रस्थापनं यत्रोच्यते सा सम्प्रत्तिविद्येत्यर्थः । यदा तु प्रैष्यन्मन्यते स्वस्य परलोकगमनं निश्चिनोत्यथ पुत्रमाह । त्वं ब्रह्म त्वं यज्ञस्त्वं लोक

ऐ॰भा॰ आस्मस्य पुत्रस्येतरो यः पित्रात्मा कृतकृत्यः कर्त्तव्याद् ऋणत्रयाद्विमुक्तः कृतकर्त्तव्य इत्यर्थः। वयोगतो गतवया जीर्णः सन् प्रैति म्रियते। स इतोऽस्मात् प्रयन्नेव शरीरं परित्यजन्नेव तृणजलूकावद्देहान्तरमुपाददानः कर्म्मचितं पुनर्जायते। तदस्य मृत्वा प्रतिपत्तव्यं यत्तत्तृतीयं जन्म॥ ननु संसरतः पितुः सकाशाद्रेतोरूपेण प्रथमं जन्म। तस्यैव कुमाररूपेण मातुर्द्वितीयं जन्मोक्तं। तस्यैव तृतीये जन्मनि वक्तव्ये

---

आ॰ इति। मया ध्येतव्यं ब्रह्म वेदरूपं त्वया ऽध्येतव्यं। मया कर्त्तव्योऽयं यज्ञरूपं त्वया कर्त्तव्यः। मया सम्पाद्यो लोकस्त्वया सम्पाद्य इत्येवं पित्रानुशिष्टः सन् पुत्रोऽहं ब्रह्माऽहं यज्ञोऽहं लोक इति प्रतिपद्यते। अहं ब्रह्माध्येष्ये यज्ञान् करिष्ये लोकं सम्पादयिष्यामीति स्वीकरोतीत्युक्तमित्यर्थः। अनेन स्वशरीरस्य तृतीयमस्योक्तं॥ ननु किमर्थं पुत्रं प्रतिनिदधाति स्वयमेव करोत्वित्याशङ्क्य तस्य मरणात् कर्त्तुमशक्तेरित्यभिप्रायेणोक्तं अथास्यायमिति। तद्व्याचष्टे। अथेति। एवकारार्थं मध्ये विलम्बाभावं दर्शयति। तृणजलूकेति॥ तृणजलूका तृणस्यान्तं गत्वा तृणान्तरमाक्रम्यात्मानं देहं पूर्व्वस्मात् तृणादुपसंहरति पूर्व्वतृणं मुञ्चति एवमेवायमात्मा देहान्तरं परिगृह्य पूर्व्वदेहं मुञ्चतीति मध्ये विलम्बाभावः श्रुत्यन्तरे उक्त इत्यर्थः। कर्म्मचितं देहान्तरमुपाददानः पुनर्जायत इत्यन्वयः। यद्यपि देवयानपितृयाणमार्गाभ्यां गच्छतां लोकान्तर एव शरीरमस्त्युक्तं उभयव्यामोहात् तत् सिद्धेरिति सूत्रे। आकाशाच्चन्द्रमसमेष सोमो राजेति श्रुतेः। ननु पूर्व्वदेहत्यागकाल एव तथापि स विज्ञानो भवति स विज्ञानमेवान्ववक्रामतीति श्रुतौ वासनामयं भावि शरीरमुत्क्रान्तिकाल एव प्रकाशीभूतत्वात् तदभिप्रायं तृणजलूकादिदर्शनमिदं द्रष्टव्यं। तदस्येति यन्मृत्वा प्रतिपत्तव्यं तदस्य तृतीयं जन्मेत्यन्वयः। यस्य जन्मद्वय-

ऐ॰उ॰ वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते

---

ऐ॰भा॰ प्रेतस्य पितुर्यज्जन्म तत्तृतीयमिति कथमुच्यते । नैष दोषः । पितापुत्रयोरैकात्म्यस्य विवक्षितत्वात् । सोऽपि पुत्रः स्वपुत्रे भारं निधायेतः प्रयन्नेव पुनर्जायते यथा पिता । तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः । पितापुत्रयोरैकात्म्यत्वात् । एवं संसरन्नवस्थाव्यक्तिचयेण जन्ममरणप्रबन्धारूढः सर्वो लोकः संसारसमुद्रे निपतितः कथ-

---

आ॰ मुक्तं तस्यैव तृतीयं जन्म वक्तव्यं । औचित्यात् । अन्यथाऽस्य पितुः पूर्वं जन्मद्वयस्यानुक्तत्वेनेदमस्य पितुस्तृतीयं जन्मेत्यसम्भवापत्तेरिति प्रश्नुते । तन्विति । प्रेतस्येति म्रियमाणस्येत्यर्थः । यत् कुमारं भावयति आत्मानमेव तद्भावयति सोऽस्यायमात्मेति च पितापुत्रयोरभेदस्योक्तत्वात् पुत्रस्योक्तं जन्मद्वयं पितुरेव । तस्यैव च तृतीयत्वविरोध इत्याह । नैष दोष इति । यदा पितुर्मरणानन्तरं पुनर्जन्मप्युक्तं पुत्रस्याप्येवमेव जन्म चातुं शक्यत इत्यभिप्रायेण पितुरित्युक्तमित्याह । सोऽपि पुत्र इति । यथा पितेत्यनन्तरं ततश्च पुत्रस्यैव तृतीयं जन्मोक्तमिति शेषः । एवञ्च तदस्य तृतीयं जन्मेति वाक्ये तच्छब्देन तत्प्रकारकत्वमुच्यते । अस्येति पुत्र उच्यते । अस्य पुत्रस्य तत्प्रकारकं तृतीयं जन्मेति वाक्यार्थ इति भावः । ननु पर्यायद्वयोक्तं जन्म यथा पुत्रगतमेवं तृतीयपर्यायोक्तमपि साक्षात् पुत्रगतमेवोच्यतां किं तयोरैकात्म्यविवक्षयेत्याद्यपरिहारे दोषमाशङ्क्याह । तदन्यत्रोक्तमिति । अयं भावः । पुत्रस्य पितरं प्रत्युपकारप्रदर्शनार्थं तत्प्रतिनिधित्वे उक्ते पिता स्वयमेव कर्म करोतु किं प्रतिनिधिनेत्याशङ्का तत्परिहारार्थं पितुर्मरणाभिधानं प्रसक्तमिति मरणानन्तरं वक्तव्यमिति तृतीयं जन्म लाघवार्थं तत्रैवोक्तमिति । इदन्तु जन्मत्रयं सर्वेषां पूर्वेषामप्यस्तीति प्रदर्शयितुञ्च पुत्रे वक्तव्यमपि तृतीयं जन्म पितुर्यत्तमिति पूर्वाध्याये अध्यारोपप्रकरणोक्तमात्रसम्पन्नं वैरा-

ऐ॰उ॰ तदस्य तृतीयं जन्म । तदुक्तमृषिणा ॥ ४ ॥
गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वाः शतं मा पुर आयसीररक्षन्नधः

---

शं॰भा॰ स यथा श्रुत्युक्तमात्मानं विजानाति यस्यां कस्याञ्चिदवस्थायां तदैव मुक्तसर्वसंसारबन्धनः कृतकृत्यो भवतीत्येतद्वस्तुतत्त्वमृषिणा मन्त्रेणाप्युक्तमित्याह ॥ ४ ॥

गर्भे मातुर्गर्भाशये एव सन् । न्विति वितर्के । अनेकजन्मान्तरभावनापरिपाकवशादेषां देवानां वागग्न्यादीनां जनिमानि जन्मानि विश्वा विश्वानि सर्वाण्यन्ववेदमहमनुबुद्धवानस्मीत्यर्थः । शतमनेका बह्व्यो मा मां पुर आयसीरायस्यः लोहमय्य इवाऽभेद्यानि शरीराणीत्यभिप्रायः । अरक्षन् रक्षितवत्यः । संसारपाशनिर्ग-

---

आ॰ व्यार्थमित्य प्रपञ्च्य तत्सिद्धेवाध्याये तस्य संसारस्य निवर्तकत्वेन तदपवादार्थं यदात्मज्ञानमुक्तं स एवमेवेत्यादिना तत्फलं प्रपञ्चयितुं तदुक्तमृषिणेत्यादिग्रन्थः ॥ तत्र तच्छब्दार्थमाह । एवमित्यादिना ॥ एतदस्मिन् संसारसमुद्रे पतनं तत्त्वज्ञानाच्च तन्निवृत्तिरित्येतदित्यर्थः । आहेति आख्यमिति शेषः ॥ ४ ॥

भावनेति ॥ आत्मानात्मविवेकभावनेत्यर्थः । वागग्न्यादीनामित्युक्तानि जन्मानि शरीरग्रहणाख्यानि तदुपलक्षितः सर्वोऽपि संसारो वागादिकरणतदधिष्ठातृदेवादिसङ्घातस्य लिङ्गशरीरस्यैव न त्वसङ्गस्य मायिनो ममेत्यर्थः । अनेन पदार्थविवेकपूर्वकमात्मज्ञानमुक्तं । यद्वा सर्वज्ञादात्मनः सकाशाद्देवानां जन्मानीत्यन्ववेदं । एतज्जन्महेतुभूतमूलकारणमात्मानं ज्ञातवानस्मीत्यर्थः । यद्यपि गर्भे श्रवणादिज्ञानसामग्री नास्ति तथापि पूर्वजन्मकृतश्रवणादिसामग्रीवशादेव प्रतिबन्धनिवृत्तौ तस्यामपि गर्भे ज्ञानोत्पत्तिः सम्भवतीति भावः ॥ इतः पूर्वकालीनं बन्धं

ऐ॰उ॰ श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्या-

---

ऐ॰भा॰ मनादधोऽधः पश्यन् श्येन इव जालं भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि अहो गर्भ एव शयानो वामदेव ऋषिरेवमुवाचैतत् ॥ ५ ॥

स वामदेव ऋषिर्यथोक्तमात्मानमेवं विद्वानस्माच्छरीरभेदाच्छरीरस्याविद्यापरिकल्पितस्यायस्मयवदनिर्भेद्यस्य जन्ममरणाद्यनेकानर्थशताविष्टशरीरप्रबन्धस्य परमात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदाच्छरीरोत्पत्तिबीजाविद्यादिनिमित्तोपमर्दहेतोः शरीरविनाशादित्यर्थः । ऊर्ध्वः

---

आ॰ दर्शयति । जालमिति । अभेद्यामीति । तत्त्वज्ञानमन्तरा तत्प्रवाहाविच्छेदादित्यर्थः । अधोऽध इति अधोऽधोलोकेष्वेव निरयलोकेष्वेवारक्तमित्यर्थः । यद्वा अध इति वीप्सितं पदं अपेत्यर्थे व्याचष्टे । अधोऽध इति । अपानन्तरमिदानीमित्यर्थः । मन्त्रदृष्टुरभिप्रायमाह । अहो इति । इदमाश्चर्यं मम संवृत्तमित्यभिप्रायेण मन्त्रदृष्टाभिरेवमुक्तं तस्य तात्पर्यं वक्तुं गर्भे एवैतदित्यादि श्रुत्यर्थं । तद्व्याचष्टे । गर्भे इत्यादिना । एतत्पूर्वोक्तमाश्चर्यात्मकमर्थजातमेवं मन्त्रात्मकप्रकारेणोवाचेत्यन्वयः ॥ ५ ॥

ज्ञानस्याप्यभिघातित्वा मन्त्रज्ञापनाय वामदेवेन फलं प्राप्तमिति वक्तुं स एवं विद्वानिति वाक्यं व्याचष्टे । स वामदेव इति । शरीरस्य पुनरुत्पत्तिशङ्कां वारयति । शरीरोत्पत्तीति । तत्त्वज्ञानेनाविद्यादिनाशादित्यर्थः । परमार्थभूतः सन्निमित्तैःस्त्रीपरिच्छिन्नत्वाभिमानात् परमार्थवस्तुन एव कदाचिदप्यसौ भावरूपनिष्कर्षभावेन निरङ्कुशोपचितमभावादूर्ध्वशब्दार्थत्वमि-

ऐ॰उ॰ मुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ६ ॥ इति चतुर्थः खण्डः ॥ इत्यैतरेयारण्यके पञ्चमोऽध्यायः ॥ उपनिषत्सु द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

---

ऐ॰भा॰ परमार्थभूतः सन्बन्धाभावात् संसारादुत्क्रम्य ज्ञानविद्योतितात्मसर्व्वात्मभावमापन्नः सन्नमुष्मिन् यथोक्तेऽजरेऽमरेऽमृतेऽभये सर्व्वज्ञेऽपूर्व्वेऽनपरेऽनन्तरेऽबाह्ये प्रज्ञानघनैकरसे प्रदीपवन्निर्व्वाणमत्यगमत् स्वर्गे लोके स्वस्मिन्नात्मनि स्वे स्वरूपेऽमृतः समभवदात्मज्ञानेन पूर्व्वं प्राप्तकामतया जीवन्नेव सर्व्वान् कामानाप्त्वा इत्यर्थः । द्विर्व्वचनं सफलस्य सोदाहरणस्यात्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थं ॥ ६ ॥ इति श्रीशङ्करभगवतः कृतौ ऐतरेयोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

---

आ॰ त्यर्थः । प्रसिद्धं स्वर्गलोकं वारयति । अमुष्मिन् यथोक्त इति । इन्द्रियागोचरत्वेनामुष्मिन्निति निर्द्देशः । स्वर्गशब्दस्य निरतिशयसुखसामान्यवाचित्वाद्ब्रह्मण्येव यथाविधतात्मन्येव सुखस्वर्गत्वं । वैशेषिकस्य तु स्वर्गस्यमापेक्षिकमित्यर्थः । उक्तस्य स्वर्गस्य ब्रह्मरूपस्य स्वस्माद्भेदमाभ्याह । स्वस्मिन्निति । आत्मशब्दस्यान्तःकरणाद्यर्थत्वं वारयति । स्वे स्वरूप इति । अस्मिन् स्वर्गे मर्त्यदेहादिभावं विहाय स्वात्मभावेनैव स्थित इत्याह । अमृत इति । उक्तस्वर्गलोके स्वर्गकामावाप्तिरिति भ्रमं वारयति । पूर्व्वमिति । जीवन्मुक्तिदशायामाप्तकामतया सर्व्वात्मत्वेनेत्यर्थः । सोदाहरणस्येत्युदाहरणं वामदेव इत्यर्थः । ६ । इति श्रीमदानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां द्वितीयोऽध्यायः । ॐ तत्सत् ।

हरिः ॐ ॥

ऐ॰उ॰ कोऽयमात्मेति वयमुपास्महे

ऐ॰भा॰ ॐ ॥ ब्रह्मविद्यासाधनकृतसर्वात्मभावफलावाप्तिं वामदेवाद्याचार्यपरम्परया श्रुत्याऽवद्योत्यमानां ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धामुपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्म जिज्ञासवो ऽनित्यात् साध्यसाधनलक्षणात् संसारादाजीवभावाद्व्याविवृत्सवो विचारयन्तोऽन्योन्यं पृच्छन्ति कथं यमात्मानमयमात्मेति साक्षाद्वयमुपास्महे कः स आत्मेति। यं चात्मानमयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः

आ॰ ॥ ॐ ॥ पूर्वस्मिन्नध्याये जन्मत्रयनिरूपणेन वैराग्यं निरूपितं ज्ञानोत्पत्त्यर्थं। न च पदार्थबोधनं विना वैराग्यमात्रेण ज्ञानोत्पत्तिरिति पदार्थबोधनपूर्वकं वाक्यार्थं कथयितुं तृतीयोऽध्याय इत्यभिप्रेत्य पदार्थबोधनेऽधिकारिणं दर्शयन् वाक्यमवतारयति। ब्रह्मविद्येति। वामदेवाद्याचार्येति आदिशब्देन सर्वो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादिना उक्ता देवादयो गृह्यन्ते। अधुनातना इति पूर्वोक्तरीत्या वैराग्योत्पत्त्यर्थः। आजीवभावादिति संसारस्य हेतुभूताद्विद्याकृतजीवात्मभावस्वरूपाद्व्यावर्तयितुं संसारं परित्यक्तुमिच्छन्त इत्यर्थः। विचारप्रकारमेव वाक्यान्तरेण स्पष्टीकर्तुं पृच्छन्ति। कथमिति। अयमात्मेति विशेषतो निश्चये स च इति प्रश्नानुपपत्तिः। तद्विचारेण वा न किंचित् प्रयोजनमित्याशङ्क्यात्मानं विशिनष्टि। यमेति। उपास्महे उपासितुं प्रवृत्ता इत्यर्थः। वामदेवोऽयमात्मानमुपास्यामृतोऽभवदयमपि तमात्मानमुपासितुं प्रवृत्ताः। स च इति प्रश्नार्थ इत्यर्थः। उपासनं नाम सामीप्येनैक्यं सेवैव निरन्तरचिन्तनात्मीयत्वमापरोक्षीकरणं यदुपास्यावस्थानं यदुच्यते। यदाऽहं सर्वोत्मादित्यवतारेषु तमेव वयमुपास्महे तमेवात्मत्वेन धीमन्त स्थिताः। यथाहमेवोऽहमिति प्रत्यक्षाः प्रयत्नः। य आत्मा

ऐ०भा० यमभवत् तमेव वयमधुनोपास्महे को नु खलु स आत्मेति । एवं जिज्ञासापूर्वमन्योन्यं पृच्छतामतिक्रान्तविशेषविषयश्रुतिसंस्कारजनिता स्मृतिरजायत । तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं स एतमेव सीमानं विदार्य तया द्वारा प्रापद्यत एतमेव पुरुषं। द्वे ब्रह्मणी इतरेतरप्रातिकूल्येन प्रतिपन्ने इति। ते चाऽस्य पिण्डस्यात्मभूते । तयोर-

---

आ० स इति विचारार्थः । न चायमात्मेति निश्चये विचारायोगः। तस्यैव कार्यकरणसङ्घातोपलम्भेन विचारोपपत्तेरिति । ननु भूतानां व्याकरणार्थे यः प्रविष्टः स एवात्मेति निर्धारणसम्भवाद्विचारानुपपत्तिरित्याशङ्क्यैवमपि द्वयोः प्रविष्टत्वेन सामान्यतायां न निर्धारणमिति वक्तुं द्वयोः प्रविष्टत्वं स्मृतमित्याह । एवं जिज्ञासेति । अतिक्रान्तेति अतिक्रान्तौ पूर्वमुक्तौ यौ विशेषौ देहे प्रविष्टौ आत्मानौ तद्विषया श्रुतिजन्याऽनुभवजन्यसंस्कारजनिता स्मृतिरित्यर्थः ॥ तामेव स्मृतिं सङ्क्षेपतो दर्शयति । तं प्रपदाभ्यामिति ॥ तमिमं पुरुषं पुरुषशरीरं प्रपदाभ्यां पादाग्राभ्यां ब्रह्म परमब्रह्मरूपः प्राणः प्रविष्ट इत्यर्थः ॥ अन्यस्य प्रवेशे स्मृतिमाह । स एतमिति । श्रुतिभ्यां अर्थमाह । एतमेवेति । अत्रेति श्रुतिभ्यामित्यध्याहृत्य इति श्रुतिभ्यामितरेतरप्रातिकूल्येनेतरेतराभिमुखतया एतमेव पुरुषशरीरं प्रतिपन्ने प्रविष्टे द्वे ब्रह्मणी वेदितव्ये इति वाक्यमिति स्मृतिरजायतेत्यन्वयः । न त्वेतमेव पुरुषं ब्रह्म ततमप्रपद्यतेति वाक्यं। द्वे ब्रह्मणी इत्यनेन द्वे ब्रह्मणी वेदितव्ये इति वाक्यस्य द्वयोः प्रवेशे तात्पर्यमिति मन्तव्यं। आद्यवाक्ये द्वयोः प्रवेशाप्रतीतेः। द्वितीये च शब्दब्रह्मपरब्रह्मणोरभिधानेन तयोर्द्वयोः प्रवेशे तात्पर्यायोगादिति। तथापि तयोर्द्वयोः कथमात्मत्वप्रश्नस्तत्राह। द्वाविति ॥ तयोर

ऐ॰उ॰ येन वा रूपं पश्यति येन वा शब्दं शृणोति

ऐ॰भा॰ न्यतर आत्मोपास्यो भवितुमर्हति। योऽत्रोपास्यः कतरो नु स आत्मेति विशेषनिर्धारणार्थं पुनरन्योन्यं पप्रच्छुर्विचारयन्तः। पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया मतिरभूत्। कथं द्वे वस्तुन्यस्मिन् पिण्डे उपलभ्येते अनेकभेदभिन्नेन करणेन। येनोपलभ्यते यश्चैक उपलभ्यते करणान्तरोपलब्धविषयस्मृतिसन्धानात्। तत्र न तावद्येनोपलभ्यते स आत्मा भवितुमर्हति। केन पुनरुपलभ्यत इति। उच्यते। येन वा चक्षुषा रूपं पश्यति येन

टी॰ न्यतरेणापि विना शरीरस्थित्यभावात् तयोरात्मत्वसंदेह इत्यर्थः। एवं विचारापेक्षितामात्मद्वयश्रुतिमुक्त्वा विचारमाह। तयोरन्यतर इति। आत्मा वा इदमेक एवेत्येकस्यैव ज्ञेयत्वोपक्रमात् द्वयोरुपास्यत्वमित्यर्थः। कः स आत्मेति य उपास्य आत्मा स क इत्यन्वयः। पप्रच्छुरिति कतरः स आत्मेति वाक्येनेति शेषः। एवं विचारे क्रियमाणेऽतिपरिशुद्धान्तःकरणत्वात् तेषां प्रपदाभ्यां प्रपन्ने करणत्वेनानात्मत्वनिश्चयो मूर्ध्ना प्रविष्टे उपलब्धृत्वेनात्मत्वनिश्चयश्चाभूदित्याह। पुनरित्यादिना। विशेषेति विचारणास्पदभूतात्मद्वयविषया एकस्मिन् करणत्वेनापरस्मिन्नुपलब्धृत्वेन प्रकारेण विशेषरूपा मतिरजायतेत्यर्थः। ननु द्वयोः कार्ये द्वयं विशेषमतिः स्यात् सदेव वाक्योक्ति श्रूयते। कथमिति। चक्षुषा पश्यामीत्यादिप्रकारेण द्वयोः प्रतीतेर्न विशेषमित्याह। द्वे इति। येनोपलभ्यते यश्चोपलभते ते द्वे उपलब्धिकर्तृकरणे वस्तुन्युपलभ्येते इत्यन्वयः। तत्र किं करणमित्यत आह। अनेकेति। चक्षुःश्रोत्राद्यनेकभेदभिन्नेनेत्यर्थः। अनेन यदनेकात्मकचक्षुरादिकरणसंघातात्मकं प्राणस्वरूपं तत्संहतत्वात् परार्थमिति परशेषत्वेन करणमित्युक्तं। उपलब्धुरित्यनेकात्मकत्वाभावाद् परार्थत्वेन शेषत्वं।

ऐ॰उ॰ येन वा गन्धानाजिघ्रति येन वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥

---

ऐ॰भा॰ वा शृणोति श्रोत्रेण शब्दं येन वा घ्राणभूतेन गन्धानाजिघ्रति येन वाक्करणभूतेन वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च । येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति ॥ १ ॥

---

आ॰ किन्तु प्रैषिकत्वमेवेति वक्तुमेव इत्युक्तं । अनेन करणस्य परार्थत्वं परं प्रैषिकमन्तरानुपपन्नं सत् परं व्यतिरिक्तमुपलब्धारं गमयतीति तस्मिन्नपि तत्प्रामाण्यमित्युक्तं । इदानीं करणानामेवोपलब्धृत्वं तद्व्यतिरिक्त उपलब्धा नास्तीति वदन्तं नास्तिकं प्रति प्रमाणान्तरमाह । करणान्तरेति ॥ पूर्वं चक्षुषा रूपं दृष्ट्वा पश्चादुद्भूतचक्षुः स्मृतिरूपमद्राक्षमिति । तथा योऽहमद्राक्षं स एवेदानीं स्पृशामीति प्रतिसन्धत्ते । तदुभयव्यतिरिक्तोपलब्धृरभावेन स्यात् अन्यानुभूतेऽन्यस्य स्मृतिसन्धानयोरदर्शनादित्यर्थः । एवमनेकात्मकस्य करणात्मकता तत एव तस्यात्मत्वं नास्तीत्याह । तत्र न तावदिति । तयोर्मध्ये इत्यर्थः । अर्हतीत्यनन्तरं किन्तु परिशेषादुपलब्धाऽऽत्मा भवितुमर्हतीति वक्ष्यमाणान्वयेन वाक्यं पूरणीयं । एवमुपलब्धृत्वसमर्थं श्रुत्यक्षरारूढं कर्तुं पृच्छति । केन पुनरिति । श्रुत्यारूढं करोति । उच्यत इति । येनेति तृतीयया करणत्वं चक्षुरादेरुक्तमित्यर्थः । वाक्करणेति वागुपकरणेनेत्यर्थः । वाचमिति कर्म नोच्यते । तस्य येनेत्यनेनोक्तत्वात् । किन्तु वक्तव्यमुच्यत इत्याह । नामात्मिकामिति । साध्वीति गौरितीदं नाम साधु गावीति नामासाध्विति व्याकरोति । व्याकरणेन पृथक्करोतीत्यर्थः । ननु चक्षुरादीनां करणत्वेऽपि प्रपदाभ्यां प्रविष्टस्य प्राणस्य करणत्वे किमायातमित्याशङ्क्यते । किं पुनस्तदिति । तत्र प्राणस्यैव करणत्वं वक्तुं तावत् हृदयं मनःशब्दवाच्यस्य चक्षुरादिभेदभिन्नत्वमाह । उच्यत इति । यदेतद्धृदयमित्यत्र चशब्दार्थमाह । यदुक्तमिति । रेत इति सारभूतं कार्यमि-

ऐ॰भा॰ किं पुनस्तदेकमनेकधाभिन्नं करणमित्युच्यते । यदुक्तं पुरस्तात् प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसा सृष्टा आपश्च वरुणश्च । हृदयान्मनो मनसश्चन्द्रमा तदेवैतद्धृदयं मनश्च एकमेतदनेकधा । एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति श्रोत्रभूतेन शृणोति घ्राणभूतेन जिघ्रति वाग्भूतेन वदति जिह्वाभूतेन रसयति स्वेनैव विकल्पनारूपेण मनसा विकल्पयति हृदयरूपेणाध्यवस्यति । तस्मात् सर्व्वकरणविषयव्यापारकमेकमिदं करणं सर्व्वोपलब्ध्यर्थमुपलब्धुः । तथा च कौषीतकीनां प्रज्ञया वाचं समारुह्य वाचा सर्व्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समा-

आ॰ तर्थः । प्रजानां रेतो हृदयमित्यादिषु मनसश्चन्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति तदेवैतत्तया दृष्टं करणमित्यर्थः । एतदेवैकमेव चक्षुरादिभेदेनानेकधा भूतमिति व्याख्याने न चक्षुरादिना दर्शनादिक्रिया करोति सङ्घातात्मकः पुरुषः । तच्चक्षुरादिकं प्रजानां रेतो हृदयमित्यादिषु मनसश्चन्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति करणं तदेतदेवैकं तदनेकधा भिन्नमेवेति श्रुतिसमन्वयेनैवेति तृतीयान्तं वदति प्रथमान्तं यच्छब्दद्वयस्य चान्वयो दर्शितः । एकस्यैवानेकात्मत्वं विशदयति । एतेनेत्यादिना । सर्व्वकरणेति सर्व्वाणि करणानि विषयाश्च व्यापारो यस्येति विग्रहः । करणानां विषयाणाञ्च हृदयशब्दवाच्यबुद्धिव्यापारकत्वे श्रुतिमाह । तथा चेति । प्रज्ञया चिदात्मा संयुक्तया बुद्ध्या वाचं करणं समारुह्य बुद्धेर्वागात्मना परिणामे सति तद्बुद्धिद्वारा स्वयमध्यात्मा वागभिमानी भूत्वा अनन्तरं वाग्घार्य्यपि बुद्धिव्यापाररूपाय

ए०भा० रुह्य चक्षुषा सर्व्वाणि रूपाण्याप्नोतीत्यादि। वाजसनेयके च। मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि जानातीत्यादि। तस्माद्धृदयमनोवाच्यस्य सर्व्वोपलब्धिकरणत्वं प्रसिद्धं। तदात्मकश्च प्राणो यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण इति ब्राह्मणं। करणसंहतिरूपश्च प्राण इत्यवोचाम प्राणसंवादादौ। तस्मात् यत्पद्भ्यां प्रापद्यत ब्रह्मैतदुपलब्धिकरणत्वेन गुणभूतत्वान्नैतदस्य ब्रह्मोपास्यात्मा भवितुमर्हति। परिशेषाद्यस्योपलब्धुरुपलब्ध्यर्थमेतस्य

---

आ० नामात्मना प्रज्ञायाः शब्दरूपेण परिणामे सति वाचा वाग्द्वारा सर्व्वाणि नामान्याप्नोति। तत् स्फुरणात्मना स्वयमपि वर्त्तत इत्यर्थः। एवं प्रज्ञया चक्षुरित्यादिष्वप्यर्थो द्रष्टव्यः। अत्र बुद्धेर्नामाद्यात्मना परिणामो वागादेश्च नामाद्यात्मना परिणाम उक्त इत्यर्थः। मनसा ह्येव पश्यतीत्यत्र मनसः साक्षाद्दर्शनादिकरणस्य योगाच्चक्षुरादिभावमापन्नस्य दर्शनादिकारणमिति भावः। एवं हृदयेन हीत्यत्रापि द्रष्टव्यं। आदिशब्देन हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति रूपाणां हृदयशब्दितबुद्ध्यात्मकत्वमुक्तं सङ्गृह्यते॥ एवं हृदयस्य सर्व्वकरणात्मत्वमुक्त्वा इदानीं तस्य प्राणात्मत्वमाह। तदात्मकश्चेति। एवं हृदयमनोद्वारा प्राणस्य सर्व्वकरणात्मत्वमुक्त्वा साक्षादेव प्राणस्य तदाह। करणसंहतीति। तत्र वयं कः न प्राणमन्तरेण जीवितुं ईसहे चक्षुरादयः प्राणा इत्येवाख्यायन्त इत्यादि प्राणसंवादस्थवचनबलात् करणसंहतिरूपत्वं करणसमूहरूपत्वं प्राणस्यावगम्यत इत्यर्थः। आदिशब्देन संवर्गविद्यादिगतं प्राणमेव वागप्येति। प्राणं चक्षुरिति प्राणं श्रोत्रं प्राणं मनः स यदा प्रतिबुध्यते प्राणादधि पुनर्जायन्त इत्याद्युच्यते। करणसंघातात्मत्वमुक्तमुपसंहरति। तस्मादिति। ब्रह्मेति ब्रह्मत्वेनोपास्य आत्मा आत्मेत्यर्थः। तर्हि कतरः आत्मा इत्यत आह। परिशेषादिति। वक्ष्यमाणा

ऐ॰उ॰ संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं

ऐ॰भा॰ हृदयमनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणाः स उपलब्धुरात्मनो भवितुमर्हतीति निश्चयं कृतवन्तः । तदन्तःकरणोपाधिस्थस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषयविषयास्ता इमा उच्यन्ते । संज्ञानं संज्ञप्तिश्चेतनभावः । आज्ञानमाज्ञप्तिरीश्वरभावः । विज्ञानं कलादिपरिज्ञानं ।

---

आ॰ इति संज्ञानमित्यादिना वक्ष्यमाणा इत्यर्थः । येन वा पश्यतीत्यादि मन्त्रोक्तदर्शनादिवाक्यस्य करणत्वेनावगतस्य धर्ममित्युक्त्वा संज्ञानमित्यादि वच प्रज्ञानमन्तःकरणवृत्तिद्वारा तद्गतिर्दिश- मुपलब्ध्यर्थं दर्शयितुमित्याह । तदन्तःकरणेति । निर्विशेषस्य कथं वृत्तिविषयत्वं अन्यथा कथं तदुपलब्ध्यर्थता तासां स्यादत आह । बाह्यान्तर्वर्तिविषयेति । यदि तासामन्यविषयत्वे ततो बाह्यान्तर्विषयप्रतीतिरेव स्यादात्मन इत्यत आह । उपलब्धुस्वरूपलब्ध्यर्था इति । निर्विशेषत्वेनाविषयत्वेन चैतन्य साक्षिरूपतया ह्यात्मसम्बन्धेऽपि संज्ञानाद्यन्तःकरणवृत्तिसाक्षितया विषयत्वेनैव तस्योपलब्धिः सम्भवतीत्यर्थः । अविषयत्वेऽपि प्रज्ञानरूपस्येति विशेषणं । प्रज्ञा ज्ञप्ति प्रज्ञप्तिः स्वप्रकाशचैतन्यं तस्य विषयत्वे स्वप्रकाशत्वाहतिरित्यर्थः । ब्रह्मण इति विशेषणं निर्विशेषत्वार्थं । सविशेषत्वे हि तस्य परिच्छेदेन ब्रह्मत्वं न स्यादित्यर्थः । कथमुक्तस्य कथमन्तःकरणवृत्तिसम्बन्धः स्यादत आह । अन्तःकरणोपाधिस्थस्येति । असङ्गस्याप्यन्तःकरणप्रतिबिम्बद्वारा तद्वृत्तिसम्बन्ध इत्यर्थः । चेतनभाव इति यया वृत्त्या चेतन इत्युच्यते जन्तुः सा वृत्तिः सर्वदा सर्वशरीरव्यापिनी संज्ञानमित्यर्थः । कलादिपरिज्ञानं चतुःषष्टिकलादिजन्यं कौशलं ज्ञानमित्यर्थः । प्रज्ञानेति तात्कालिकप्रतिभेत्यर्थः । ययोत्तम्भनं भवति सा धृतिरित्यर्थः । शरीराद्युपष्टम्भकस्य वृत्ति-

ऐ॰उ॰ मेधा दृष्टिर्धृतिर्म्मतिर्म्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति । सर्वाण्येवै-

---

ऐ॰भा॰ प्रज्ञानं प्रज्ञप्तिः प्रज्ञता । मेधा ग्रन्थधारणे सामर्थ्यं । दृष्टिरिन्द्रियद्वारा सर्व्वविषयोपलब्धिः । धृतिर्धारणं अवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति । धृत्या शरीरमुद्वहन्तीति हि वदन्ति । मतिर्म्मननं । मनीषा तत्र स्वातन्त्र्यं । जूतिश्चेतसो रुजादिदुःखित्वभावः । स्मृतिः स्मरणं । सङ्कल्पः शुक्लकृष्णादिभावेन सङ्कल्पनं रूपादीनां । क्रतुरध्यवसायः । असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः । कामोऽसंनिहितविषयाकाङ्क्षा तृष्णा । वशः

---

व्या॰ विशेषस्य धृतित्वे लौकिकं व्यवहारं मानमाह । धृत्येति । तत्र स्वातन्त्र्यं । मनस ईषा मनीषेति व्युत्पत्तेरित्यर्थः । रुजादिदुःखित्वभाव इति रोगादिजन्यदुःखित्वप्राप्तिरित्यर्थः । सङ्कल्पनमिति सामान्येन प्रतिपन्नानां रूपादीनां शुक्लादिरूपेण सम्यक् कल्पनमित्यर्थः । जीवनक्रियेति जीवनयोनिप्रयत्न इत्यर्थः । स्त्रीव्यतिकरेति स्त्रीसम्पर्केत्यर्थः । इतिशब्दस्य प्रदर्शनार्थत्वमाह । इत्येवमाद्या इति । एवमाद्या वृत्तयः प्रज्ञानस्य नामधेयानि भवन्तीत्युत्तरेणान्वयः । अत्र प्रज्ञानशब्देन पूर्ववत्प्रज्ञता वृत्तिरूपा नोच्यते तस्याः सञ्ज्ञानादिनामवत्त्वानुपपत्तेः किन्तु ब्रह्मचैतन्यमुच्यते इत्याह । प्रज्ञप्तिमात्रस्येति । कथन्तःकरणवृत्तीनां शब्दरूपत्वाभावात् कथं प्रज्ञाननामधेयत्वमित्याशङ्क्य नामधेयस्य नाम्नि यथोपलब्धिहेतुत्वात् सञ्ज्ञानादिवृत्तीनामपि प्रज्ञानोपलब्धिहेतुत्वात्तेन गुणेन तन्नामधेयत्वमुपचारादुच्यते न मुख्यत्वेत्याह । उपलब्धुरुपलब्ध्यर्थत्वादिति । उपलब्धुरुपलब्ध्यर्थत्वं वा कथमित्याशङ्क्य तदुपाधित्वादाह । शुद्धेति । यत उपाधिभूता अत उपलब्ध्यर्था । अतो गौण्या वृत्त्या नामधेयानि सम्भवन्तीत्यर्थः ।

ऐ॰उ॰ तानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥

---

ऐ॰भा॰ स्त्रीव्यतिकराद्यभिलाष इत्येवमाद्या अन्तःकरणवृ-त्तयः । प्रज्ञप्तिमात्रस्योपलब्धुरुपलब्ध्यर्थत्वात् शुद्धप्रज्ञान-रूपस्य ब्रह्मणो नारूपस्य ब्रह्मण उपाधिभूताः । तदु-पाधिजनितगुणनामधेयानि सञ्ज्ञादीनि सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति न स्वतः

---

आ॰ यदा श्रुतौ सञ्ज्ञानादिशब्दैर्न वृत्तय उच्यन्ते किन्तु सञ्ज्ञानादि-शब्दा एव लक्षणयाऽभिधीयन्ते आमुखादयतीत्यवेष । तथा च सञ्ज्ञानादिशब्दाः सञ्ज्ञानादिवृत्तिविशिष्टप्रज्ञानस्य नामधे-यानि भवन्ति तद्द्वारा शुद्धस्यैव प्रज्ञानस्य लक्षणया नामधेयानी-त्यर्थः । तदुपाधिजनितेति । तदुपाधिजनितो गुणः प्रज्ञप्युपहित-त्वं तन्नामधेयानि सन्ति सर्वाण्येवैतानि सञ्ज्ञानादीनि सञ्ज्ञा-नादिशब्दाः प्रज्ञानस्यैव नामधेयानि भवन्तीत्यन्वयः । पाचकेवेति पाचकक्रियां कुर्वन् पाचको नाम भवतीत्यनेन प्राज्ञस्योपाधिक-मात्मनः पाचकनामवत्त्वमुक्तं । यद्यपि सञ्ज्ञानादिनाम्नां तत्र नैपा-धिकत्वमुक्तं तथापि तुल्यन्यायतया एतेषामप्यौपाधिकत्वमुक्त-प्रायमिति भावः । एतदुक्तं भवति सञ्ज्ञानादिशब्दाः प्रकाशा-त्मकवस्तुवाचिनः । न च बाह्यवदन्तःकरणवृत्तीनां जडानां प्रका-शात्मकत्वं सम्भवतीति प्रकाशात्मकवस्त्वध्यासादेव तासां प्रका-शात्मकत्वमिति कल्पयन्तोऽधिष्ठानभूतमतिरिक्तं प्रकाशं गमयन्तः पर्यवसानगत्या प्रकाशात्मनः प्रज्ञानस्यैव नामधेयानीत्यत्र स-ञ्ज्ञानादीनामनित्यत्वेन जडानां वृत्तीनां प्रकाशात्मकवस्तुवा-चकसञ्ज्ञानादिनामकत्वानुपपत्तेः । तदतिरिक्तः कश्चित्प्रका-शरूपोऽस्तीत्युक्तं । तथा सञ्ज्ञानादिशब्दवाच्यत्वोक्त्या तत्प्रज्ञानं विज्ञानं प्रज्ञानमित्यस्यैव प्रातिपदिकरूपत्वेन भवतीत्युक्तं । तदनेक-त्वेन तत्तदभिधानात् तत्तन्नामकत्वेन सर्वनामकत्वानुपपत्तेः । प्रज्ञानस्यैकत्वे वचनानुपपत्तेश्च । अतो येन वा पश्यतीत्यादिना

ऐ॰उ॰ एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा

ऐ॰भा॰ साक्षात्। तथाचोक्तं प्राणन्नेव प्राणो नाम भवती-त्यादि ॥ २ ॥

स एष प्रज्ञानरूप आत्मा ब्रह्म। अपरं सर्वशरीरस्थ-प्राणप्रज्ञात्मान्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्य-प्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा। एष एवेन्द्र इन्द्रगु-णाद् देवराजो वा। एषः प्रजापतिर्यः प्रथमजः शरीरी। यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः। यमजो वा एषः स प्रजापतिरेव एव येऽप्येते अग्न्यादयः

---

आ॰ नामधेयानि भवन्तीत्यन्तेन सर्वकारकसदृत्तिसाक्षिविदितः समस्ता-त्मकः सर्वसाक्षी सर्वत्रानुगत एक आत्मा बोधितः ॥ २ ॥

एवं बोधितस्यात्मनः प्रतिशरीरं नानात्वं वारयितुं स एष ब्रह्मेत्यादिवाक्यं तद्व्याचष्टे। स एष इत्यादिना। एष इत्यस्यार्थ-माह। प्रज्ञानरूप आत्मेति। प्रज्ञानं ब्रह्मेति मुख्यब्रह्मतायाः ब्रह्म-मात्रत्वादि। मूर्धद्वाराऽनुप्रविष्टः समष्टिलिङ्गशरीराभिमानी हिरण्यगर्भः प्राणः। प्रज्ञानात्मादिशब्दैस्तत्र तयोरात्मपरं ब्रह्मेत्यत इत्याह। अपरमित्यादिना। सर्वशरीरैक्येन समष्टिसूक्ष्मशरी-रमुच्यते अन्तःकरणोपाधिषु। अनेनापि समष्टिलिङ्गशरीरमुक्तं। व्याख्यातौ प्रज्ञात्मशब्दाभ्यां क्रियाशक्तिज्ञानशक्तिमत्त्वमुक्तं। द्विती-याभ्यां तु तत्र तत्र तथा निर्दिष्ट इत्युच्यत इत्यपौनरुक्त्यं। ननूक्तं प्र-ज्ञानात्मैवापरं ब्रह्मेत्यत्र किं प्रमाणमित्याशङ्क्य प्रवेशवाक्यं प्रमाण-मिति वक्तुमेष इन्द्र इति वाक्यमिति व्याचष्टे। एष इति। गुणा-दिति इदमदर्शमिति श्रुत्युक्तगुणयोगादित्यर्थः। प्रवेशवाक्ये प्रवि-ष्टस्येन्द्रत्वाभिधानाद्धिरण्यगर्भस्यापीन्द्रलोकौ प्रविष्टत्वप्रत्यभिज्ञा-नात् प्रवेष्टुरेव प्रविष्टसर्वरूपत्वादभेदः सिद्ध्यतीति भावः। न तु परमैश्वर्यगुणयोगात् प्रज्ञानात्मा इन्द्रः परमेश्वर इत्यर्थो वाच्यः।

ऐ॰उ॰ इमानि च पञ्च महाभूतानि पृथिवी वायुरा-
काश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमि-

---

ऐ॰भा॰ सर्व्वे देवा एष एव । इमानि च सर्व्वशरीरोपादान-
भूतानि पञ्च पृथिव्यादीनि महाभूतान्यन्नान्नादत्वलक्षणा
न्येतानि । किञ्चेमानि च क्षुद्रैरल्पकैर्मिश्राणि सर्पादीनि ।
इवशब्दोऽनर्थकः । बीजानि कारणानि इतराणि चेतराणि
च द्वैराश्येन निर्दिश्यमानानि । कानि तानीत्युच्यन्ते ।
अण्डजानि पक्ष्यादीनि । जारुजानि जरायुजानि मनुष्या-
दीनि । स्वेदजानि यूकादीनि । उद्भिज्जानि च वृक्षादीनि ।

---

टी॰ प्रज्ञानात्मनः परमेश्वराभेदस्य प्रमाणं प्रज्ञेत्यनेन वक्ष्यमाणत्वात्
परमेश्वरगुणवत्त्वप्रतिपादनस्य च प्रकरणविरोधात् । न च हि-
रण्यगर्भाद्यात्मत्वप्रज्ञायाविशिष्टपरमेश्वरात्मत्वमनेनोच्यत इति
वाच्यं । तथा सति आचार्यादिभिः हेतुवचनानन्वयादेव प्र-
ज्ञैव ब्रह्म एष प्रजापतिरिति पूर्व्वोत्तरपर्य्यायेष्विव गुणयोगाभा-
वेऽप्युपपत्तेरेतस्य व्याख्यानस्य क्लिष्टत्वं मनसि निधायार्थान्तर-
माह । इन्द्रादेवेति । प्रजापतेर्हिरण्यगर्भाद्भेदमाह । य
प्रथमज इति । स लिङ्गशरीराभिमानी अयन्तु स्थूलशरीराभि-
मानीति भेद इत्यर्थः । स एवाद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ।
मुखं निरभिद्यतेत्यादि वाक्यं प्रमाणमाह । यत इति । देवानाञ्च
मनुष्यादीनामुपलक्षणं । तथा च सर्व्वे जीवात्मान एव एवेत्यर्थः ।
एवमेव प्रज्ञेत्यादि वाक्ये सामानाधिकरण्यं गृहीत्वा सर्व्वभूतस्थ-
स्यात्मन एकत्वमुक्त्वा सजातीयभेदं निराकृत्य तदुपाधीनां भूत-
भौतिकानामपि बाधायां सामानाधिकरण्यमाश्रित्यात्मव्यतिरेके-
णाभावं तस्य विजातीयभेदनिराकरणार्थमिमानि चेत्यादिवाक्यं
तद्व्याचष्टे । इमानि चेति । एतान्यन्नान्नादत्वेन पूर्व्वमुक्तानीति
वक्तुं विशिनष्टि । अन्नेति । सर्पादीनां न केवलं क्षुद्रमिश्रत्वं

ऐ॰उ॰ श्राणीव १ वीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भि-

---

ऐ॰भा॰ अश्वाः गावः मनुष्याः हस्तिनः अन्यच्च यत्किञ्चेदं प्राणिजातं। किं तत्। जङ्गमं यच्चलति पद्भ्यां गच्छति। यच्च पतत्रि आकाशेन पतनशीलं। यच्च स्थावरमचलं सर्वं तदशेषतः प्रज्ञानेत्रं। प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव। नीयते सत्तां प्राप्यते अनेनेति नेत्रं प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रं। प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञाश्रय-

---

आ॰ किञ्च सर्पान्तरादीन् पश्यति जीवत्वेनेत्याह। कानि चेति। इतराणीतीति स्थावरजङ्गमभेदेन निर्दिश्यमानानीत्यर्थः। स्वेदजातानि जङ्गमान्युद्भिज्जानि स्थावराणीत्याह। जङ्गम इति। जङ्गममित्यस्य व्याख्या यच्चलतीति। स्थावराणामपि वाय्वादिना चलनमस्तीत्याशङ्क्याह। पद्भ्यामिति। स्थावरमचलमित्यनन्तरं सर्वं तदेव एवेति शेषः। तत् सर्वमेव एवेत्यत्र हेतुं यत् सर्वं तत् प्रज्ञानेत्रमित्यादि प्रतिष्ठेत्यन्तं वाक्यं व्याचष्टे। सर्वमित्यादिना। नीयतेऽनेनेत्यनेन प्रज्ञानेन सत्ता नीयते सत्तां प्राप्यते सत्तावत् क्रियत इत्यर्थः। यद्वा स्वस्वव्यापारेषु प्रवर्त्यत इति वा। मन्येषम्भूतं ब्रह्मैवेत्युपनिषत्सु प्रसिद्धं न तु प्रज्ञानमित्याशङ्क्याह प्रज्ञप्तिः प्रज्ञानस्यैव तत्र। तत्र ब्रह्मशब्देनाभिधानात् दोष इत्युक्तं प्रज्ञानं ब्रह्मैवेति। यद्वा कोऽयमात्मेत्यारभ्यैते सर्वे देवा इत्यन्तं त्वंपदार्थशोधनार्थमिमानि चेत्यादि प्रतिष्ठेत्यन्तं तत्पदार्थशोधनार्थं। तत्र पक्षे प्रकटं ज्ञानं प्रज्ञानमिति तत्पदार्थो ब्रह्मैवोच्यते। पञ्चभूतादिस्थावरान्तं सर्वं तत् प्रज्ञानेत्रमित्यर्थः। प्रज्ञासत्तयैव सर्वस्यापि सत्तावत्त्वं साधयितुं प्रज्ञाने प्रतिष्ठितमित्युक्तं। तद्व्याचष्टे। प्रज्ञाने ब्रह्मणीति। न केवलं प्रज्ञासत्तयैव सत्त्वं सर्वस्य किन्तु प्रवृत्तिरपि तदधीनैवेत्याह। प्रज्ञानेत्र इति। पूर्ववदिति। नीयते प्रवर्त्यतेऽनेनेति व्युत्पत्त्या नेत्रं प्रवर्त्तकमित्यर्थः। लोक इति

शं०भा० मित्यर्थः। प्रज्ञानेत्रो लोकः पूर्व्ववत्। प्रज्ञा चक्षुर्वा सर्व्व एव लोकः। प्रज्ञा प्रतिष्ठा सर्व्वस्य जगतः। तस्मात् प्रज्ञानं ब्रह्म। तदेतत् प्रत्यस्तमितसर्व्वोपाधिविशेषं सन्निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेति सर्व्वविशेषापोहसं-वेद्यं सर्व्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिस-

---

आ० सर्व्वं जगदित्यर्थः। यदा पूर्व्वं नेत्रशब्देन सर्व्वस्य सत्ताप्रधान-हेतुत्वमुक्तं इदानीं सर्व्वस्य स्फुरणहेतुत्वमप्येवमेवोच्यत इत्याह। प्रज्ञा चक्षुर्व्वेति। चक्षुरिति स्फुरणमित्यर्थः। ननु न इव प्रज्ञा-नस्यापि स्फुरणप्रतिष्ठयोरन्याधीनत्वमाशङ्क्य तस्य स्वप्रकाशत्वात् स्वस्मिन्नपि प्रतिष्ठितेनान्याश्रयाभावाच्च नैवमित्याह। प्रज्ञा प्र-तिष्ठेति। यदा सर्व्वस्य जगतः सत्तास्फूर्त्त्योः प्रज्ञानाधीनत्वाद्-रज्ज्वादिकल्पितसर्पादिवत् प्रज्ञाने प्रतिष्ठितत्वेन तदुपादानत्वाच्च मा-यारम्भकत्वाधेन प्रज्ञानव्यतिरेकेणाभावात् प्रज्ञानमेव सर्पादे रज्ज्वादिरिव पर्य्यवसानभूमिरित्याह। प्रज्ञा प्रतिष्ठेति। ध्रुवं पर्य्यवसानभूमिः परिशिष्टं वस्त्वित्यर्थः। एवञ्च प्रज्ञानस्य प्रत्य-गात्मनो निर्व्विशेषत्वादिकं प्रसिद्धमित्याह। तस्मादिति। प्रज्ञा-नस्यैव परिशिष्टत्वेन परमार्थसत्यत्वादित्यर्थः। प्रज्ञानशब्दार्थ-माह। प्रत्यस्तमितेति। अस्मिन् पक्षे ब्रह्मशब्देन प्रत्यगात्मनो निर्व्विशेषत्वादिकमेव सामानाधिकरण्येन समर्थ्यते। ब्रह्मशब्द-स्यापि निर्व्विशेषत्वादिकमेवार्थः। ब्रह्मशब्दस्य हि व्युत्पाद्यमा-नस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते। बृहतेर्धातोरर्थानुगमा-दिति शारीरकभाष्ये उक्तत्वात् प्रज्ञानब्रह्मणोरैक्यमनेन वाक्येनो-च्यते। आत्मा वा इदमेक एवाग्र आसीदित्यारभ्याऽद्वितीयत्वेनैवो-पक्रमाद्दृश्यपदार्थानुपक्रमाच्च। एवञ्चात्मैव स्वाविद्यया मुच्यत इत्ययं पक्षोऽत्र स्फुटीकृत इति द्रष्टव्यं। यदा त्विमानि च पञ्च महाभूता-नीत्यारभ्य तत्तदर्थबोधनार्थत्वेन व्याख्यायते तदा पदार्थबोध-

ऐ० उ० किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च

ऐ०भा० अनेन सर्व्वज्ञमीश्वरसञ्ज्ञं भवति। सर्व्वसाधारणाव्याकृतजगद्बीजप्रवर्त्तकं नियन्तृत्वादन्तर्यामिसञ्ज्ञं भवति। तदेव जगद्बीजभूतबुद्ध्यात्माभिमानलक्षणहिरण्यगर्भसञ्ज्ञं भवति। तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिमद्विराट् प्रजापतिसञ्ज्ञं भवति। तदुद्भूताग्न्याद्युपाधिमद्देवतादिसञ्ज्ञं भवति। तथा विशेषशरीरोपाधिष्वपि ब्रह्मादिस्तम्बपर्य्यन्तेषु

---

आ० शान्तं साक्षात्परमार्थं प्रज्ञानं ब्रह्मेति वाक्यं व्याख्येयं। अत्र च मध्ये व्यवहारप्रज्ञानशब्देन प्रज्ञानस्य नामधेयानीत्यनयैव च ग्रन्था-लोच्यते। अत्र ब्रह्मशब्देन जगत्कारणत्वोपलक्षितं चैतन्यमुक्ता-मिति द्रष्टव्यं। तस्मादिति येभ्यो निर्व्विशेषचिद्रूपत्वाविशेषादि-त्यर्थः। ननु प्रज्ञानस्य ब्रह्मत्वोपदेशे किं सिध्यतीत्याशङ्क्य तस्य निर्व्विशेषत्वादिकं सिध्यतीति सचितार्थकथनपरत्वेन व्याख्येयं प्रत्यक्षमिति। अस्य समानं। उपाधिविशेषमिति उपाधिगतक-र्तृत्वभोक्तृत्वदुःखित्वादिविशेषमित्यर्थः॥ तस्य पुरुषार्थत्वमाह। शान्तमिति॥ परिहृतं परमानन्दरूपमित्यर्थः। निर्व्विशेषत्वे मान-माह। नेति सर्व्वेति॥ यतो वाचो निवर्त्तन्ते आनन्दं ब्रह्मणो विद्वानिति श्रुतिर्निर्व्विशेषानन्दत्वे मानमित्यर्थः। नन्वेवम्भूतस्य प्रज्ञानं कथं सर्व्वज्ञादिरूपत्वावान्तरविधभेद इत्याशङ्क्य नाना-विधोपाधिसम्बन्धादित्याह। तदन्येत्यादिना॥ विशुद्धोपाधिस-म्बन्धाविशेषेऽप्यन्तर्यामिहिरण्यगर्भप्रजापतीनां सर्व्वज्ञाद्भेदमाह। सर्व्वसाधारणेति॥ व्याकृतेति सर्व्वजगत्कारणो समष्टिबुद्ध्या-त्मत्वाभिमान एव लक्षणमुपाधिर्यस्य तदित्यर्थः। अन्तरण्डेति अण्डोपाधिकं विराट् तदन्तरुद्भूतप्रथमशरीरोपाधिकं प्रजाप-तिरित्यर्थः। आदिशब्देन तदुद्भूतेति तस्मादण्डादुद्भूता इमे ऽग्न्यादीनामुपाधयः समष्टिवागादयस्तदुपाधिमत्त्वज्ञानमग्न्यादि-देवतासञ्ज्ञं भवतीत्यर्थः॥ आदिशब्देन व्यष्टिवागाद्यभिमानिनो

ऐ॰उ॰ स्थावरं। सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ३॥

स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः

---

ऐ॰भा॰ तत्तन्नामरूपलाभो ब्रह्मावच्छेदेनैकं सर्व्वोपाधिभेदभिन्नं सर्व्वैः प्राणिभिस्तार्किकैश्च सर्व्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा। एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिं। इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतमित्याद्याः स्मृतिः ॥ ३ ॥

स वामदेवोऽन्यो वा एवं यथोक्तं ब्रह्म यो वेद प्रज्ञेना-

---

आ॰ ब्रह्मेति। चतुराननस्य ऋषिमनुष्यादिशरीरोपाधिषु मनुष्यादिव्यवहारस्तथैत्याह। तथेति। अपीत्यन्तरं वक्तव्यं भवतीति शेषः। उपसंहरति। ब्रह्मादीति। अन्तैवमिति शेषः। एवं ब्रह्मादिस्तम्बेति योज्यं। ननु साङ्ख्यादिभिर्जीवानामेव नानात्वमुच्यते। अन्यैश्च जीवेश्वरयोर्नानात्वं जगतश्चैवं चान्यथाऽन्यथात्वममेकस्यैव ब्रह्मणो नानाऽनेकरूपत्वमत आह। तदेव चैकमिति। अभिप्रायं प्रमाणमाह। एतमेक इति। एवं तावत् कोऽयमात्मेत्यारभ्य प्रबन्धेन प्रज्ञेयमनेन विचारपुरःसरमात्मतत्त्वं निर्धारितं। आत्मा करणसङ्घातात्मकप्राणव्यतिरिक्तः ब्रह्मादिस्तम्बान्तःकरणव्यतिरिक्तः सदनुगतप्रकाशः सर्व्वशरीरेष्वेकः सर्व्वप्रपञ्चाधिष्ठानभूतोऽद्वितीयः प्रज्ञानं ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभाव इति ॥ ३ ॥

इदानीमेवम्भूतब्रह्मात्मविदः फलं वक्तुं स एतेनेत्यादि श्रुतिवाक्यं। सर्वैतच्छब्दैरेकवचनान्तेन प्रकृतानामपि कोऽयमात्मेत्येवं विचारयतो बहूनां परामर्शायोग्यत्वादिदानीन्तनस्य विदुषश्च स इति भूतवाचिना परामर्शायोग्यत्वात् पूर्व्वाध्यायोक्तो वामदेवः परामृश्यत इत्याह। स वामदेव इति। ब्रह्मविदः फलमित्यत्र साध्यतात्पर्याद्वामदेवादिपुरुषविशेषे तात्पर्याभावात् यः कश्चन

ऐ०उ० समभवत् समभवत् इत्यों ॥ ४ ॥ इति ऐतरेयारण्यके षष्ठोऽध्यायः । उपनिषत्सु तृतीयोऽध्यायः समाप्तः ॥ ३ ॥ ॐ तत् सत् हरिः ॐ ॥

---

ऐ०भा० त्मना येनैव प्रज्ञेनात्मना पूर्व्वे विद्वांसोऽमृता अभूवन् तथाऽयमपि विद्वानेतेनैव प्रज्ञानेनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वाऽमृतः समभवदित्योमिति ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशङ्कराचार्य्यभगवत्कृतौ बह्वृचोपनिषद्भाष्ये तृतीयोऽध्यायः सम्पूर्णः ॥ ॐ तत् सत् ॥

---

आ० यास्य इत्याह । स एतेनेति ॥ एवमिति कोऽयमात्मेत्युपक्रम्याव्य स्तं प्रज्ञानरूपं यथोक्तं ब्रह्म प्रज्ञानेनात्मना वेदेत्यर्थः । एतेनेत्येतच्छब्दोक्तमप्रस्तुतं व्यक्तीकरोति । येनैवेति ॥ येनैव प्रज्ञानात्मना ब्रह्म विद्वांसः पूर्व्वेऽमृता अभूवन् तेनैव प्रज्ञानात्मना यथोक्तं ब्रह्म वेद वामदेवोऽन्यो वा स यथाऽमृतोऽभवत् तथाऽयमपीदानीन्तनोऽपि विद्वानेतेनैव प्रज्ञानात्मना अस्माल्लोकादुत्क्रम्यामृतः समभवदित्यन्वयः । अनेनोत्क्रमणं प्रज्ञियो नीहारिवोत्क्रमणं न भवति किन्तु देहात्मभावत्यागेन प्रज्ञानात्मभाव एवेत्यभिप्रेत्य प्रज्ञानात्मना उत्क्रम्येत्युक्तं । प्रज्ञानात्मना विद्वानिति वान्वयः । उक्तमात्मतत्त्वमङ्गीकारवाचिना ओङ्कारेण स्वानुभवप्रकटनेन द्रढीकुर्व्वन् ओङ्कारस्याथशब्दस्य चावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभाविति स्मृतेरोङ्कारेण ब्रह्मात्मानुसन्धानपर्य्यन्तं मङ्गलं कर्त्तुमोमित्युक्तमिति ॥ ४ ॥ इति श्रीमदानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां तृतीयोऽध्यायः समाप्तः ॥ ३ ॥ ॐ तत् सत् ॐ ॥

॥ ॐ हरिः ॐ ॥

# कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषद्भाष्यं ॥

श्वे॰भा॰ इदं विवरणमल्पग्रन्थं ब्रह्मजिज्ञासूनां सुखावबोधायारभ्यते । ननु चित्सदानन्दाद्वितीयब्रह्मस्वरूपश्चेदात्मा नानन्दाद्वितीयब्रह्मस्वरूपोऽप्यात्मा स्वाश्रयया स्वविषयया विद्यया स्वानुभवगम्यया स्वाभासया स्वाभाविकपुरुषपुमर्थः प्राप्ताश्रेयानर्थोऽविद्यापरिकल्पितैरेव साधनैरिष्टप्राप्तिमनिष्टप्राप्तिश्चापुरुषार्थमोक्षार्थमलभमानो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणः सुरनरतिर्यगादिप्रभेदभेदितेनेश्वरार्थकर्मानुष्ठानेनापगतरागादिमलो नित्यादिदर्शनेनोत्पन्नेहामुत्रार्थभोगविरागो वेत्याचार्यद्वारेण वेदान्तश्रवणादिनाऽहं ब्रह्मास्मीति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानतत्कार्यो वीतशोको हृत्तिलक्षणस्य मोक्षस्य विद्याधीनत्वात् युज्यते च तदर्थोपनिषदारम्भः । तथा तद्विज्ञानादमृतत्वं ।तमेवं विद्वानमृत इह भवति नान्यः पन्थाऽयनाय विद्यते। न चेदिहावेदिन्महती विनष्टिः । य एतद्विदुरमृतास्ते भवन्ति। किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्। तं विदित्वा न लिप्यते कर्मणा पापकेन। तरति शोकमात्मवित् । निचाय्य तं मृत्युमुखात्

मे॰भा॰ प्रमुच्यते। एतद्यो वेद निहितं गुहायां। सोऽविद्याग्रन्थिं विकिरतीह सोम्य। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे॥

यथा नद्यः स्यन्दमानाः समुद्रे
गच्छन्त्यस्तं नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात् परं पुरुषमुपैति दिव्यं।

यो ह वै तच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते पुरुषं वेद यथा स वै मृत्युः परिवृधाः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। विद्ययाऽमृतमश्नुते। सर्व्वाणि रूपाणि विचित्य धीराः मैत्यास्माल्लोकादमृता भवन्ति। अपहत्य पाप्मानमनन्ते स्वर्गे लोके तत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवति वीतशोकः। य एतद्विदुरमृतास्ते भवन्ति तद्धैषं ज्ञात्वाऽमृता भवन्ति तदेवोपयन्ति। निचाय्येमां शान्तिमत्यन्तमेति। तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति। ये पूर्व्वं देवा ऋषयश्च तं विदुस्तेषां-
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः॥
जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयं।
सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा।

श्वे०भा० एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरं ।
सर्व्वेषामपि चैतेषामात्मज्ञानं परं स्मृतं ॥
तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतं ततः ।
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा ॥
एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्व्वसमतामेत्य ब्रह्माभ्येति सनातनं ॥
सम्यग्दर्शनसम्पन्नः कर्म्मभिर्न्न स बध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥
कर्म्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः ॥
ज्ञानं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्व्वपातकैः ॥
एवं ह्यायुज्ञायमानं विदित्वा
ज्ञानेन विद्वांस्तेन अभ्येति नित्यं ।
न विद्यते ह्यन्यथा तस्य पन्था-
स्तत्त्वा कविरास्ते प्रपन्नः ॥
देवज्ञक्षेत्रज्ञानादिशुद्धिः परमा मता ।
अयन्तु परमो धर्म्मो यद्योगेनात्मदर्शनं ॥
आत्मज्ञः शोकसन्तीर्णो न बिभेति कुतश्चन ।
मृत्योः सकाशान्मरणादथवान्यकृताद्भयात् ॥
न जायते न म्रियते न बध्यो न च घातकः ।

श्वे०भा०न बध्यो बन्धकारी वा न मुक्तो न च मोचकः ॥

पुरुषः परमात्मा तु यदतोऽन्यदसच्च तत् । एवं श्रुतिस्मृतीतिहासादिषु ज्ञानस्यैव मोक्षसाधनत्वावगमाद्युज्यत एवोपनिषदारम्भः ॥ किञ्च उपनिषत्समाख्ययैव ज्ञानस्यैव परमपुरुषार्थसाधनत्वमवगम्यते । तथा हि । उपनिषदिति उपनिपूर्वस्य षदेर्विशरणगत्यवसादनार्थस्य रूपमाचक्षते । उपनिषच्छब्देन व्याचिख्यासितग्रन्थप्रतिपाद्यवस्तुविषया विद्योच्यते । तादर्थ्यात् ग्रन्थोऽपि उपनिषत् । ये मुमुक्षवो दृष्टानुश्रविके विषयवितृष्णाः सन्त उपनिषच्छब्देन विद्यान्तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्विनाशनात् परमब्रह्मगमयितृत्वाद्गर्भजन्मजरामरणाद्युपद्रवावसादयितृत्वादुपनिषत्समाख्ययाप्यन्यक्तत्वात् परं श्रेय इति ब्रह्मविद्योपनिषदुच्यते। भवेदेवमुपनिषदारम्भो यदि विज्ञानस्यैव मोक्षसाधनत्वं भवेत्। न चैतदस्ति। कर्मणामपि मोक्षसाधनत्वावगमात्। अपाम सोमममृता अभूम । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिना। न त्वेतदस्ति। श्रुतिविरोधान्न्यायविरोधाच्च। श्रुतिविरोधस्तावत्। तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय। न कर्मणा न प्रजया धनेन त्यागे-

श्वे॰भा॰ नैके अमृतत्वमानशुः । प्लवा ह्येते अदृढा यज्ञरूपाः ।
अष्टादशोक्तमवरं येषु कर्म* । एतच्छ्रेयो येऽभिनन्दन्ति
मूढा जरामृत्युं ते पुनरेवापियन्ति । नास्त्यकृतः कृतेन ।
कर्म्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः ॥
अज्ञानमलपूर्णत्वात् पुरुषो मलिनः स्मृतः
तत्क्षयाद्धि भवेन्मुक्तिर्नान्यथा कर्म्मकोटिभिः ॥
प्रजया कर्म्मणा मुक्तिर्धनेन च सता न हि ।
त्यागेनैकेन मुक्तिः स्यात्तदभावे भ्रमत्यहो ॥
कर्म्मोदये कर्म्मफलानुरागा-
स्तथानुयन्ति न तरन्ति मृत्युं ।
ज्ञानेन विद्वांस्तेन अभ्येति नित्यं
न विद्यते ह्यन्यथा तस्य पन्थाः ॥
एवं त्रयीधर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ।
श्रमार्थमाश्रमाश्चापि वर्णानां परमार्थतः ॥
आश्रमैर्न च वेदैश्च यज्ञैः साङ्ख्यैर्व्रतैस्तथा ।
उग्रैस्तपोभिर्विविधैर्दानैर्नानाविधैरपि ।
न लभन्ते तमात्मानं लभन्ते ज्ञानिनः स्वयं ॥
त्रयीधर्म्ममधर्म्मार्थं किंपाकफलसन्निभं ।
नास्ति तात सुखं किञ्चिदत्र दुःखशताकुले ।

---

* कर्म्मेतत् ।

श्वे॰भा॰ तस्मान्मोक्षाय यततां कथं सेव्या मया चयो ।
अज्ञानपाशबन्धत्वादमुक्तः पुरुषः स्मृतः ॥
ज्ञानात्तस्य निवृत्तिः स्यात् प्रकाशात्तमसो यथा ।
तस्माज्ज्ञानेन मुक्तिः स्यादज्ञानस्य परिक्षयात् ॥
व्रतानि दानानि तपांसि यज्ञाः
सत्यञ्च तीर्थाश्रमकर्मयोगाः ।
स्वर्गार्थमेवाशुभमध्रुवञ्च
ज्ञानं ध्रुवं शान्तिकरं महार्थं ॥
यज्ञैर्देवत्वमाप्नोति तपोभिर्ब्रह्मणः पदं ।
दानेन विविधान् भोगान् ज्ञानेन मोक्षमाप्नुयात् ॥
धर्मरज्ज्वा व्रजेदूर्द्ध्वं पापरज्ज्वा व्रजेदधः ।
द्वयं ज्ञानासिना छित्वा विदेहः शान्तिमृच्छति ।
त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज ॥

एवं श्रुतिस्मृतिविरोधान्न कर्मसाधनममृतत्वं । न्यायविरोधात् । कर्मसाधनत्वे मोक्षस्य चतुर्विधक्रिया-फलभावादनित्यत्वं स्यात् । यत् कृतकं तदनित्यमिति कर्मसाध्यस्य नित्यत्वादर्शनात् । नित्यश्च मोक्षः सर्व्व-वादिभिरभ्युपगम्यते । तथा च श्रुतिः । चातुर्मास्य-प्रकरणे प्रजामनु प्रजायसे तदु ते मर्त्या मृतमिति । किञ्च । सुकृतमिति सुकृतस्याक्षयत्वमुच्यते । सुकृतश-ब्दश्च कर्मणि । नन्वेवं तर्हि कर्मणां देवादिप्राप्तिहेतु-

मे॰भा॰लेन बन्धहेतुत्वमेव । सत्यं स्वतो बन्धहेतुत्वमेव । तथा च श्रुतिः । कर्म्मणा पितृलोकः । सर्व्व एते पुण्यलोका भवन्ति । इष्टापूर्त्तं मन्यमाना वरिष्ठा नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥ नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ।

एवं कर्मसु निःस्नेहा ये केचित् पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त इति॥

यदा पुनः फलनिरपेक्षमीश्वरार्थं कर्मानुतिष्ठन्ति तदा मोक्षसाधनज्ञानसाधनान्तःकरणशुद्धिसाधनपारम्पर्येण मोक्षसाधनं भवति ॥

तथाह भगवान् ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्व्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥
यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणं ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसीति ॥

तथा च मोक्षकामः । शुद्ध्यभावे मोक्षाभावं कर्मभिश्च तच्छुद्धिं दर्शयति श्रीविष्णुधर्मे ॥

श्रे॰भा॰ अनूचानस्ततो यज्वा कर्म्मण्यास्ते ततःपरं।
ततो ज्ञानित्वमभ्येति योगी मुक्तिं क्रमाल्लभेत्॥
अनेकजन्मसंसारचिते पापसमुच्चये।
नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः॥
जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥
न लकर्म्माशयो ह्यत्र महामुक्तिविरोधकृत्।
तस्यैव शमने यत्नः कार्य्यः संसारभीरुणा॥
सुवर्णादिमहादानपुण्यतीर्थावगाहनैः।
शरीरैश्च महाक्लेशैः शास्त्रोक्तैस्तत्क्षमो भवेत्॥
देवताशान्तिसत्कारश्रवणैः पुण्यदर्शनैः।
गुरुशुश्रूषणेनैव पापमन्यः प्रशाम्यति॥
याज्ञवल्क्योऽपि शुद्ध्यपेक्षां तत्साधनञ्च दर्शयति॥
कर्त्तव्याऽऽशयशुद्धिस्तु भिक्षुकेण विशेषतः।
ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च॥
मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः।
तथा विपक्वकरण आत्मज्ञानस्य न क्षमः॥
आचार्य्योपासनं वेदशास्त्रार्थस्य विवेकिता।
तत्कर्म्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः॥
स्त्र्यालोकालम्भविगमः सर्व्वभूतात्मदर्शनं।
त्यागः परिग्रहाणाञ्च जीर्णकाषायधारणं॥
विषयेन्द्रियसंरोधस्तन्द्रालस्यविवर्जनं।

श्वे०भा० शरीरपरिसङ्ख्यानं प्रवृत्तिक्षयदर्शनं ॥
नीरजस्तमसा सत्त्वशुद्धिर्निस्पृहता शमः ।
एतैरुपायैः संशुद्धः सत्त्वयोग्यमृतो भवेत् ॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ॥
वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ॥
तथाथर्वणे विशुद्धापेक्षमात्मज्ञानं दर्शयति ।
जन्मान्तरसहस्रेषु यदा क्षीणास्तु किल्बिषाः ।
तदा पश्यति योगेन संसारच्छेदनं महत् ॥

यस्मिन् विशुद्धे विरजे च चित्ते च आत्मवत् पश्यन्ति यतयः क्षीणदोषाः । तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति ॥
बृहदारण्यके विविदिषाहेतुत्वं यज्ञादीनां दर्शयति । ननु । विद्यां चाविद्यां च यस्तद्वेदोभयं सह । तपो विद्या च विप्रस्य नैश्रेयसकरं परमित्यादिना कर्मणामप्यमृतत्वप्राप्तिहेतुत्वमवगम्यते । सत्यमवगम्यत एव तदपेक्षितशुद्धिद्वारेण न च साक्षात् । तथा हि विद्यां चाविद्यां च । तपो विद्या च विप्रस्य नैश्रेयसकरं परमित्यादिना ज्ञानकर्मणोर्निश्रेयसहेतुत्वमभिधाय कथमनयोस्तद्धेतुत्वमित्याकाङ्क्षायां । तपसा कल्मषं हन्ति विद्ययामृतमश्नुते । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत

श्वे॰भा॰ इति वाक्यशेषेण कर्म्मणः कल्मषक्षयहेतुत्वं विद्ययाऽमृत-
त्वप्राप्तिहेतुत्वं प्रदर्शितं । यत्र तु शुद्ध्याद्यवान्तरका-
र्य्यानुपदेशस्तत्रापि शाखान्तरोपसंहारन्यायेनोपसंहारः
कर्त्तव्यः । ननु कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा
इति यावज्जीवकर्म्मानुष्ठाननियमे सति कथं विद्याया
मोक्षसाधनत्वमुच्यते। कर्म्मण्यधिकृतस्यायं नियमो नान-
धिकृतस्याऽनियोज्यस्य ब्रह्मवादिनः । तथाच विदुषः क-
र्म्मानधिकारं दर्शयति श्रुतिः। नैतद्विद्वानृषिणा विधेयो
न रुध्यते विधिना शब्दपारः । एतद्ध स्म वै तत्पूर्व्वे
विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे । एतं वै तमात्मानं
विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकै-
षणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्ति । एतद्ध स्म वै
तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्ये-
ष्यामहे किमर्था वयं यक्ष्यामहे स ब्राह्मणः केनस्याद्येन
स्यात्तेनेदृश एवेति ॥ यथाह भगवान् ॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येवात्मना तुष्टस्तस्य कार्य्यं न विद्यते ॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
नचास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥

तथाचाह भगवान् परमेश्वरे लैङ्गे कालकूटाख्याने ॥

तेन मैत्रेन विप्रस्य त्यक्तसङ्गस्य देहिनः ।
कर्त्तव्यं नास्ति विप्रेन्द्रा अस्ति चेत्तत्त्वविच्च न ॥

श्रेभा॰इह लोके परं चैव कर्त्तव्यं नास्ति तस्य वै ।
जीवन्मुक्तो यतस्तस्माद्ब्रह्मवित् परमार्थतः ॥
ज्ञानाभ्यासरतो यस्तु सर्व्वतत्त्वार्थवित् स्वयं ।
कर्त्तव्याभावमुत्सृज्य ज्ञानमेवाधिगच्छति ॥
वर्णाश्रमाभिमानी यस्त्यक्त्वा ज्ञानं द्विजोत्तमः ।
अन्यत्र रमते मूढः सोऽज्ञानी नात्र संशयः ॥
क्रोधो भयं तथा लोभो मोहो भेदश्च यत् तमः ।
धर्म्माधर्म्मौ च तेषां हि तदवस्थाद्गुणाः ॥
शरीरेष्विति वै ज्ञेयः सोऽविद्यां संत्यजेत् ततः ।
अविद्यां विद्यया हित्वा स्थितस्यैवेह योगिनः ॥
क्रोधाद्या नाशमायान्ति धर्म्माधर्म्मौ च देहजौ ।
तत्क्षयाच्च शरीरेण न पुनः सम्प्रयुज्यते ॥
स एव मुक्तः संसाराद्दुःखत्रयविवर्जितः ।

तथा शिवधर्म्मोत्तरे ॥

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित् ॥
लोकद्वयेन कर्त्तव्यं किञ्चिदस्य न विद्यते ।
इहैव स विमुक्तः स्यात् सम्पूर्णः समदर्शनः ॥

तस्मादिदुषः कर्त्तव्याभावादविद्यावद्विषय एवायं कुर्व्वन्नेवेत्यादिकर्म्मनियमः । कुर्व्वन्नेवेति च नायं कर्म्मनियमः किन्तु विद्यामाहात्म्यं दर्शयितुं यथा कामं कर्म्मानुष्ठानमेव द्रष्टव्यं । एतदुक्तं भवति। यावज्जीवं यथा

शं॰भा॰ कामं पुण्यपापादिकं कुर्व्वत्यपि विदुषि न कर्म्मलेपो भवति विद्यासामर्थ्यादिति। तथा हि। ईशावास्यमिदꣳ सर्व्वमित्यारभ्य तेन त्यक्तेन भुञ्जीथा इति विदुषः सर्व्वकर्म्मत्यागेनात्मपालनमुक्त्वा नियोज्ये ब्रह्मविदि त्यागकर्त्तव्यतोक्तिरयुक्तैवोक्तेति मत्वा चकितः सन् वेदो विदुषस्त्यागकर्त्तव्यतामपि गौणकवान्। कुर्व्वन्नेवेह लोके विद्यमानं पुण्यपापादिकं कर्म्म यावज्जीवं जिजीविषेत् न पुण्यादिबन्धभयात् पुण्यादिकं त्यक्त्वा तूष्णीमवतिष्ठेत्। एतावत् कर्म्माणि कुर्व्वत्यपि विदुषि त्वयि यतो यावज्जीवानुष्ठानादन्यथा भावः स्वरूपात् प्रच्युतिः पुण्यादिनिमित्तसंसारान्वयो नास्ति। अथवा इतः कर्म्मानुष्ठानोत्तरकालभाव्यन्यथाभावः संसारान्वयो नास्ति। यस्मात्त्वयि विद्वत्सु न कर्म्म लिप्यते॥ तथाच श्रुत्यन्तरं॥ न लिप्यते कर्म्मणा पापकेन। एवं विदि पापं कर्म्म न श्लिष्यते। नैनं कृताकृते तपतः। एवं हास्य सर्व्वे पाप्मानः प्रदूयन्ते। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते यथा॥ लैङ्गे॥

ज्ञानिनः सर्व्वकर्म्माणि जीर्य्यन्ते नात्र संशयः।
क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि॥

शिवधर्म्मोत्तरेऽपि॥

तस्माज्ज्ञानासिना तूर्णमशेषं कर्म्मबन्धनं।
कामाकामकृतं छित्त्वा शुद्ध्यात्मनि तिष्ठति॥

श्व॰भा॰यथा वह्निर्महादीप्तः शुष्कमार्द्रञ्च निर्दहेत्।
तथा शुभाशुभं कर्म्म ज्ञानाग्निर्दहते क्षणात्॥
पद्मपत्रं यथा तोयैः स्वस्थैरपि न लिप्यते।
शब्दादिविषयाम्भोभिस्तद्वज्ज्ञानी न लिप्यते॥
यस्तान्मन्त्रबलोपेतः क्रीडन् सर्पैर्न दृश्यते।
क्रीडन्नपि न लिप्येत तद्वदिन्द्रियपन्नगैः॥
मन्त्रौषधबलैर्यद्वज्जीर्य्यते भक्षितं विषं।
तद्वत् सर्व्वाणि पापानि जीर्य्यन्ते ज्ञानिनः क्षणात्॥

तथा च सूत्रकारः। पुरुषार्थोऽतःशब्दादिति बादरायण इति ज्ञानस्यैव परमपुरुषार्थहेतुत्वमभिधाय शेषत्वात् पुरुषार्थवाद इत्यादिना कर्म्मापेक्षितकर्त्तृप्रतिपादकत्वेन विद्यायाः कर्म्मशेषत्वमाशङ्क्याधिकोपदेशात्तु बादरायणस्येत्यादिना कर्त्तृत्वादिसंसारधर्म्मरहितापहतपाप्मादिरूपब्रह्मोपदेशात्तद्विज्ञानपूर्व्विकान्तु कर्म्माधिकारसिद्धिं मन्यमानस्य कर्म्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चाविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपदर्शनात् कर्म्माधिकारः। स्थितिप्रसङ्गाद् भिन्नप्रकरणत्वाद्भिन्नकार्य्यत्वाच्च परस्परसमुच्चयेऽङ्गाङ्गीभावो नास्तीति प्रतिपाद्याऽत एवाग्नीन्धनाद्यनपेक्षेति विद्याया एव परमपुरुषार्थहेतुत्वादग्नीन्धनाद्याश्रमकर्म्माणि विद्यायाः स्वार्थसिद्धौ नापेक्षितव्यानीति पूर्व्वोक्तस्याधिकरणस्य फलमुपसंहृत्याऽत्य-

श्वे॰भा॰ नामेवानपेक्षायां प्राप्तायां सर्व्वापेक्षा च यज्ञश्रुतेरश्ववदिति नात्यन्तमनपेक्षा। उत्पन्नाहि विद्या फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते। उत्पत्तिं प्रत्यपेक्षत एव। विविदिषन्ति यज्ञेनेति श्रुतेरिति विविदिषा साधनत्वेन कर्म्मणामुपयोगं दर्शितवान्। तथा च न विमेत् स्मृतयेऽनुमतिर्वेति सूत्रद्वयेन कुर्व्वन्नेवेति मन्द्रद्वयस्याविषयत्वेन विद्यास्तुतित्वेन वाक्यद्वयं दर्शितवान्। अत उक्तेन प्रकारेण ज्ञानस्यैव मोक्षसाधनत्वाद्युक्तः परोपनिषदारम्भः। ननु बन्धस्य मिथ्यात्वे सति ज्ञाननिवर्त्त्यत्वेन ज्ञानादमृतत्वं स्यात्। नत्वेतदस्ति। प्रतिपन्नत्वादाधाभावात्। पुष्पदादिस्वरूपत्वेनात्मनो विलक्षणत्वे चाद्ग्राह्यभावादध्यासासम्भवाच। उच्यते। न तावत् प्रतिपन्नत्वेन सत्यत्वं वक्तुं शक्यते। प्रतिपत्तेः सत्यत्वमिथ्यात्वयोस्समानत्वात्। नापि बाधाभावात्सत्यत्वं। विधिमुखेन कारणमुखेन च बाधसम्भवात्। तथाहि श्रुतिः। प्रपञ्चस्य मिथ्यात्वं मायाकारणत्वञ्च दर्शयति। नतु द्वितीयमस्ति। एकत्वं। नास्ति द्वैतं। कुतो विदिते वेद्यं नास्ति। एकमेवाद्वितीयं। वाचारम्भणं विकारो नामधेयं। एकमेव सन्नेह नानास्ति किञ्चन। एकधैवानुद्रष्टव्यं। मायान्तु प्रकृतिं विद्यात्। माया स्रजते विश्वमेतत्। इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिभिर्वाक्यैः। अजोपि सन्नव्ययात्मा भूतानामीश्वरोपिसन् प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥

श्वे॰भा॰ अविभक्तञ्च भूतेषु विभक्तमिव च स्थितं ।

तथा च ब्राह्मे पुराणे ॥

धर्म्माधर्म्मौ जन्ममृत्यू सुखदुःखेषु कल्पना ॥
वर्णाश्रमस्तथा वासः स्वर्गो नरक एव च ।
पुरुषस्य न सन्त्येते परमार्थस्य कुत्रचित् ॥
दृश्यते च जगद्रूपमसत्यं सत्यवन्मृषा ।
तोयवन्मृगतृष्णासु यथा मरुमरीचिका ॥
रौप्यवल्लोकसम्भूतं कौकयं शुक्तिरेवच ।
सर्पवद्रज्जुखण्डस्य निशायां वेश्ममध्यगः ॥
एक एवेन्दुवद्द्वोपि तिमिरोपहत चक्षुषः ।
आकाशस्य घटीभावो नीलत्वं स्थिरधता तथा ॥
एकस्य सूर्य्यो बहुधा जलाधारेषु दृश्यते ।
आभाति परमात्मापि सर्व्वोपाधिषु संस्थितः ॥
द्वैतभ्रान्तिरविद्याख्या विकल्पो न च तत्तथा ।
परस्परमाकारस्थौ तेषामात्माभिमानिनौ ॥
आत्मभावनया भ्रान्त्या देहं भावयतः सदा ।
आगमैरादिमध्यान्तैर्धर्मभूतैस्त्रिभिः सदा ॥
जाग्रत्स्वप्नसुषुप्तैस्तु छादितं विश्वतैजसं ।
स्वमायया स्वमात्मानमोहयेद्द्वैतरूपया ॥
गुहागतं स्वमात्मानं लभते च स्वयं हरिः ।
योऽपि वह्नानलज्वाला कलापो विविधाकृतिः ॥
आभाति विष्णोः सृष्टिश्च स्वभावो द्वैतविस्तरः ।

यो॰भा॰शान्ते मनसि शान्तस्य घोरे मूढे च तादृशः ॥

ईश्वरो दृश्यते नित्यं सर्व्वत्र न तु तत्त्वतः ।
देहस्तपिण्डदेहास्तु गात्रभाजनभेदतः ॥
चराचराणां भूतानां द्वैतता न च सत्यतः ।
सर्व्वेशे तु निराधारे द्वैतस्यात्मनि संस्थिता ॥
अविद्यादिगुणां सृष्टिं करोत्यसर्थ्यय तं ।
सर्पस्य रज्जुता भाति नास्ति रज्जौ भुजङ्गता ॥
उत्पत्तिनाशयोर्नास्ति कारणं जगतोऽपि च ।
लोकानां व्यवहारार्थमविद्येयं विनिर्म्मिता ॥
एषा त्रिमोहिनोयुक्ता द्वैताद्वैतस्वरूपिणी ।
अद्वैतं भावयेद्बुद्ध्या सकलं निष्कलं सदा ॥
आत्मज्ञः शोकसन्तीर्णो न बिभेति कुतश्चन ।
मृत्योः सकाशान्मरणादथवान्यकृताद्भयात् ॥
न जायते न म्रियते न बध्यो न च घातकः ।
न बद्धो बन्धकारी वा न मुक्तो न च मोचकः ॥
पुरुषः परमात्मा तु यदतोऽन्यदसच्च तत् ।
एवं बुद्ध्वा जगद्रूपं विष्णोर्मायामयं मृषा ॥
भोगसङ्गी भवेन्मुक्त्यक्त्वा सर्व्वविकल्पनां ।
त्यक्तसर्व्वविकल्पस्य स्वात्मस्थं निश्चलं मनः ॥
ततः शान्तो भवेद्योगी दग्धेन्धन इवानलः ।
एषा चतुर्व्विंशतिभेदभिन्ना परा माया प्रकृतिरात्मसमुत्था ।
कामक्रोधौ लोभमदौ भयञ्च विषादशोकौ च विकल्पजालं ॥

श्वे॰भा॰ धर्म्माधर्म्मौ सुखदुःखे च सृष्टिविनाशपाकौ नरके गतिश्च ।
वासः स्वर्गे जातयश्चाश्रमाश्च रागद्वेषौ विविधा व्याधयश्च ॥
कौमारतारुण्यजरावियोगसंयोगभोगानशनं व्रतानि ।
इतीदमीदृग्विदयं निधाय तूष्णीमासीनः सुमतिश्च विद्वान् ॥

तथा च श्रीविष्णुधर्म्मे षडध्याय्यां ॥

अनादिसम्बन्धवति क्षेत्रज्ञोऽयमविद्यया ।
युक्तः पश्यति भेदेन ब्रह्म तत्त्वात्मनि स्थितं ॥
पश्यत्यात्मानमन्यच्च यावद्वै परमात्मनः ।
तावत् संभ्राम्यते जन्तुर्मोहितो निजकर्म्मणा ॥
संक्षीणाशेषकर्म्मा तु परं ब्रह्म प्रपश्यति ।
अभेदेनात्मनः शुद्धं शुद्धत्वादक्षयो भवेत् ॥
अविद्या च क्रियाः सर्व्वा विद्या ज्ञानं प्रचक्षते ।
कर्म्मणा जायते जन्तुर्विद्यया च विमुच्यते ॥
अद्वैतं परमार्थो हि द्वैतं तद्भिन्न उच्यते ।
पशुतिर्य्यङ्मनुष्याख्यस्तथैव नृप नारकः ॥
चतुर्व्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ।
अहमन्योऽपरश्चायममी चात्र तथाऽपरे ॥
अज्ञानमेतद्द्वैताख्यमद्वैतं श्रूयतां परं ।
मम त्वहमिति प्रज्ञा वियुक्तमपि कल्पवत् ॥
अविकार्य्यमनाख्येयमद्वैतमनुभूयते ।
मनोवृत्तिमयं द्वैतमद्वैतं परमार्थतः ॥
मनसो वृत्तयस्तस्माद्धर्म्माधर्म्मनिमित्तजाः ।

यो॰भा॰ निरोद्धव्यास्तन्निरोधे अद्वैतं सोपपद्यते ॥

मनोदृश्यमिदं सर्व्वं यत् किञ्चित् सचराचरं ।
मनसो ह्यमनीभावे द्वैतभावं तदाप्नुयात् ॥
कर्म्मणो भावना चेयं सा ब्रह्मपरिपन्थिनी ।
कर्म्मभावनया तुल्यं विज्ञानमुपजायते ॥
तादृग्भवति विज्ञप्तिर्यादृशी खलु भावना ।
क्षये तस्याः परम्ब्रह्म स्वयमेव प्रकाशते ॥
परमात्मा मनुष्येन्द्र विभागो ज्ञानकल्पितः ।
क्षये तस्यात्मपरयोरविभागस्त एव हि ।
आत्मक्षेत्रज्ञसञ्ज्ञो हि संयुक्तः प्राकृतैर्गुणैः ।
तैरेव विगतः शुद्धः परमात्मा निगद्यते ॥
तथा च श्रीविष्णुपुराणे ॥
परमात्मत्वमेवैको नान्योऽस्ति जगतः परः ।
तवैष महिमा येन व्याप्तमेतच्चराचरं ॥
यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यते मोहसंप्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वरं ॥
एवं हरिः सर्व्वमिदं जनार्द्दनो नान्यत् ततःकारणकार्य्यजातं ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगता भवन्ति ॥

श्रेंभा॰ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितं ॥
ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्त्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि ।
वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपं ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वं ॥
मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद् द्विज वस्तुजातं ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतं ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गं ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत् तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥
अविद्यासञ्चितं कर्म तच्चाशेषेषु जन्तुषु ।
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ॥
प्रवृद्ध्यपचयौ न स्त एकस्याखिलजन्तुषु ।
यत् तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ॥
परिणामादिसम्भूतं तद्वस्तु नृप तच्च किं ।
यदन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ॥
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ।
यदा समस्तदेहेषु

श्रे॰भा॰ तदा हि को भवान् सोऽहमित्येतद्विप्रलम्भनं ।
त्वं राजा सविकारोऽयं वयं वाहाः पुरःसराः ॥
अयञ्च भवतो लोको न सदेतत् त्वयोच्यते ।
वस्तु राजेति यल्लोके यच्च राजभटात्मकं ॥
तथाऽन्ये च नृपत्वञ्च तत्तत्सङ्कल्पनामयं ।
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ॥
परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयतां मम ।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ॥
जन्मवृद्ध्यादिरहित आत्मा सर्व्वगतोऽव्ययः ।
परज्ञानमयः सद्भिर्नामजात्यादिभिः प्रभुः ॥
न योगवान् न युक्तोऽभून्नैव पार्थिव योक्ष्यति ।
तस्यात्मपरदेहेषु सतो ह्येकमयं हि तत् ॥
विज्ञानपरमार्थोऽसौ द्वैतिनो तथ्यदर्शिनः ।
एवमेकमिदं विद्ध्यभेदि सकलं जगत् ॥
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥
सर्व्वभेदान्यभेदेन स ददर्श तदात्मनः ।
तदा ब्रह्म ततो मुक्तिमवाप परमां द्विज ॥
सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ॥
एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्व्वमेतदात्मस्वरूपं त्यज भेदमोहं ॥

श्वे०भा० इतीरितस्तेन स राजवर्य्यस्तत्याज भेदं परमार्थदृष्टिः ।
स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥

तथा चोक्तं ॥

तस्मादज्ञानमूलो हि संसारः सर्व्वदेहिनां ।
परतन्त्रे स्वतन्त्रे च भिदाभावाद्विचारतः ।
एकत्वमपि नास्त्येव द्वैतन्तत्र कुतोऽन्यथा ॥
एकं नास्त्यथ मर्त्यश्च कुतो द्वैतसमुद्भवः ।
नान्तःप्रज्ञो न बहिःप्रज्ञो न चोभयत एव च ॥
न प्रज्ञानघनस्त्वेवं न प्रज्ञोऽप्रज्ञ एव सः ।
विदिते नास्ति वेद्यञ्च निर्व्वाणं परमार्थतः ॥
अज्ञानतिमिरात् सर्व्वं ज्ञानं कार्य्यं विचारतः ।
ज्ञानञ्च बन्धनस्यैव मोक्षो नात्यात्मनो द्विजाः ॥
न ह्येषा प्रकृतिर्जीवो विकृतिश्च विकारतः ।
विकारो नैव मायैषा सदसद्भिर्विवर्जिता ॥
तथाह भगवान् पराशरः ॥
यस्माद्धि जायते विश्वं यस्मिन्नेव प्रविलीयते । -
स मायी मायया बद्धः करोति विविधास्तनूः ॥
न चाप्येवं संसरति न च संसारयेत् परं ।
न कर्त्ता नैव भोक्ता च न च प्रकृतिपूरुषौ ॥
न माया नैव च प्राणश्चैतन्यं परमार्थतः ।
तस्मादज्ञानमूलो हि संसारः सर्व्वदेहिनां ॥

श्वे॰भा॰नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः॥
तस्मादद्वैतमेवाहुर्मुनयः परमार्थतः।
ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः॥
अर्थस्वरूपमज्ञानाः पश्यन्त्यन्ये कुदृष्टयः।
कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः॥
दृश्यते ह्यर्थरूपेण पुरुषैर्भ्रान्तदृष्टिभिः।
यदा पश्यति चात्मानं केवलं परमार्थतः॥
मायामात्रमिदं द्वैतं तदा भवति निर्वृतः।
तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः॥

एवं सत्यादिना नामादिकारणलोपन्यासमुखेन स्वरूपेण च बाधितत्वात् प्रपञ्चस्य मिथ्यात्वमवगम्यते। अस्थूलादिलक्षणस्य ब्रह्मणस्तद्विपरीतस्थूलाकारो मिथ्या भवितुमर्हति। यथैकस्य चन्द्रमसस्तद्विपरीतद्वितीयाकारस्तद्वत्। तथा च सूत्रकारेण। न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीति स्वरूपत उपाधितश्च विरुद्धरूपद्वयासम्भवान्निर्विशेषमेव ब्रह्मेत्युपपद्यते। नन्वभेदादिति श्रुतिबलात् किमिति सविशेषमपि ब्रह्म नाभ्युपगम्यत इत्याशङ्क्य न प्रत्येकमतद्वचनादित्युपाधिभेदमतद्वचनभेदस्य श्रुत्यैव बाधितत्वाद्भेदश्रुतिबलात् सविशेषस्य ग्रहणायोगान्निर्विशेषमेवेत्युपपाद्यापि चैनमेक इति भेदनिन्दापूर्वकं अभेदमेवैतरेयशाखिनः समामनन्ति। सग-

श्वे॰भा॰ सैवेदमाप्तव्यं। नेह नानास्ति किञ्चन। मृत्योः स मृत्युमा-
प्नोति य इह नानेव पश्यति। एकधैवानुद्रष्टव्यमिति।
भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं
ब्रह्म मे तदिति सर्व्वभोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य
ब्रह्मैकस्वभावतामभिधीयत इति॥ पुनरपि निर्व्विशेषपक्षे
दृढीकृते किमित्येकस्वरूपस्योभयस्वरूपासम्भवेनाकार-
मेव ब्रह्माऽवधार्य्यते न पुनर्व्विपरीतमित्याशङ्क्याऽरूपवदेव
हि तत्प्रधानत्वादिति रूपाद्याकाररहितमेव ब्रह्मावधा-
रयितव्यं। कस्मात्। तत्प्रधानत्वात्। अस्थूलमनण्वह्रस्वम-
दीर्घमशब्दमस्पर्शमरूपमव्ययं। आकाशो वै नामरूपयो-
र्न्निर्व्वहिता ते यदन्तरा तद्ब्रह्म तदेतद्ब्रह्मापूर्व्वमनपरम-
नन्तरमबाह्यमयमात्मा ब्रह्म सर्व्वानुभूरित्येतदनुशा-
सनमिति। एवमादीनि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि
इतराणि कारणब्रह्मविषयाणि न तत्प्रधानानि। तत्प्र-
धानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति। अतस्तत्पर-
श्रुतिप्रतिपन्नत्वात् निर्व्विशेषमेव ब्रह्मावगन्तव्यं न पुनः
सविशेषमिति निर्व्विशेषपक्षमुपपाद्य का तर्ह्याकारवि-
षयाणां श्रुतीनां गतिरित्याकाङ्क्षायां प्रकाशवच्चावैय-
र्थ्यादिति। चन्द्रसूर्य्यादीनां जलाद्युपाधिषु च उपाधि-
कृतनानात्ववच्च ब्रह्मणोऽप्युपाधिकृतनानात्वरूपस्य विद्य-
मानत्वात्तदाकारवतो ब्रह्मणः आकारविशेषोपदेश
उपासनार्थो न विरुध्यते। एवमवैयर्थ्यं नानाकारब्रह्म-

श्वे॰भा॰ विषयाणां वाक्यानामिति भेदश्रुतीनामौपाधिकब्रह्म-
विषयत्वेनावैयर्थ्यमुक्त्वा पुनरपि निर्व्विशेषमेव ब्रह्मेति
दृढत्वमाह च तन्मात्रमिति । स यथा सैन्धवघनो न
बाह्यः कृत्स्नो रसघन एव। एवं वा अरेऽयमात्माऽनन्तरो
ऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति श्रुत्युपन्यासेन विज्ञा-
नव्यतिरिक्तरूपान्तराभावमुपन्यस्य चार्थोऽपि स्मर्य्यत
इति। अथात आदेशो नेति नेति। अन्यदेव तद्विदिता-
दथोऽविदितादधि। यतो वाचो निवर्त्तन्ते अप्राप्य म-
नसा सह। प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरं। वच-
सामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसञ्ज्ञितं। विश्वस्वरूपवैरूप्य
लक्षणं परमात्मन इत्यादिश्रुतिस्मृत्युपन्यासमुखेन प्रत्य-
स्तमितमेव ब्रह्मेत्युपपाद्य एव चोपमा सूर्य्यादिवदिति।
य एव चेतनमात्ररूपो नेति नेत्यात्मको विदिताऽवि-
दिताभ्यामन्यो वाचामगोचरः प्रत्यस्तमितभेदो विश्व-
स्वरूपलक्षणरूपः परमात्मा अविद्योपाधिको भेदः ।
अत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषव-
त्तामभिप्रेत्य जलसूर्य्यादिरिवेत्युपादीयते मोक्षशास्त्रेषु।
आकाशमेकं हि यथा घटादिषु पृथक् पृथक् तथा-
त्मैको ह्यनेकस्थ जलधारेष्विवांशुमान् ॥
एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
तथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्।

श्वे॰भा॰ उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा॥

इति दृष्टान्तबलेनापि निर्विशेषमेव ब्रह्मेत्युपपाद्य-म्बुवद्ग्रहणादित्यात्मनो मूर्त्तत्वेन सर्वगतत्वे जलसूर्यादिवत् मूर्त्तमभिन्नापदेशस्थितत्वाभावाद्दृष्टान्तदार्ष्टान्तिकयोः सादृश्यं नास्तीत्याशङ्क्य वृद्धिह्रासभाक्त्वमिति । न हि दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितांशमुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते । सर्वसारूप्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । वृद्धिह्रासभाक्त्वमत्र विवक्षितं । जलगतसूर्यप्रतिबिम्बं जलवृद्धौ वर्द्धते जलह्रासे च ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्मानुविधायि भवति न तु परमार्थतः सूर्यस्य तत्त्वमस्ति । एवं परमार्थतो विकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तरभावात् भजत एवोपाधिमान् वृद्धिह्रासादीनि । विवक्षितांशप्रतिपादनेन दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यमुक्त्वा दर्शितान् प्रति पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् । इन्द्रो मायाभिः पुरुरूप ईयते । मायिनं तु महेश्वरं । मायी सृजते विश्वमेतत् । एकस्तथा सर्वभूतान्तरात्मा । रूपं रूपं प्रतिरूपो बभूव । एको देवः सर्वभूतेषु गूढः । एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । स एष इह प्रविष्ट आनखाग्रेभ्यः । तत् सृष्ट्वा तदेवानुप्राविशदित्यादिना परस्यैव

श्वे०भा० ब्रह्मण उपाधियोगं दर्शयित्वा निर्विशेषमेव ब्रह्म। भेदस्तु जलसूर्य्यादिवदौपाधिको मायानिबन्धन इत्युपसंहृतवान्। किञ्च। ब्रह्मविदामनुभवोऽपि प्रपञ्चबाधकः। तेषां निष्प्रपञ्चात्मदर्शनस्य विद्यमानत्वात्। तथा तेषामनुभवं दर्शयति। यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। विदिते वेद्ये नाप्नोति। एवं निर्व्वाणमनुशासनं। यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यत् पश्येत्। यत्र त्वस्य सर्व्वमात्मैवाऽभूत्। तत् केन कं पश्येत्।

यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ।
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति तद्रूपं परमेश्वरं ॥
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ।
सर्व्वभूतान्यशेषेण ददर्श स तदात्मनः ।
तथा ब्रह्म ततो मुक्तिमवाप परमां द्विज ।
आत्मव्यतिरेकेण द्वितीयं यो न पश्यति ।
ब्रह्मभूतः स एवेह वेदशास्त्र उदाहृतः ॥

इत्येवं श्रुतिस्मृतियुक्तितोऽनुभवतश्च प्रपञ्चस्य बाधितत्वादत्यन्तविलक्षणानामसद्रूपाणां मधुरतिक्तश्वेतपीतादीनामपि परस्पराध्यासदर्शनादमूर्त्तेऽप्याकाशे तलमलिनताद्यध्यासदर्शनादात्मानात्मनोरत्यन्तविल-

## कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत्॥

श्वे॰उ॰ ॐ ब्रह्मवादिनो वदन्ति। किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठिताः।

---

श्वे॰भा॰ तयोर्मूर्त्तामूर्त्तयोरपि तथा सम्भवात् स्थूलोऽहं कृशो ऽहमिति देहात्मनोरध्यासानुभवात्।

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतं।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते।

इत्यादि श्रुतिस्मृतिदर्शनात्। य एनं वेत्ति हन्तारं। प्रकृतेः क्रियमाणानीति स्मृतिदर्शनाच्चाध्यासस्य प्रहाणायात्मैकत्व विद्याप्रतिपत्तये उपनिषदारभ्यते॥

ब्रह्मवादिनो वदन्तीत्यादि-श्वेताश्वतराणाम् मंत्रोपनिषत्।तस्या अल्पग्रन्था वृत्तिरारभ्यते। ब्रह्मवादिनः ब्रह्मवदनशीलाः सर्वे सम्भूय वदन्ति। किं कारणं ब्रह्म। किमिति स्वरूपविषयोऽयं प्रश्नः। अथवा कारणं ब्रह्म आहोस्वित् कालादि कालस्वभाव इति वक्ष्यमाणं। अथवा किं कारणं ब्रह्म सिद्धरूपमुपादानभूतं किमित्यर्थः। अथवा बृंहयति बृंहयति तस्मादुच्यते परं ब्रह्मैव शुद्धैव निर्विशेषनान्निमित्तोपादानयोरुभयोर्वा प्रश्नः। किं कारणं ब्रह्मेति। किं ब्रह्म कारणं अहोस्वित् कालादि। अथवा अकारणमेव। कारणत्वेऽपि

मू॰उ॰अधिष्ठिताः केन सुखेतरेषु वर्त्तामहे ब्रह्मविदो व्यवस्थां ॥ १ ॥

कालस्वभावो नियतिर्यदृच्छा भूतानि

---

श्वे॰भा॰किं निमित्तमुतोपादानं। अथवोभयं। तद्वा किं ब्रह्मण-मिति। वक्ष्यमाणपरिहारानुरूपेण सम्लेणाष्टथा वा प्रश्नेऽपि सम्बन्धः कर्त्तव्यः। प्रश्नापेक्षत्वात् परिहारस्य। कुतः स्म जाताः कुतो वयं कार्य्यकारणवन्तो जाताः। न स्वरूपेण जीवानामुत्पत्त्यादिश्रवणात्। तथा च श्रुतिः। न जायते म्रियते वा विपश्चित् जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति। जरामृत्यू शरीरस्य अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्म्मेति॥ तथा च स्मृतिः। अजः शरीरग्रहणात् स जात इति कीर्त्यत इति। किञ्च। जीवामः केन वा वयं सृष्टाः सन्तो जीवाम इति स्थितिविषयः प्रश्नः॥ क्व च सम्प्रतिष्ठाः प्रलयकाले स्थिताः। अधिष्ठिता नियमिताः केन सुखेतरेषु सुखदुःखेषु वर्त्तामहे। ब्रह्मविदो व्यवस्थां हे ब्रह्मविदः सुखदुःखेषु व्यवस्थां केनाधिष्ठिताः सन्तोऽनुवर्त्तामह इति सृष्टिस्थितिप्रलयनियमहेतुः किमिति प्रश्नसङ्क्षेपः॥ १॥

इदानीं कालादीनि ब्रह्मकारणत्वे प्रतिपक्षभूतानि विचारविषयत्वेन दर्शयति। कालस्वभाव इति॥ यो-

श्वे॰उ॰ योनिः पुरुष इति चिन्त्या । संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः॥२॥

---

श्वे॰भा॰ नियतिशब्दः सम्बध्यते। कालो योनिः कारणं स्यात्। कालो नाम सर्वभूतानां विपरिणामहेतुः स्वभावः। स्वभावो नाम पदार्थानां प्रति नियता शक्तिः अग्नेरौष्ण्यमिव। नियतिरविषमपुण्यपापलक्षणं कर्म तद्वा कारणं। यदृच्छा आकस्मिकी प्राप्तिः। भूतानि आकाशादीनि वा। योनिः पुरुषो वा विज्ञानात्मा योनिः। इति इत्युक्तप्रकारेण किं योनिरिति चिन्त्या चिन्त्यं निरूपणीयं। केचिद् योनिशब्दं प्रकृतिं वर्णयन्ति। तस्मिन् पक्षे किं कारणं ब्रह्मेति पूर्वेण। किं कारणं ब्रह्मेति कारणपदमत्राप्यनुसन्धेयं॥ तत्र कालादीनामकारणत्वं दर्शयति। संयोग एषामित्यादिना। अयमर्थः। किं कालादीनि प्रत्येकं कारणं उत तेषां समूहः। न च प्रत्येकं कालादीनां कारणत्वं सम्भवति। दृष्टविरुद्धत्वात्। देशकालनिमित्तानां संहतानामेव लोके कार्यकरत्वदर्शनात्। न चाप्येषां कालादीनां संयोगसमूहः कारणं। समूहस्य संहतेः परार्थत्वेन शेषिण आत्मनो विद्यमानत्वादस्वातन्त्र्यात् सृष्टिस्थितिप्रलयनियमलक्षणकार्यकारणत्वायोगात् आत्मा तर्हि कारणं स्यादेव। एतदत आह। आत्माप्यनीशः सुखदुःखहेतोः। आत्मा जीवोऽप्यनीशः स्व-

श्वे॰भा॰तयोर्न कारणं। अस्वातन्त्र्यादेव चात्मनोऽपि सृष्ट्यादिहेतुत्वं न सम्भवतीत्यर्थः। कथमनीशत्वं। सुखदुःखहेतोः सुखदुःखहेतुभूतस्य पुण्यापुण्यलक्षणस्य कर्मणो विद्यमानत्वात्। कर्मपरवशत्वेनास्वातन्त्र्याच्च। त्रैलोक्यसृष्टिस्थितिनियमे सामर्थ्यं न विद्यत एवेत्यर्थः। अथवा सुखदुःखादिहेतुभूतस्याध्यात्मिकादिभेदभिन्नस्य जगतोऽनीशो न कारणं॥ २॥

एवं पक्षान्तराणि निराकृत्य प्रमाणान्तरागोचरे वस्तुनि प्रकारान्तरमपश्यन्तो ध्यानयोगानुगमेन परममूलकारणं स्वयमेव प्रतिपेदिरे। ते ध्यानयोगेति॥ ध्यानं नाम चित्तैकाग्र्यं तदेव योगो युज्यतेऽनेनेति ध्यातव्याङ्गीकारोपायस्तमनुगताः समाहिता अपश्यन् दृष्टवन्तः॥ देवात्मशक्तिमिति। पूर्वोक्तमेव समुदायपरिहाराणां सूत्रं उत्तरत्र प्रत्येकं प्रपञ्चयिष्यते तत्रायं प्रश्नसङ्क्षेपः। किं ब्रह्म कारणं आहोस्वित् कालादितया। किं कार्यं ब्रह्म अहोस्वित् कार्यकारणविलक्षणं। अथवा कारणं वा अकारणञ्च। कारणत्वेऽपि किमुपादानमुत निमित्तं। अथोभयकारणं ब्रह्म किंलक्षणं अकारणं वा ब्रह्म किंलक्षणमिति। तत्रायं परिहारः। न कार्यं नाप्यकारणं न चोभयं नाप्युभयं न च

श्वे•उ•स्वगुणैर्निगूढां । यः कारणानि निखिलानि
तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥ ३ ॥

---

श्वे•भा•निमित्तं न चोपादानं न चोभयमेतदुक्तं भवति। अद्वि-
तीयस्य परमात्मनो न स्वतः कारणत्वमुपादानत्वं
निमित्तत्वञ्च। यदुपाधिकमस्य कारणत्वादि तदेव का-
रणनिमित्तमुपपाद्य तदेव प्रयोजकं निष्कृष्य दर्शयति।
देवात्मशक्तिमिति ॥ देवस्य द्योतनादियुक्तस्य मायिनो
महेश्वरस्य परमात्मन आत्मभूतामस्वतन्त्रां न साङ्ख्यप-
रिकल्पितप्रधानादिवत् पृथग्भूतां स्वतन्त्रां शक्तिं कार-
णमपश्यन्। दर्शयिष्यति च। मायान्तु प्रकृतिं विद्या-
न्मायिनन्तु महेश्वरमिति॥ तथा ब्राह्मे।

एषा चतुर्विंशतिभेदभिन्ना माया परा प्रकृतिस्तत् समुत्था।

तथा च। मयाध्यक्षेण प्रकृतिः सूयते सचराचरं।
इति स्वगुणैः प्रकृतिकार्य्यभूतैः पृथिव्यादिभिश्च निगूढां
संवृतां। कार्य्याकारेण कारणाकारस्याभिभूतत्वात्।
कार्य्यापृथक्स्वरूपेणोपलब्धुमयोग्यामित्यर्थः। तथा च
प्रकृतिकार्य्यत्वं गुणानां दर्शयति व्यासः।

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवा इति ॥ कोऽसौ
देवो यस्येयं विश्वजननी शक्तिरभ्युपगम्यत इत्यत्राह।
यः कारणानि निखिलानि तानि पूर्व्वोक्तानि काला-
त्मयुक्तानि कालात्मभ्यां युक्तानि कालपुरुषसंयुक्तानि

श्वे॰भा॰ स्वभावादीन् कालस्वभाव इति मन्त्रोक्तान्यधितिष्ठति नियमयति एकोऽद्वितीयः । योऽद्वितीयः परमात्मा तस्य शक्तिं कारणमपश्यन्निति वाक्यार्थः। अथवा देवात्मशक्तिं देवतात्मना ईश्वररूपेणावस्थितां शक्तिं । तथा च ।

सर्व्वभूतेषु सर्व्वात्मन् या शक्तिरपराभवा ।
गुणाश्रया नमस्तस्यै शाश्वतायै परेश्वर ॥
याऽतीताऽगोचरा वाचां मनसां चाविशेषणा ।
ज्ञानध्यानपरिच्छेद्या तां वन्दे देवतां परामिति ॥

प्रपञ्चयिष्यति स्वभावादिनामकारणत्वमज्ञानस्यैव कारणत्वं स्वभावमेके कवयो वदन्तीत्यादि । मायी सृजति विश्वमेतत् । एको रुद्रो न द्वितीयोऽवतस्थे। एको वर्णो बहुधा शक्तियोगादित्यादि। स्वगुणैरीश्वरगुणैः सर्व्वज्ञत्वादिभिर्वा सत्त्वादिभिर्निगूढां कार्य्यकारणविनिर्मुक्तपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानां॥ कोऽसौ देवः । यः कारणानीत्यादि पूर्व्ववत्। अथवा देवस्य परमेश्वरस्यात्मभूतां तु जगदुदयस्थितिलयहेतुभूतां ब्रह्मविष्णुशिवात्मिकां शक्तिमिति ॥ तथाचोक्तं ।

शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिका इति ।
ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय इति च ।

स्वगुणैः सत्त्वरजस्तमोभिः । सत्त्वेन विष्णु रजसा ब्रह्मा तमसा महेश्वरः सत्त्वाद्युपाधिसम्बन्धस्वरूपेण निरुपाधिकपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानाः पर-

 एव ब्रह्मणः सृष्ट्यादिकार्य्यं कुर्व्वन्तोऽवस्थाभेदमाश्रित्य शक्तिभेदव्यवहारा न पुनस्तत्त्वभेदमाश्रित्य। तथा चोक्तं।

सर्गस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकां।
स सञ्ज्ञां याति भगवानेक एव जनार्द्दनः॥

इति प्रथममीश्वरात्मना मायिरूपेणावतिष्ठते ब्रह्म। स पुनर्मूर्त्तिरूपेण त्रिधा व्यवतिष्ठते। तेन च रूपेण सृष्टिस्थितिनियमनादिकार्य्यं करोति। तथा च श्रुतिः परस्य शक्तिद्वारेण नियमनादिकार्य्यं दर्शयति। लोकानीशत ईशनीभिः प्रत्यङ्जनास्तिष्ठति सञ्चुकोप अन्तकाले संसृज्य विश्वा भूतानि गोपायति। ईशत ईशनीभिर्जननीभिः परमशक्तिभिरिति विशेषणात्॥

ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः।
विष्णुशक्तिः स्मृता प्रोक्ते स्मृतेः परमशक्तिभिः॥

इति परदेवतानां ग्रहणं। अथवा देवात्मशक्तिमिति देवस्य आत्मा च शक्तिश्च यस्य परस्य ब्रह्मणोऽवस्थाभेदास्तां प्रकृतिपुरुषेश्वराणां स्वरूपभूतां ब्रह्मरूपेणावस्थितां परात् परतरां शक्तिं कारणमपश्यन्निति। तथा च त्रयाणां स्वरूपभूतं प्रदर्शयिष्यति। भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्। त्रयं यदा विन्दते ब्रह्ममेतदिति। स्वगुणैर्ब्रह्मपरतन्त्रैः प्रकृत्यादिविशेषणैरुपाधिभिर्निगूढां। तथा च दर्शयिष्यति। एको देवः सर्व्वभूतेषु गूढ इति। तं दुर्दर्शं गूढमनुप्रवि-

श्वे॰भा॰६मिति श्रुतेः। यो वेद निहितं गुहायां। इहैव सन्तं न विजानन्ति देवा इति श्रुत्यन्तरं। यः कारणानीति पूर्व्ववत्। अथ वा देवात्मनो द्योतनात्मनः प्रकाशस्वरूपस्य ज्योतिषां ज्योतीरूपस्य प्रज्ञानघनस्वरूपस्य परमात्मनो जगदुदयस्थितिलयनियमनविषयां शक्तिं सामर्थ्यमपश्यन्निति स्वगुणैः स्वव्यष्टिभूतैः सर्व्वज्ञसर्व्वेशित्वादिभिर्निगूढां तत्तद्विशेषरूपेणावस्थितत्वात् स्वरूपेण शक्तिमात्रेणानुपलभ्यमानां। तथा च मानान्तरवेद्यां शक्तिं दर्शयिष्यति।

न तस्य कार्य्यं करणञ्च विद्यते
न तत् समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया चेति॥

समानमन्यत् कारणं देवात्मशक्तिमिति प्रश्ने परिहारे च ये ये पक्षभेदाः प्रदर्शितास्ते सर्व्वे सङ्गृहीताः। उभयत्र सर्व्वेषां प्रपञ्चनादप्रस्तुतस्य प्रपञ्चनायोगात् प्रश्नोत्तरदर्शनाच्च। समासव्यासधारणस्य च विदुषामिष्टत्वात्। तथा चोक्तं।

इष्टं हि विदुषां लोके समासव्यासधारणमिति। तथा च श्रुत्यन्तरे सकृच्छ्रुतस्य गोपामिति पदस्य व्याख्याभेदः श्रुत्यैव प्रदर्शितः। अपश्यं गोपामित्याह। प्राणा वै गोपा इति। अपश्यम् गोपामित्याह। अमैर

मै॰भा॰ वा आदित्यो गोपा इति। अथ कस्मादुच्यते ब्रह्मे-
त्यारभ्य हृदयद्गुहा यद्ब्रह्मेति तस्मादुच्यते परं ब्रह्मेति।
बहुच्छ्रुतस्य ब्रह्मपदस्य निमित्तोपादानरूपेणार्थभेदः
श्रुत्यैव दर्शितः। एवं तावत् देवात्मशक्तिं यः कार-
णानि निखिलानि कालात्मना युक्तान्यधितिष्ठत्येक
इति। एकस्याद्वितीयस्य परमात्मनः स्वरूपेण शक्ति-
रूपेण च निमित्तकारणोपादानकारणत्वं मायित्वेने-
श्वररूपत्वं देवतात्मत्वसर्व्वज्ञत्वादिरूपत्वं सत्यज्ञाना-
नन्दाद्वितीयरूपत्वञ्च समासेन श्रुत्यर्थाभ्यामभिहितं॥
इदानीं तमेव सर्व्वात्मानं दर्शयति कार्य्यकारणयो-
रनन्यत्वप्रतिपादनेन। वाचारम्भणं विकारो नामधेयं
मृत्तिकेत्येव सत्यमिति निदर्शनेनाद्वितीयापूर्व्वानपर-
नेतिनेत्यात्मकवाग्गोचरामनायासंस्पृष्टसत्यज्ञानमभे-
दमित्युदानन्दब्रह्मात्मत्वं प्रदर्शयितुमथा अपहत्यैव
प्रपञ्चं आत्मानमवस्था मानस्य परब्रह्मण ईश्वरात्मनः
सर्व्वज्ञत्वापहतपाप्मादिरूपेण देवतात्मना ब्रह्मादिरू-
पेण कार्य्यादिरूपेण वैश्वानरादिरूपेण च भोक्त्रापेक्षित-
भुक्त्यर्थं च यदि पितृलोककाम इति विशेष्यर्थार्थं सर्वं
वा नित्यं अक्षरं वा प्रयाति। साधर्म्येनाविशिष्टत्वेन
भावमेव मैव्यत्वं तथा इत्यादि देवतासायुज्यप्राप्त्यर्थं
वैश्वानरप्राप्त्यर्थोपासनार्थमशेषलौकिकवैदिककर्म-
प्रविद्यार्थश्च यदि कार्य्यकारणरूपेण स्वरूपेण चित्त-

श्वे॰उ॰ तमेकनेमिं त्रिवृतं षोडशान्तं
शतार्धारं विंशति प्रत्यराभिः ।

---

श्वे॰भा॰ दानन्दाद्वितीयब्रह्मात्मना च व्यवस्थितां स्यात् तदा भोग्यभोक्तृनियन्त्रभावे संसारमोक्षयोरभाव एव स्यात्। अधिकारिणोऽभावेन साधनभूतस्य प्रपञ्चस्याभावात् । तत् तदा दातृत्वेश्वरस्याभावात्। तथा संसारादिभूतमीश्वरं दर्शयति । संसारमोक्षस्थितिबन्धहेतुरिति ॥ तथा च संसारमोक्षयोरभाव एव स्यात् । तत्सिद्ध्यर्थं प्रपञ्चाध्यवस्थानं दर्शयति ।

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
स चेदविन्दद्दानन्दं न सत्यं नानृतं भवेत् ॥

सनत्सुजातेऽपि एकं पादं नोत्क्षिपति इत्यादि । तथा च श्रुतिः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति तच्च प्रथमेन मन्त्रेण ॥ ३ ॥

सर्व्वात्मानं ब्रह्मचक्रं दर्शयति द्वितीयेन नदीरूपेण । तमेकेति । य एकः कारणानि निखिलानि अधितिष्ठति तमेकनेमिं । योनिः कारणमारभ्य अव्याकृतमाकाशं परमव्योम माया प्रकृतिः शक्तिः तमोऽविद्या छाया अज्ञानं अनृतं अव्यक्तिमित्येवमादिशब्दैरभिधीयमाना एका कारणावस्था नेमिरिव नेमिः सर्व्वाधारो यस्याधिष्ठातुरद्वितीयस्य परमात्मनस्तमेकनेमिं।

श्वे॰उ॰ अष्टकैः षड्भिर्विश्वरूपैकपाशं
त्रिमार्गभेदं द्विनिमित्तैकमोहं ॥ ४ ॥

---

श्वे॰भा॰ त्रिवृतं त्रिभिः सत्त्वरजस्तमोभिः प्रकृतिगुणैर्वृतं। षोड-शको विकारः पञ्च भूतान्येकादशेन्द्रियाणि अन्तोऽव-सानं विस्तारसमाप्तिर्यस्यात्मनस्तं षोडशान्तं। अथवा प्रश्नोपनिषदि यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्या-रभ्य स प्राणमसृजत प्राणाच्छ्रद्धामित्यादिनाम्नाताः षोडशकला अवसानं यस्येति। अथवा एकनेमिमिति कारणभूताव्याकृतावस्थाऽभिहिता। तत्कार्य्यसमष्टि-भूतविराट्सूत्रद्वयं तद्व्यष्टिभूतभूरादिचतुर्दशभुवनानि अन्तोऽवसानं यस्य प्रपञ्चात्मना अवस्थितस्य तं षोड-शान्तं। शतार्द्धारं पञ्चाशत्प्रत्ययभेदविपर्य्ययाशक्ति-तुष्टिसिद्ध्याख्या अरा इव यस्य तं शतार्द्धारं। पञ्च विपर्य्ययभेदाः। तमो मोहो महामोहस्तामिस्रो ह्यन्ध-तामिस्र इति। अशक्तिरष्टाविंशतिः। तुष्टिर्नवधा। अष्टधा सिद्धिः। एते पञ्चाशत् प्रत्ययभेदाः। तत्र तमसो भेदो-ऽष्टविधः। अष्टसु प्रकृतिषु स्वात्मना आत्मप्रतिपत्ति-विषयभेदेनाष्टविधत्वं। प्रतिपत्तेर्मोहस्य चाष्टविधो भेदः। अणिमादिशक्तिर्मोहः। दशविधो महामोहः। दृष्टानुश्रविकशब्दादिविषयेषु पञ्चसु पञ्चस्वभिनिवेशो महामोहः। दृष्टानुश्रविकभेदेन तेषां दशविधत्वं।

स्वे°भा॰ तामिस्रोऽष्टादशविधः। दृष्टानुश्रविकेषु दशसु विषयेष्व-
ष्टविधैरैश्वर्य्यैः प्रयतमानस्य तदसिद्धौ यः क्रोधः स तामि-
स्रोऽभिधीयते। अन्धतामिस्रोऽप्यष्टादशविधः। अष्टवि-
धैश्वर्य्ये दशसु विषयेषु भोगयत्नेनोपस्थितेषु अर्द्धभुक्तेषु
मृत्युना म्रियमाणस्य यः शोको जायते महता क्लेशेनैते
प्राप्ता न चैते मयोपभुक्ताः। मत्यासन्नस्यायं मरणकाल
इति सोऽन्धतामिस्र इत्युच्यते। विपर्य्ययभेदा व्याख्याताः।
अशक्तिरष्टाविंशतिधोच्यते। एकादशेन्द्रियाणां वधाः
मूकत्वबधिरत्वान्धत्वप्रमत्ततयो वाह्याः। अन्तःकरणस्य
पुरुषार्थयोग्यता तुष्टीनां विपर्य्ययेणाष्टधा अशक्तिः। तुष्टि-
र्नवधा। प्रकृत्युपादानकालभाग्याख्याश्चतस्रः। विषयो-
परमाः पञ्च। कश्चित् प्रकृतिपरिज्ञानात् कृतार्थोऽस्मी-
ति मन्यते स पुनः पारिव्राज्यलिङ्गं गृहीत्वा कृतार्थो-
ऽस्मीति मन्यते। अपरः पुनः प्रकृतिपरिज्ञानेन किं आश्र-
माद्युपादानेन वा किं बहुना कालेनावश्यं मुक्तिर्भवति
इति मत्वा परितुष्यति। कश्चित् पुनर्मन्यते विना भा-
ग्येन न किञ्चिदपि प्राप्यते। यदि ममास्ति ततो भव-
ष्येवाऽत्रैव मोक्ष इति परितुष्यति। विषयाणामार्जनमश-
क्यमिति उपारम्य तुष्यति। शक्यते द्रष्टुमार्जितुमर्जितस्य
रक्षणमशक्यमिति उपारम्य परि तुष्यति। सातिशयत्वा-
दिदोषदर्शनेनोपारम्यापरस्तुष्यति। विषयाः सुतरामे-
वाभिलाषं जनयन्ति न च तद्भोगाभ्यासे तृप्तिरुपजायते।

श्लो॰भा॰ न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धत इति ॥
तस्मादलमनेन पुनःपुनरसन्तोषकारणेनोपभोगेनेति ।
एवं सङ्गदोषदर्शनादुपारम्य कश्चित् तुष्यति । नानुपहत्य
भूतान्युपभोगाः सम्भवन्ति । भूतोपघातभोगाच्चाधर्मः ।
अधर्मान्नरकादिप्राप्तिरिति हिंसादोषदर्शनात् कश्चिदु-
पारम्य तुष्यति । प्रकृत्युपादानकालभाग्याख्याश्चतस्रः । विष-
याणामार्जनरक्षणक्षयभोगहिंसादोषात् पञ्च तुष्टय
इति नव तुष्टयो व्याख्याताः । सिद्धयो ऽभिधीयन्ते ।
ऊहः शब्दोऽध्ययनमिति । तिस्रः सिद्धयः । दुःखविघाता-
स्तिस्रः । सुहृत्प्राप्तिर्दानमिति सिद्धिद्वयं । ऊहस्तत्त्वं जि-
ज्ञासमानस्य । उपदेशमन्तरेण जन्मान्तरसंस्कारवशात्
प्रकृत्यादिविषये ज्ञानमुत्पद्यते सेयमूहो नाम प्रथमा
सिद्धिः । शब्दागमाभ्यासमन्तरेण श्रवणमात्राद् यज्ज्ञा-
नमुत्पद्यते सा द्वितीया सिद्धिः । अध्ययनं नाम शास्त्रा-
भ्यासाद् यज्ज्ञानमुत्पद्यते सा तृतीया सिद्धिः । आ-
ध्यात्मिकस्याऽऽधिभौतिकस्याऽऽधिदैविकस्य त्रिविधदुः-
खस्य व्युदासात् शीतोष्णादिजन्यदुःखसहिष्णोस्तिति-
क्षोर्यज्ज्ञानमुत्पद्यते तस्याऽऽध्यात्मिकादिभेदात् सिद्धे-
स्त्रैविध्यं । सुहृदं प्राप्य या सिद्धिर्ज्ञानस्य सा सुहृत्-
प्राप्तिर्नाम सिद्धिः । आचार्यहितवस्तुप्रदाने या सिद्धि-
र्विद्यायाः सा दानं नाम सिद्धिः । एवमष्टविधा सिद्धि-

श्वे॰भा॰ व्याख्याता। एवं विपर्य्यया शक्तिः। तुष्टिसिद्ध्याख्याः पञ्चा-शत्प्रत्ययभेदा व्याख्याताः। एवं ब्रह्मपुराणे कल्पो-पनिषद्व्याख्यानप्रदेशे षष्टितमाध्याये पञ्चाशत् प्रत्यय-भेदाः प्रतिपादिताः। अथवा पञ्चाशच्छक्तिरूपिण इति यस्य या शक्तयः पुराणे स्वरूपलेशाभिमताः पञ्चाश-च्छक्तय अरा इव यस्य तं शताङ्करं। विंशतिप्रत्यरा दशेन्द्रियाणि तेषाञ्च विषया शब्दस्पर्शरूपरसगन्धवच-नादानविहरणोत्सर्गानन्दाः। पूर्व्वोक्तानामराणां प्रत्यरा ये प्रतिविधीयन्ते कीलका अराणां दार्ढ्याय ते प्रत्यरा उच्यन्ते। तैः प्रत्यरैर्युक्तं अष्टकैः षड्भिर्युक्तमिति योज-नीयं॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥

इति प्रकृत्यष्टकं॥ त्वक्चर्म्ममांसरुधिरमेदोऽस्थिमज्जा-शुक्राणि धात्वष्टकं। अणिमाद्यैश्वर्य्याष्टकं। धर्म्मज्ञान-वैराग्यैश्वर्य्याधर्म्माज्ञानावैराग्यानैश्वर्य्याख्या भावाष्टकं। ब्रह्मप्रजापतिदेवगन्धर्व्वयक्षराक्षसपितृपिशाचा देवा-ष्टकं। अष्टावात्मगुणा ज्ञेयाः। दया सर्व्वभूतेषु क्षान्तिर-नसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति गुणा-ष्टकं षष्ठं। एतैः षड्भिर्युक्तं विश्वरूपैकपाशं स्वर्गपुत्रा-न्नाद्यादिविषयभेदात्। विश्वरूपं विश्वरूपो नानारूपः॥ एकः काम्याख्यः पाशोऽस्येति विश्वरूपैकपाशः। धर्म्माध-र्म्मज्ञानमार्गभेदा अस्येति त्रिमार्गभेदं। द्वयोः पुण्यपाप-

श्वे॰उ॰ पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां
पञ्चप्राणोर्म्मिं पञ्चबुद्ध्यादिमूलां ।
पञ्चावर्त्तां पञ्चदुःखौघवेगां
पञ्चाशद्भेदां पञ्चपर्व्वामधीमः ॥ ५ ॥

---

श्वे॰भा॰ योर्निमित्तैकमोहो देहेन्द्रियमनोबुद्धिजात्यादिष्वना-त्मस्वात्माभिमानोऽस्मीति द्विनिमित्तैकमोहं । अपश्य-न्निति क्रियापदमनुवर्त्तते । अधीम इत्युत्तरमन्त्रस्थितं वा क्रियापदं ॥ ४ ॥

पूर्व्वं चक्ररूपेण दर्शितमिदानीं नदीरूपेण दर्शयति । पञ्चस्रोत इति । पञ्च स्रोतांसि चक्षुरादीनि ज्ञानेन्द्रियाणि अम्बुस्थानानि यस्यास्तां नदीं पञ्चस्रोतोऽम्बुं । अधीम इति सर्व्वत्र सम्बध्यते । पञ्चयोनिभिः कारणभूतैः पञ्चभूतैरुग्रां वक्राञ्च पञ्चयोन्युग्रवक्रां । कर्म्मेन्द्रियाणि वागाद्यो वा ऊर्म्मयो यस्यास्तां । पञ्चबुद्धीनां चक्षुरादिजन्यानामाद्यमादिकारणं मनः । मनोवृत्तिरूपत्वात् सर्व्वज्ञानानां मनो मूलं कारणं यस्याः संसारसरितस्तां ॥ तथा च मनसः सर्व्वहेतुत्वं दर्शयति ।

मनोविजृम्भितं सर्व्वं यत्किञ्चित् सचराचरं ।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यत इति ॥

पञ्चशब्दादयो विषया आवर्त्तस्थानीयास्तेषु विषयेषु प्राणिनो निमज्जन्तीति यस्यास्तां पञ्चावर्त्तां । गर्भ-

श्वे॰उ॰ सर्वाजीवे सर्वसंस्थे बृहन्ते
अस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।
पृथगात्मानं प्रेरितारञ्च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥

---

श्वे॰भा॰ दुःखजन्मदुःखजरादुःखव्याधिदुःखमरणदुःखानि यस्यास्तां पञ्चदुःखौघवेगां । अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशभेदाः पञ्चपर्व्वाण्यस्यास्तां इति । एवं तावन्नदीरूपेण महाचक्ररूपेण च कार्य्यकारणात्मकं ब्रह्म समयस्तमिहाभिहितं ॥ ५ ॥

इदानीमस्मिन् कार्य्यकारणात्मकब्रह्मचक्रे केन वा संसरति केन वा मुच्यत इति संसारमोक्षहेतुप्रदर्शनायाह । सर्व्वाजीवेति ॥ सर्व्वेषामाजीवनमस्मिन्निति सर्व्वाजीवे । सर्व्वेषां संस्था समाप्तिः प्रलयो यस्मिन्निति सर्व्वसंस्थे । बृहन्तेऽस्मिन् हंसो जीवः । हन्ति गच्छत्यध्वानमिति हंसः । भ्राम्यते अनात्मभूतदेहादिमात्मानं मन्यमानः सुरनरतिर्य्यगादिभेदभिन्ननानायोनिषु । एवं भ्राम्यमाणः परिवर्त्तत इत्यर्थः । केन हेतुना नानायोनिषु प्रवर्त्तत इति तत्राह । पृथगात्मानं प्रेरितारञ्च मत्वेति । आत्मानं जीवात्मानं प्रेरितारञ्चेश्वरं पृथग्भेदेन मत्वा ज्ञात्वा अन्योऽसावन्योऽहमस्मीति जीवेश्वरभेददर्शनेन संसारे परिवर्त्तत इत्यर्थः । केन मुच्यत

श्वे॰उ॰ उद्गीतमेतत् परमन्तु ब्रह्म

श्वे॰भा॰ इत्याह । जुष्टः सेवितस्तेन ईश्वरेण चित्सदानन्दा-
द्वितीयब्रह्मात्मनाहं ब्रह्मास्मीति समाधानं कृत्वेत्यर्थः ।
तेनेश्वरमेवंभावादमृतत्वमेति । यस्तु पूर्णानन्दब्रह्मरूपे-
णात्मानमवगच्छति स मुच्यते । यस्तु परमात्मनो
ऽन्यमात्मानं जानाति स बध्यत इति । तथा च
बृहदारण्यके भेददर्शनस्य संसारहेतुत्वं प्रदर्शितं । य
एवं वेदाहं ब्रह्मास्मीति स इदं सर्व्वं भवतीति । तस्य
ह न देवाश्च नाभूत्या ईशते । आत्मा ह्येषां स भवति ।
अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न
स वेद यथा पशुरेवं स देवानामिति ॥

तथा च श्रीविष्णुधर्म्मे ।

पश्यत्यात्मानमन्यन्तु यावद्वै परमात्मनः ।
तावत् स भ्राम्यते जन्तुर्मोहितो निजकर्म्मणा ॥
सङ्क्षीणाशेषकर्म्मा तु परं ब्रह्म प्रपश्यति ।
अभेदेनात्मनः शुद्धं शुद्धत्वादक्षयो भवेत् ॥ ६ ॥

ननु तमेकयोनिमित्यादिना सप्रपञ्चं ब्रह्म प्रति-
पादितं। तथा च सत्यहं ब्रह्मास्मीति ब्रह्मात्मप्रतिपत्ता-
वपि सप्रपञ्चस्यैव ब्रह्मण आत्मत्वेनावगमात्त्वं यथा य-
थोपासते तदेव भवतीति सप्रपञ्चब्रह्मप्राप्तिरेव स्यात् ।
ततश्च प्रपञ्चस्यापरित्यागान्न मोक्षसिद्धिः । ततश्च जुष्ट-
स्ततस्तेनामृतत्वमेतीति मोक्षोपदेशोऽनुपपन्न एवेत्याश-

श्वे॰उ॰ तस्मिंस्त्रयं सुप्रतिष्ठाऽक्षरञ्च ।

---

श्वे॰भा॰ क्वाह ॥ उद्गीतमिति ॥ सप्रपञ्चं ब्रह्म यदि स्यात्ततो भव-
त्येव मोक्षाभावः । न त्वेतदस्ति । कस्मात् । यत उद्गीतं गी-
तमुपदिष्टं कार्य्यकारणलक्षणात् प्रपञ्चाद्देदान्तैः । अन्यदेव
तद्विदितादथो अविदितादधि । तदेव ब्रह्म त्वं विद्धि नेदं
यदिदमुपासते । अस्थूलमशब्दमस्पर्शं स एष नेति नेतीति ।
ततो यदुत्तरं । अन्यत्र धर्मात् । न सन्न चासच्छिव एव
केवलः । तमसः परः । यतो वाचो निवर्त्तन्ते । यत्र
नान्यत् पश्यति नान्यद्विजानाति । स भूमा । योऽशनाया-
पिपासे शोकं मोहं जरामत्येति । अप्राणो ह्यमनाः
परतः परः । एकमेवाऽद्वितीयं । वाचारम्भणं विकारो
नामधेयं । नेह नानास्ति किञ्चन । एकधैवानुद्रष्टव्यं ।
इत्येवमादिषु प्रपञ्चास्पृष्टमेव ब्रह्मावगम्यत इत्यर्थः ।
यत एवं प्रपञ्चधर्मरहितं ब्रह्म अत एव परमन्तु ब्रह्म ।
तु शब्दोऽवधारणे । परममेव उत्कृष्टमेव । संसारधर्मा-
नास्कन्दितत्वात् । उद्गीतत्वेन ब्रह्मण उत्कृष्टत्वात् । तं
यथा यथोपासत इति न्यायेन उत्कृष्टब्रह्मोपासनात्
उत्कृष्टमेव फलं मोक्षाख्यं भवत्येवेत्यभिप्रायः ॥ नन्वेवं
तर्हि ब्रह्मणः प्रपञ्चसंस्पृष्टत्वे प्रपञ्चस्यापि ब्रह्मसंसर्गात्
सांख्यवाद इव प्रपञ्चस्यापि पृथक् सिद्धत्वेन स्वतन्त्रत्वा-
द्वाचारम्भणं विकारो नामधेयमिति पारतन्त्र्याभ्युप-

मू॰उ॰ अत्रान्तरं ब्रह्मविदो विदित्वा

भा॰ गमेन मिथ्यात्वोपदेशपूर्व्वकमद्वितीयब्रह्मात्मत्वेनोपदेशोऽनुपपन्नश्चेत्याशङ्क्याह । तस्मिंस्त्रयमिति ॥ यद्यपि ब्रह्म प्रपञ्चासंस्पृष्टं स्वतन्त्रञ्च तथापि प्रपञ्चो न स्वतन्त्रः। अपि तु तस्मिन्नेव ब्रह्मणि त्रयं प्रतिष्ठितं भोक्ता भोग्यं प्रेरितारमिति । वक्ष्यमाणं भोग्यभोक्तृनियन्तृलक्षणं । अजा ह्येका भोक्तृभोग्यार्थप्रयुक्तेति । वक्ष्यमाणं भोक्तृभोग्यरूपं चान्यदेदश्रुतिसिद्धं विराट्सूत्राभ्यां सतनामरूपकर्म्मविश्वतैजसप्राज्ञजाग्रत्स्वप्नसुषुप्तिरूपस्वरूपं प्रतिष्ठितं रज्ज्वामिव सर्पः । य एतस्मिन् सर्व्वं भोक्तादिलक्षणं प्रपञ्चरूपं प्रतिष्ठितं । अत एवास्य भोक्तादित्रयात्मकस्य प्रपञ्चस्य ब्रह्म सुप्रतिष्ठा शोभनप्रतिष्ठा । ब्रह्मणोऽन्यस्य चलमात्मकत्वात् । चलप्रतिष्ठाऽन्यच । ब्रह्मणोऽचलत्वादचाचलप्रतिष्ठा । नन्वेवं तर्हि विकारभूतप्रपञ्चाश्रयत्वेन परिणामित्वाद्दध्यादिवदनित्यं स्यादित्याशङ्क्याह । अक्षरञ्चेति ॥ यद्यपि विकारः प्रपञ्चाश्रयस्तथापि अक्षरं न क्षरतीत्यक्षरं । चशब्दोऽवधारणे । अविनाश्येव ब्रह्म । मायात्मकत्वाद्विकारस्य । विकाराश्रयत्वेऽप्यविनाश्येव कूटस्थं ब्रह्मावतिष्ठत इत्यभिप्रायः । मायात्मकत्वस्य प्रपञ्चस्य पूर्व्वमेव प्रपञ्चितं । तस्मात् सर्व्वात्मकत्वेऽपि ब्रह्मणः प्रपञ्चस्य मिथ्यात्मकत्वेन

श्वे॰उ॰ लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७ ॥

---

श्वे॰भा॰ब्रह्मणः प्रपञ्चासंसर्गात् पूर्णानन्दब्रह्मात्मानं पश्यतो मोक्षाख्यः परमपुरुषार्थो भवतीत्यर्थः। कथं तर्ह्यात्मानं पश्यतां मोक्षसिद्धिरित्यत आह। अत्रास्मिन्नन्नमयाद्यानन्दमयान्ते देहविराडाद्यव्याकृतान्ते वा प्रपञ्चे पूर्व्वपूर्व्वोपाधिप्रविलयेनोत्तरोत्तरमध्यशनायाद्यसंस्पृष्टं वाङ्मनसागोचरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि विश्वाद्युपसंहारमुखेन लयं गता अहं ब्रह्मास्मीति ब्रह्मरूपेणैव स्थिता इत्यर्थः। तत्पराः समाधिपराः। किं कुर्व्वन्ति योनिमुक्ता भवन्ति। गर्भजन्मजरामरणसंसारभयात्मुक्ता भवन्तीत्यर्थः॥ तथा च योगियाज्ञवल्क्यो ब्रह्मात्मनैवावस्थानं समाधिं दर्शयति।

यदर्थमिदमद्वैतमरूपं सर्व्वकारणं
आनन्दममृतं नित्यं सर्व्वभूतेष्ववस्थितं॥
तदेव मान्यधीः प्राप्य परमात्मानमात्मना।
तस्मिन् प्रलीयते त्वात्मा समाधिः स उदाहृतः॥
इन्द्रियाणि वशीकृत्य यमादिगुणसंयुतः।
आत्ममध्ये मनः कुर्य्यादात्मानं परमात्मनि॥
परमात्मा स्वयं भूत्वा न किञ्चिच्चिन्तयेत्ततः।
तदा तु लीयते तस्मिन् प्रत्यगात्मन्यखण्डिते॥
प्रत्यगात्मा स एव स्यादित्युक्तं ब्रह्मवादिभिरिति।

श्वे॰उ॰ संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते

श्वे॰भा॰ ननु द्वितीये परमात्मन्यभ्युपगम्यमाने जीवेश्वरयोरपि विभागाभावात् लीना ब्रह्मणि जीवानां ब्रह्मैकलपरत्वश्रुतिरनुपपन्नैवेत्याशङ्क्य व्यवहारव्यवस्थायां जीवेश्वरयोरुपाधितो विभागं दर्शयित्वा तद्विज्ञानादमृतत्वं दर्शयति। संयुक्तमेतदिति॥ व्यक्तं विकारजातं अव्यक्तं कारणं तदुभयं क्षरमक्षरञ्च। व्यक्तं क्षरं विनाशि अव्यक्तमक्षरमविनाशि तदुभयं परस्परसंयुक्तं कार्यकारणात्मकं विश्वं भरते बिभर्त्ति ईशः ईश्वरः॥ तथाचाह भगवान्।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥
यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वर इति।

न केवलमीश्वरो व्यक्ताव्यक्तं भरते अनीशश्चानीश्वरश्च। स आत्मा अविद्यातत्कार्यभूतदेहेन्द्रियादिभिर्बध्यते भोक्तृभावात्। एतदुक्तं भवति। परस्परसंसक्तव्यष्टिसमष्टिरूपरीश्वरः। तद्व्यष्टिभूतदेहेन्द्रियात्मको ऽनीशो जीवः। एवं समष्टिव्यष्ट्यात्मकत्वेन जीवपरयोरौपाधिकस्य भेदस्य विद्यमानत्वात्तदुपाध्युपासनद्वारेण निरुपाधिकमीश्वरं ज्ञात्वा मुच्यत इति भोक्त्रात्मैकत्ववादेनानुपपन्नं किञ्चिदिष्यत इति॥ तथाचौपाधिकमेव भेदं दर्शयति भगवान् याज्ञवल्क्यः।

श्वे॰उ॰ विश्वमीशः । अनीशश्चात्मा बुध्यते भोक्तृभा-
वाज्ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥ ८ ॥

शं॰भा॰ आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैको ह्यनेकश्च जलधारेष्विवांशुमान् ॥

तथा च श्रीविष्णुधर्म्मे ॥

परात्मनो मनुष्येन्द्र विभागो हि न कल्पितः ।
क्षये तस्यात्मपरयोर्व्विभागाभाव एव हि ॥
आत्मा क्षेत्रज्ञसंज्ञोऽयं संयुक्तः प्राकृतैर्गुणैः ।
तैरेव विगतः शुद्धः परमात्मा निगद्यते ॥
अनादिसम्बन्धवत्या क्षेत्रज्ञोऽयमविद्यया ।
युक्तः पश्यति भेदेन ब्रह्म लात्मनि संस्थितं ॥

तथा च श्रीविष्णुपुराणे ॥

विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

तथा च वाशिष्ठे योगशास्त्रे प्रश्नपूर्व्वकं दर्शितं ॥

यद्यात्मा निर्गुणः शुद्धः सदानन्दोऽजरोऽमरः ।
संसृतिः कस्य तात स्यात् मोक्षो वाऽविद्यया विभो ॥
क्षेत्रनाशे कथं तस्य ज्ञायते भगवान् यतः ।
यथावत् सर्व्वमेतं मे वक्तुमर्हसि साम्प्रतं ॥

वशिष्ठः ॥

तस्यैव नित्यशुद्धस्य सदानन्दमयात्मनः ।
अवच्छिन्नस्य जीवस्य संसृतिः कीर्त्त्यते बुधैः ॥

श्वे॰भा॰ एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
भ्रान्त्या रूढः स एवात्मा जीवसञ्ज्ञः सदा भवेत् ॥

तथा च ब्राह्मे पुराणे परस्यैवौपाधिकं जीवादिभेदं दर्शयति ॥

कथं तर्ह्यौपाधिकभेदेन बन्धमुक्त्यादिव्यवस्थेत्याशङ्क्य दृष्टान्तपूर्व्वकं व्यवस्थां दर्शयति ।
एकस्तु सूर्य्यो बहुधा जलाधारेषु दृश्यते ।
आभाति परमात्मा च सर्व्वोपाधिषु संस्थितः ॥
ब्रह्म सर्व्वशरीरेषु बाह्ये चाभ्यन्तरे स्थितं ।
आकाशमिव भूतेषु बुद्धावात्मा न चान्यथा ॥
एवं सति यथा बुद्ध्या देहोऽहमिति मन्यते ।
अनात्मन्यात्मता भ्रान्त्या सा स्यात् संसारबन्धिनी॥
सर्व्वैर्व्विकल्पैर्हीनस्तु शुद्धो बुद्धोऽजरोऽमरः ।
प्रशान्तो व्योमवद्व्यापी चैतन्यात्मा सकृत्प्रभः ॥
धूमाभ्रधूलिभिर्व्योम यथा न मलिनीयते ।
प्राकृतैरपरामृष्टो विकारैः पुरुषस्तथा ॥
यथैकस्मिन् घटाकाशे जलैर्धूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित् ॥
यथा द्वन्द्वैरनेकैस्तु जीवे च मलिनीकृते ।
एतस्मिन्नापरे जीवा मलिनाः सन्ति कुत्रचित् ॥

तथा च शुकशिष्यो गौडपादाचार्य्यः ॥

**श्वे॰ उ॰** ज्ञाज्ञौ द्वावजावीशनीशा-
वजा ह्येका भोक्तृभोग्यार्थयुक्ता ।

---

**श्वे॰भा॰** यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते।
न सर्व्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिरिति ॥

तस्मादद्वितीये परमात्मन्युपाधितो जीवेश्वरयोर्जीवानाञ्च भेदव्यवस्थायाः सिद्धत्वाच्च विशुद्धसत्त्वोपाधेरीश्वरस्याविशुद्धोपाधिजीवगताः सुखदुःखमोहाज्ञानादयः ॥ तथा च भगवान् पराशरः ॥

ज्ञानात्मकस्याऽमलसत्त्वराशेरपेतदोषस्य सदा स्फुटस्य।
किं वा जगत्यत्र समस्तपुंसामज्ञातमस्यास्ति हृदि
स्थितस्येति ॥

नापि जीवान्तरगतसुखदुःखमोहादिना जीवान्तरस्य बद्धस्य मुक्तस्य वा सम्बन्धः । उपाधितो व्यवस्थायाः सम्भवात् । अत एकमुक्तौ सर्व्वमुक्तिरिति भवदुक्तस्य चोद्यस्यानवकाशः ॥ ८ ॥

किञ्चेदमपरं वैलक्षण्यमित्याह । ज्ञाज्ञौ द्वाविति ॥ न केवलं ध्याताध्येयं भवति ईशो ह्यनीशः सन् बध्यते जीवोऽपि तु । ज्ञाज्ञौ ज्ञ ईश्वरः । अज्ञो जीवः । तौ । अजौ जातादिरहितौ । ब्रह्मण एवाविकृतस्य जीवेश्वरात्मनाऽवस्थानात् । तथा च श्रुतिः ।

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति ॥

श्वे॰उ॰ अनन्तश्चात्मा विश्वरूपो ह्यकर्ता
त्रयं यदा विन्दते ब्रह्ममेतत् ॥ ९ ॥

---

श्वे॰भा॰ एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्चेति च ॥ ईशानीशौ छान्दसं ह्रस्वत्वं ॥ नन्वद्वैतवादिनो यदि भोक्तृभोग्यलक्षणप्रपञ्चसिद्धिः स्यात् तदा सर्वेशः परमेश्वरः। अनीशो जीवः। सर्वज्ञः परमेश्वरः। असर्वशक्तिर्जीवः। सर्वकृत् परमेश्वरः। देहादिविभक्तो जीवः। सर्वात्मा परमेश्वरः। असर्वात्मा जीवः। विश्वैश्वर्यं आप्तकामः परमेश्वरः। अल्पैश्वर्योऽनाप्तकामो जीवः। सर्वतः पाणिः चक्षुरादीनां नित्योऽनित्यानामित्यादिना जीवेश्वरयोर्भेदलक्षणव्यवहारसिद्धिः स्यात्। न तद्भोक्त्रादिप्रपञ्चसिद्धिरस्ति। स्वतः कूटस्थापरिणाम्यद्वितीयस्य वस्तुनो भोक्त्रादिरूपत्वाभावात्। नापि परतो ब्रह्मव्यतिरिक्तस्य भोक्त्रादिप्रपञ्चहेतुभूतस्य वस्त्वन्तरस्याभावात्। वस्त्वन्तरसद्भावे चाद्वैतहानिरित्यत आह। अजा ह्येका भोक्तृभोग्यार्थयुक्तेति॥ भवेदयमीश्वराद्यविभागः। यदि प्रपञ्चासिद्धिरेव स्यात् सिद्धस्त्वेवं प्रपञ्चः। हि यस्मादर्थे। यस्मादजा प्रकृतिर्न जायत इत्यादिना सिद्धा प्रसवधर्मिणी। अजामेकां। मायां तु प्रकृतिं विद्यात्। इन्द्रो मायाभिः पुरुरूप ईयते। माया परा प्रकृतिः। सम्भवाम्यात्ममायया। इत्यादिश्रुतिस्मृतिसिद्धा विश्वजननी देवात्मशक्तिरूपैका स्वविकारभूतभोक्तृभोगभोग्या-

श्वे·भा·र्थंप्रयुक्ता ईश्वरनिकटवर्त्तिनी किंकुर्व्वाणाऽवतिष्ठते । तस्मात् सोऽपि मायी परमेश्वरो मायोपाधिसन्निधेस्तद्वानिव कार्य्यभूतैर्दैवादिभिस्तद्‌देव विभक्तएवाऽविभक्त ईश्वरादिरूपेणावतिष्ठते । तस्मादेकस्मिन्नेकरसे परमेऽभ्युपगम्यमानेऽपि जीवेश्वरादिसर्व्वलौकिकवैदिकसर्व्वभेदव्यवहारसिद्धिः । ततस्तयोर्वस्त्वन्तरस्य सद्भावाद् द्वैतवादिप्रसक्तिः । मायाया अनिर्वाच्यत्वेन वस्तुत्वायोगात् । तथाह ।

एषा हि भगवन्माया सदसद्व्यक्तिवर्जितेति ॥

यस्मादजैव भोक्त्रादिरूपा तस्मात् तत्स्वीकृतस्य मिथ्यासिद्धवस्तुत्वं । तद्भावात् । अनन्तश्चात्मा । चशब्दोऽवधारणे । अनन्त एवात्मा । अस्यान्तःपरिच्छेदो देशतः कालतो वस्तुतोऽपि न विद्यत इति । विश्वरूपो विश्वमस्यैव रूपमिति । परस्याविश्वरूपत्वात् । वाचारम्भणं विकारो नामधेयमिति । रूपस्य रूपिव्यतिरेकेणाभावात् विश्वरूपत्वादप्यानन्त्यं सिद्धमित्यर्थः । हिशब्दो यस्मादर्थे । यस्माद्विश्वरूपवैरूप्यलक्षणः परमात्मा इत्येवमादिभिरात्मनो विश्वरूपत्वमित्यर्थः । यत एवानन्तो विश्वरूप आत्मा अत एव अकर्त्ता । कर्त्तृत्वादिसंसारधर्मरहित इत्यर्थः ॥ कदैवमनन्तो विश्वरूपः कर्त्तृत्वादिसकलसंसारधर्मवर्जितो मुक्तः पूर्णानन्दाद्वितीयब्रह्मरूपेणैवावतिष्ठत इत्यत आह । त्रयं यदा विन्दते ब्रह्ममेतदिति । त्रयं भोक्तृभोगभोग्यरूपं । माया-

श्वे॰उ॰ क्षरं प्रधानममृताक्षरं हरः
क्षरात्मनावीशते देव एकः ।
तस्याभिधानाद्योजनात् तत्त्वभावाद्
भूयश्चान्ते विश्वमायानिवृत्तिः ॥ १० ॥

---

श्वे॰भा॰ त्मकत्वादधिष्ठानभूतव्यतिरेकेण निरस्तनिखिलविकल्प-
पूर्णानन्दाद्वितीयब्रह्मभाक् कर्तृत्वादिसकलसंसारधर्म-
वर्जितो वीतशोकः कृतकृत्योऽवतिष्ठत इत्यर्थः । अथवा
मायामायात्मकजीवेश्वरप्रकृतिरूपत्रयं ब्रह्म यदा विन्दते
लभते तदा मुच्यत इति। ब्रह्ममिति मकारान्तं। ब्रह्ममेतु
मां मधुमेतु मां ॥ मामिति छान्दसं ॥ जीवेश्वरयोर्वि-
भागं दर्शयित्वा तद्विज्ञानादमृतत्वं दर्शितं भवति ॥९॥

इदानीं प्रधानेश्वरयोर्वैलक्षण्यं दर्शयित्वा तद्विज्ञानाद-
मृतत्वं दर्शयति। क्षरं प्रधानममृताक्षरं हर इति॥ अवि-
द्यादेर्हरणात् परमेश्वरो हरः। अमृतञ्च तदक्षरं चाऽमृ-
ताक्षरममृतं ब्रह्मैव ईश्वर इत्यर्थः । स ईश्वरः क्षरात्मानौ
प्रधानपुरुषौ ईशते ईष्टे देव एकश्चित्सदानन्दोऽद्वितीयः
परमात्मा। तस्य परमात्मनोऽभिध्यानात् । कथं। योजना-
त्। विश्वानां परमात्मसंयोजनात् ।तत्त्वभावादहं ब्रह्मा-
स्मीति भूयश्चासकृत् । यदा स्वात्मार्थज्ञाननिष्पत्तिरन्त-
स्मिन् वाऽर्थज्ञानोदयवेलायां वा विश्वमायानिवृत्तिः।
सुखदुःखमोहात्मकाशेषप्रपञ्चरूपमायानिवृत्तिः ॥१०॥

श्वे॰उ॰ ज्ञात्वा देवं सर्व्वपाशापहानिः

---

श्वे॰भा॰ इदानीं तद्विद्याद्दिति ध्यानात् स्वात्मज्ञानध्यानकृतं फलभेदं दर्शयति ज्ञात्वा देवमयमहमस्मीति। सर्व्वपाशापहानिः। पाशरूपाणां सर्व्वेषामविद्यादीनामपहानिः। क्षीणैरविद्यादिभिः क्लेशैस्तत्कार्य्यभूतजन्ममृत्युप्रहाणिः। जननमरणादिदुःखहेतुविनाशफलं प्रदर्शितं। ध्याने किञ्चित् क्रममुक्तिरूपं विशेषमाह। तस्य परमेश्वरस्याभिध्यानाद् देहभेदे शरीरभेदोपायोत्तरकालमर्च्चिरादिना देवयानपथा गत्वा परमेश्वरसायुज्यं गतस्य तृतीयं विराड्रूपापेक्षया अव्याकृतपरमव्योमकारणेश्वरावस्थं विश्वैश्वर्य्यलक्षणं भवति। स तत्रैव निर्व्विशेषमात्मानं ज्ञात्वा केवलो निरस्तसमस्तैश्वर्य्यं तदुपाधिसिद्धिरव्याकृतपरमव्योमकारणेश्वरात्मकतृतीयावस्थं विश्वैश्वर्य्यं हित्वा आप्तकाम आत्मकामः पूर्णानन्दाद्वितीयब्रह्मरूपोऽवतिष्ठते॥ एतदुक्तम्भवति। सम्यग्दर्शनस्य तथाभूतवस्तुविषयत्वेन निर्व्विषयपूर्णानन्दाद्वितीयब्रह्मविषयत्वाद्विज्ञानानन्तरमविद्यातत्कार्य्यप्रहाणेन पूर्णानन्दाद्वितीयब्रह्मस्वरूपोऽवतिष्ठते। ध्यानस्य पुनः सहसा न निराकारे बुद्धिः प्रवर्त्तत इति। सविशेषब्रह्मविषयत्वात्। तं यथा यथोपासत इति न्यायेन सविशेषविश्वैश्वर्य्यलक्षणब्रह्मप्राप्त्या विश्वैश्वर्य्यमनुभूय निर्व्विशेषपूर्णानन्दब्रह्मात्मानं ज्ञात्वा

श्वे॰उ॰ क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याऽभिध्यानात्तृतीयं

---

श्वे॰भा॰ केवलात्मकामो वाऽऽप्तशेषपुमर्थो मुक्तो भवति ॥ तथा शिवधर्मोत्तरे ज्ञानध्यानयोर्विशेषैश्वर्यलक्षणं केवलात्माप्तकामलक्षणञ्च फलं दर्शयति ।

ध्यानादैश्वर्यमतुलमैश्वर्यात् सुखमुत्तमं ।
ज्ञानेन तत् परित्यज्य विदेहो मुक्तिमाप्नुयादिति ॥

तथा च दहरादिसविशेषसगुणोपासकानां स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिना विशेषैश्वर्यलक्षणं फलं दर्शयति । तथा च प्रश्नोपनिषदि । यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्न इत्यादिना परमपुरुषमभिध्यायतोऽर्चिरादिमार्गोपदेशपूर्वकं । स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षत इति ब्रह्मलोकं गतस्य तत्रैव सम्यग्दर्शनलाभं दर्शयित्वा तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेतीति सम्यग्दर्शनेन मोक्ष उपदिष्टः तमेवं विद्वानमृत इह भवतीति विदुषोऽर्चिरादिगमनं विना इहैवाऽमृतत्वप्राप्तिं दर्शयति ॥ अथाकामयमान इत्यारभ्य न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीत्यादिना विनैवोत्क्रान्तिं विदुषो मोक्ष उपदिष्टः । उदस्मात् प्राणाः काम-

श्वे॰उ॰ देहभेदे विश्वैश्वर्य्यं केवल आप्तकामः ॥ ११ ॥

---

श्वे॰भा॰ न्यद्वो नेति नेति होवाच याज्ञवल्क्य इति प्रश्नपूर्व्व-
कमुत्क्रान्त्यभावो दर्शितः । तथा च ब्राह्मे पुराणे जीव-
न्मुक्तिं गत्यभावं दर्शयति ॥

यस्मिन् काले स्वमात्मानं योगी जानाति केवलं ।
तस्मात् कालात् समारभ्य जीवन्मुक्तो भवेदसौ ॥
मोक्षस्य नैव किञ्चित् स्यादन्यत्र गमनं क्वचित् ।
स्थानं पराद्ध्यमपरं यत्र गच्छन्ति योगिनः ॥
अज्ञानबन्धभेदस्तु मोक्षो ब्रह्मलयस्त्विति ॥

तथा लैङ्गे विदुषो जीवन्मुक्तिं दर्शयति ॥

इह लोके परे चैव कर्त्तव्यं नास्ति तस्य वै ।
जीवन्मुक्तो यतस्तस्मात् ब्रह्मवित् परमार्थतः ॥

शिवधर्म्मोत्तरे ॥

वाञ्छात्ययेऽपि कर्त्तव्यं किञ्चिदस्य न विद्यते ।
इहैव स विमुक्तः स्यात् सम्पूर्णः समदर्शनः ॥

तस्मादुपासको देहादुत्क्रम्यार्च्चिरादिना देवयानेन
विश्वैश्वर्य्यं ब्रह्म प्राप्य विश्वैश्वर्य्यमनुभूय तत्रैव केवलं प्रत्य-
स्तमितभेदपूर्णानन्दाद्वितीयब्रह्मात्मानं ज्ञात्वा केवल-
मात्मकामो मुक्तो भवति विद्वान् । निर्व्विशेषपूर्णान-
न्दाद्वितीयब्रह्मविज्ञानादशेषगन्तृगन्तव्यगमनादिभेदप्र-
त्यस्तमयाद्विनैवोत्क्रान्तिं देवयानं ब्रह्मज्ञानसमनन्तरं

श्वे॰उ॰ एतज्ज्ञेयं नित्यमेवात्मसंस्थं
नातः परं वेदितव्यं हि किञ्चित् ।

---

शं॰भा॰ जीवन्मुक्तो ब्रह्मज्ञानसमनन्तरं ब्रह्मानन्दमनुभूयात्मर-
तिरात्मक्रीड आत्मनैवान्तःसुखोऽन्तरारामोऽन्तर्ज्योति-
रात्मक्रीड आत्मरतिरात्ममिथुन आत्मानन्द इहैव
स्वाराज्ये भुवि स्वे महिम्न्यप्रतोऽवतिष्ठते । तद्धेतुत्वादा-
त्मविषयपरित्यागेन ब्रह्मध्यानाय बाह्यान्तःकामनिष्कार्य
श्रौतकार्मलक्षणं कार्यं कृत्वा विशुद्धसत्त्वो योगारूढो
भूत्वा शमादिसाधनसम्पन्नः ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥
एवं युञ्जन् सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥
सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः ॥
समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरं ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिं॥११॥

यस्माज् ज्ञानान्तरं परमपुरुषार्थसिद्धिस्तस्मात् एत-
ज्ज्ञेयमिति ॥ एतत् प्रकृतं केवलात्माकारब्रह्मरूपं
नित्यं नियमेन ज्ञेयं किमनात्मसंस्थं न स्वात्मस्थं ज्ञेयं
नानात्मवित् ॥ आहो श्रूयते ।

श्वे॰उ॰ भोक्ता भोग्यं प्रेरितारञ्च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥

---

श्वे॰भा॰ तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामिति ॥

तथा च शिवधर्म्मोत्तरे योगिनामात्मनि स्थितिः ॥

शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
आत्मस्थं यः परित्यज्य बहिस्थं यजते शिवं ॥
हस्तस्थं पिण्डमुत्सृज्य लिह्यात् कूर्परमात्मनः ।
सर्व्वत्रावस्थितं शान्तं न पश्यन्तीह शङ्करं ॥
ज्ञानचक्षुर्व्विहीनत्वादन्धः सूर्य्यं यथोदितं ।
यः पश्येत् सर्व्वगं शान्तं तस्याप्यात्मस्थितः शिवः ॥
आत्मस्थं ये न पश्यन्ति तीर्थे मार्गन्ति ते शिवं ।
आत्मस्थं तीर्थमुत्सृज्य बहिस्तीर्थानि यो व्रजेत् ॥
करस्थं स महारत्नं त्यक्त्वा काचं विमार्गति ॥

अथवा एतद्यदपरोक्षं प्रत्यगात्मरूपं तन्नित्यमविनाशि स्वे महिम्नि स्थितं ब्रह्मैव ज्ञेयं। कस्मात्। हिशब्दो यस्मादर्थे। तस्मादतः परं वेदितव्यमस्ति किञ्चिदपि। श्रूयते च बृहदारण्यके। तदेतत् पदनीयमस्य सर्व्वस्य यदयमात्मेति ॥ कथमेतज्ज्ञेयमित्याह। भोक्ता जीवो भोग्यमितरत्। सर्व्वप्रेरिताऽन्तर्य्यामी परमेश्वरः। तदेतत्त्रिविधं प्रोक्तं ब्रह्मैवेति। भोक्त्राद्यशेषभेदप्रपञ्चविलापनेनैव निर्व्विशेषं ब्रह्मात्मानं जानीयादित्यर्थः ॥

श्वे॰उ॰ वह्नेर्यथा योनिगतस्य मूर्ति-
र्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्य-
स्तद्वोभयं वै प्रणवेन देहे ॥१३॥

---

श्वे॰भा॰ तथा चोक्तं कावषेयगीतायां ॥

त्यक्त्वा सर्वविकल्पांश्च स्वात्मस्थं निश्चलं मनः ।
कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवानलः ॥

तथा च श्रीविष्णुपुराणे ॥

तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयत इति॥

तदानीमोमित्येतेनाक्षरेण परम्पुरुषमभिध्यायीत। ओमित्यात्मानं युञ्जीत। ओमित्यात्मानं ध्यायीतेति श्रुतेः॥१२॥

आत्मानमन्विष्य पराभिध्याने प्रणवस्य नियमाभिधानाङ्गत्वेन प्रणवं दर्शयति । वह्नेर्यथेति ॥ वह्नेर्यथा योनिगतस्य अरणिगतस्य मूर्त्तिः स्वरूपं न दृश्यते मथनात् प्राङ् नैव च लिङ्गस्य सूक्ष्मदेहस्य विनाशः स एवाऽरणिगतोऽग्निर्भूयः पुनः पुनरिन्धनयोनिना मथनेन गृह्यः । योनिशब्दोऽत्र कारणवचनः । इन्धनेन कारणेन पुनः पुनर्मथनाद्गृह्यः । तद्वोभयं । इवार्थो वाशब्दः। तद्वोभयं तदुभयमिव मथनात् प्राङ् न गृह्यते मथनेन च गृह्यते। तद्वदात्मा वह्निस्थानीयः प्रणवेनोत्तरारणिस्थानीयेन मथनाद्गृह्यते देहे चाधरारणिस्थानीये॥१३॥

श्वे०उ० स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिं ।
ध्याननिर्म्मथनाभ्यासाद् देवं पश्येन्निगूढवत्
तिलेषु तैलं दधिनीव सर्पि- ॥१४॥
राप: स्रोतःस्वरणीषु चाग्निः ।
एवमात्मनि गृह्यतेऽसौ
सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥
सर्व्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितं ।

---

श्वे॰भा॰ तदेव प्रपञ्चयति । स्वदेहेति ॥ स्वदेहमरणिं कृत्वा अधरारणिं ध्यानेन निर्म्मथनं तस्य निर्म्मथनस्याऽभ्यासाद् देवं ज्योतीरूपं प्रपश्येन्निगूढाग्निवत् ॥ १४ ॥

उक्तस्यार्थस्य द्रढिम्ने दृष्टान्तान् बहून् दर्शयति । तिलेष्विति ॥ तिलेषु यन्त्रपीडनेन तैलं गृह्यते दधि-मथनेन सर्पिरिव । आपः स्रोतःसु नदीषु भूखननेन । अरणीषु चाग्निर्म्मथनेन । एवमात्मात्मनि स्वात्मनि गृह्यते । असौ मननात्मभूतदेहादिषु अन्नमयाद्यो-पाधिप्रविलापनेन निर्व्विशेषे पूर्णानन्दे स्वात्मन्येवाव-गम्यत इत्यर्थः ॥ केन तर्हि पुरुषेणात्मा आत्मन्येव गृह्यत इत्याह । सत्येन यथा भूतहितार्थवचनेन भूतहितेन । सत्यं भूतहितं प्रोक्तमिति स्मरणात् । तपसा इन्द्रियमन-सामैकाग्र्यलक्षणेन । मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमन्तप इति स्मरणात् । एनमात्मानं योऽनुपश्यति ॥ १५ ॥

कथमेनमनुपश्यतीत्यत आह ॥ सर्व्वव्यापीति ॥ सर्व्वं

श्वे॰उ॰ आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं ।
तद्ब्रह्मोपनिषत्परमिति ॥ १६ ॥ इति श्वेताश्वतरोपनिषत्सु प्रथमोऽध्यायः ॥ ॐ तत्सत् ॐ ॥

---

श्वे॰भा॰ प्रकृत्यादिविशेषान्तं व्याप्यावस्थितं न देहेन्द्रियाद्यध्यात्ममात्रावच्छिन्नमात्मानं । क्षीरे सर्पिरिव सारत्वेन निरन्तरतया आत्मत्वेन सर्व्वमर्पितमात्मविद्यातपोमूलं कारणं । श्रूयते च । एष ह्येव साधुकर्म्म कारयति । ददामि बुद्धियोगं तं येन मामुपयान्ति त इति । अथ वा आत्मविद्या च तपश्च यस्यात्मलाभे मूलहेतुरिति ॥ तथा च श्रुतिः । विद्ययाऽमृतमश्नुतेऽविद्यया मृतं । तपसा ब्रह्म विजिज्ञासस्वेति च । ब्रह्म उपनिषत्परं उपनिषत्समधिगम्यं परं श्रेय इति । यः सत्यादिसाधनसंयुक्त एनं सर्व्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितं आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं अनुपश्यति येनं सर्व्वगतमप्यात्मदर्शिनामात्मन्येव गृह्यते नासत्यादियुक्तेनापरिच्छिन्नप्रज्ञानमयाद्यात्मना । श्रूयते च । सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यं । न येषु जिह्ममनृतं न माया चेति ॥ द्विर्व्वचनमध्यायपरिसमाप्त्यर्थं ॥ १६ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्करभगवत्प्रणीते श्वेताश्वतरोपनिषद्भाष्ये प्रथमोऽध्यायः ॥१॥ हरिः ॐ ॥

हरिः ॐ ॥

श्वे॰उ॰ युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ॥
अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥१॥

---

श्वे॰भा॰ ध्यानमुक्तं ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवदिति परमात्मदर्शनोपायत्वेन इदानीं तदपेक्षितसाधनविधानार्थं द्वितीयोऽध्याय आरभ्यते । तत्र प्रथमं तत्सिध्यर्थं सवितारमाशास्ते । युञ्जान इति ॥ युञ्जानः प्रथमं मनः । प्रथमं ध्यानारम्भे मनः परमात्मनि संयोजनया धिय इतरानपि प्राणान् । प्राणा वै धिय इति श्रुतेः । अथवा धियः बाह्यविषयज्ञानानि । किमर्थं । तत्त्वाय तत्त्वसमर्पणाय सविता धियो बाह्यविषयज्ञानाद् अग्निं तस्य ज्योतिःप्रकाशं निचाय्य दृष्ट्वा पृथिव्या अधि अस्मिन् शरीरे आभरत् आहरत् । एतदुक्तं भवति ध्याने प्रवृत्तस्य मम बाह्यविषयज्ञानादुपसंहृत्य परमात्मन्येव संयोजयितुमनुग्राहकदेवतात्मनामग्न्यादीनां यत् सर्ववस्तुप्रकाशसामर्थ्यं तत्सर्वं मच्चक्षुरादिषु सम्पादयेत् सविता यत्प्रसादादवाप्यते योग इत्यर्थः । अग्निशब्द इतरासामप्यनुग्राहकदेवतानामुपलक्षणार्थः ॥ १ ॥

श्वे॰उ॰ युक्तेन मनसा वयं देवस्य सवितुः सवे ।
सुवर्गेयाय शक्त्या ॥ २ ॥
युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवं ।
बृहज्ज्योतिःकरिष्यतःसविताप्रसुवातितान्।
[॥ ३ ॥

---

श्वे॰भा॰ युक्तेनेति ॥ यदा तत्त्वाय मनो योजयन्ननुग्राहकसत्त्वाधानेन देहेन्द्रियदार्ढ्यं करोति तदा युक्तेन सवित्रा परमात्मनि संयोजितेन मनसा वयं तस्य देवस्य सवितुः सवेऽनुज्ञायां सत्यां स्वर्ग्याय स्वर्गप्राप्तिहेतुभूताय ध्यानकर्मणि यथासामर्थ्यं प्रयतामहे परमात्मवचनोऽत्र स्वर्गशब्दः तत्प्रकरणात् तस्यैव सुखरूपत्वात् तदंशत्वाच्चेतरस्य सुखस्य । तथा च श्रुतिः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति ॥ २ ॥

युक्त्वायेति ॥ पुनरपि सोऽप्येवं करोत्विति प्रार्थना । युक्त्वाय योजयित्वा देवान् मनआदीनि करणानि तेषां विशेषणं । स्वः स्वर्गं सुखं पूर्णानन्दब्रह्म यत इति द्वितीयाबहुवचनं । ये पूर्णानन्दब्रह्म गच्छतो न शब्दादिविषयान् । पुनरपि विशेषणान्तरं धिया सम्यग्दर्शनेन दिवं द्योतनस्वभावचैतन्यैकरसं दृहत् महद् ब्रह्मज्योतिःप्रकाशं करिष्यतः पूर्णानन्दब्रह्माविष्कारिष्यतः । अत्र द्वितीयाबहुवचनं । सविता प्रसुवाति तान् तानि कर-

श्वे॰उ॰ युञ्जते मन उत युञ्जते धियो
विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुना विदेक इन्
मही देवस्य सवितुः परिष्टुतिः॥ ४॥

---

श्वे॰भा॰णानि। यथा करणानि विषयेभ्यो निवृत्तानि आत्माभिमुखानि आत्मप्रकाशमेव तथानुजानातु सवितेत्यर्थः॥ २॥

तथैवमनुजानतो महती परिष्टुतिः कर्त्तव्येत्याह। युञ्जत इति॥ युञ्जते योजयन्ति ये विप्रा मन उत युञ्जते धिय इतराण्यपि करणानि। धीहेतुत्वात् करणेषु धीशब्दप्रयोगः। तथा च श्रुत्यन्तरं। यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सहेति। विप्रस्य विशेषणव्याप्तस्य बृहतो महतो विपश्चितः सर्व्वज्ञस्य देवस्य सवितुर्मही महती परिष्टुतिः कर्त्तव्या। कैर्विप्रैः। पुनरपि विशिनष्टि। वि होत्रा दधे। होत्राः क्रिया यो विदधे वयुनावित् प्रज्ञावित् सर्व्वज्ञानात् साक्षिभूत एषोऽद्वितीयः। ये विप्रा मनआदिकरणानि विषयेभ्य उपसंहृत्यात्मन्येव योजयन्ति तैर्विप्रस्य बृहतो विपश्चितो महती परिष्टुतिः कर्त्तव्या। होत्रा दधे वयुनाविदेकः सविता॥ ४॥

मं॰उ॰ युजे वां ब्रह्म पूर्व्यं नमोभि
विश्लोका यन्ति पथ्येव सूराः।
शृण्वन्ति विश्वे अमृतस्य पुत्रा
आ ये धामानि दिव्यानि तस्थुः॥ ५ ॥
अग्निर्यत्राभि मथ्यते वायुर्यत्राभि युज्यते।
सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः॥ ६ ॥

---

श्वे॰भा॰ किञ्च॥ युजे वामिति॥ युजे वां समादधे वां युवयोः करणानुग्राहकयोः सम्बन्धि प्रकाशकत्वेन तत् प्रकाशितं ब्रह्मेत्यर्थः। अथवा वामिति बहुवचनार्थे युष्माकं कारणभूतं ब्रह्म पूर्व्यं पूर्वं चिरन्तनं युजे समादधे। नमोभिर्नमस्कारैश्चित्तप्रणिधानादिभिः। एष एवं समादधानस्य मम श्लोका यन्ति कीर्त्तिस्तथा यन्ति विविधमेत्य पथ्येव सूराः। पथि सन्मार्गे। अथवा पथ्या कीर्त्तिरित्येतद्वाक्यं प्रार्थनारूपं शृण्वन्तु विश्वे अमृतस्य ब्रह्मणः पुत्राः सूरात्मनो हिरण्यगर्भस्य। के ते। ये धामानि दिव्यानि दिविभवान्यातस्थुरधितिष्ठन्ति॥ ५ ॥

युञ्जानः प्रथमं मन इत्यादिना सवित्रादिप्रार्थना प्रतिपादिता। यस्तु पुनः प्रार्थनां कृत्वा तैरनुज्ञातः सन् योगे प्रवर्त्तते स भोगहेतोः कर्मण्येव प्रवर्त्तत इत्याह। अग्निर्यत्रेति॥ अग्निर्यत्राभिमथ्यते अरणिमथनतत्साधनादौ। वायुर्यत्र प्रवर्ग्यादौ। पवित्रप्रेरितः शब्दम-

श्वे॰उ॰ सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यं ।

श्वे॰भा॰ भिव्यक्तं करोति । सोमो यत्र दशापवित्रात् पूयमानो ऽतिरिच्यते तत्र क्रतौ सञ्जायते मनः । यस्मादननुष्ठानस्य तस्य भोगहेतोः कर्म्मण्येव प्रवृत्तिः तस्मात् ॥ ६ ॥

सवित्रेति ॥ सवित्रा प्रसवेन सवितृप्रसवेनेति यावत् । जुषेत सेवेत ब्रह्म पूर्व्यं चिरन्तनं । तस्मिन् ब्रह्मणि योनिष्ठां समाधिलक्षणां कृणवसे कुरुष्व । एवं कुर्व्वतो मम किं ततो भवतीत्याह । न हि ते पूर्त्तं स्मार्त्तं कर्म्म इष्टं श्रौतञ्च कर्म्माक्षिपत् न पुनर्भोगहेतोर्भवति । ज्ञानाग्निना सवीजस्य दग्धत्वात् । उक्तञ्च । यथैषिका तूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्व्वे पाप्मानः प्रदूयन्त इति । ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथेति चेति । अग्निर्यत्राभिमथ्यत इत्यत्राऽपरा व्याख्या । अग्निः परमात्मा । अविद्यातत्कार्य्यस्य दाहकत्वात् । उक्तञ्च । अघमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति । यत्र यस्मिन् पुरुषे मथ्यते स्वदेहमरणिं कृत्वेत्यादिना पूर्व्वोक्तध्याननिर्म्मथनेन वायुर्यत्राऽभियुज्यते शब्दप्रयोगं करोति रेचकादिकरणात् । सोमो यत्रातिरिच्यतेऽनेकजन्मसेवया तत्र तस्मिन् यज्ञदानतपःप्राणायामसमाधिविशुद्धान्तःकरणे सञ्जाते परिपूर्णानन्दाद्वितीयब्रह्माकारं समुत्पद्यते नान्यथाऽशुद्धान्तःकरणे । उक्तञ्च ।

मू॰उ॰ तत्र योनिं कृणवसे न हि ते पूर्वमक्षिपत् ॥७॥

त्रिरुन्नतं स्थाप्य समं शरीरं
हृदीन्द्रियाणि मनसा सन्निवेश्य ।

---

म॰भा॰ प्राणायामविशुद्धात्मा यस्मात् पश्यति तत् परं ।
तस्मान्नातःपरं किञ्चित् प्राणायामादिति श्रुतिः ॥
अनेकजन्मसंसारचिते पापसमुच्चये ।
नत् क्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः ॥
जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥

तस्मात् प्रथमं यज्ञाद्यनुष्ठानं ततः प्राणायामादि ततः समाधिः ततो वाक्यार्थज्ञाननिष्पत्तिः ततः कृतकृत्यतेति ॥ ७ ॥

तत्र योनिं कृणवस इत्युक्तं कथं योगिकारणमित्याशङ्क्य तत्प्रकारं दर्शयति । त्रिरुन्नतमिति ॥ त्रीणि उन्नतानि उरोग्रीवशिरांसि उन्नतानि यस्मिन् शरीरे त्रिरुन्नतं संस्थाप्य समं शरीरं हृदीन्द्रियाणि मनश्चक्षुरादीनि मनसा सन्निवेश्य सन्नियम्य ब्रह्मैवोडुपसंतरणसाधनं तेन ब्रह्मोडुपेन ब्रह्मशब्दं प्रणवं वर्णयन्ति । तेनोडुपस्थानीयेन प्रणवेन काकाक्षिवदुभयत्र सम्बध्यते । तेनोपसंहृत्य तेन प्रतरेत अतिक्रमेद्विद्वान् स्रोतांसि संसारसरितः । स्वाभाविकाविद्याकामकर्मप्रवर्त्तितानि

---

श्वे॰भा॰ भयावहानि प्रेततिर्यगूर्ध्वप्राप्तिकराणि पुनरावृत्तिभाञ्जि प्राणायामक्षपितमनोमलस्य चित्तं ब्रह्मणि स्थितम्भवतीति प्राणायामो निर्दिश्यते। प्रथमं नाडिशोधनं कर्त्तव्यं। ततः प्राणायामेऽधिकारः। दक्षिणनासिकापुटमङ्गुल्याऽवष्टभ्य वामेन वायुं पूरयेद् यथाशक्ति। ततोऽनन्तरमुत्सृज्यैव दक्षिणेन पुटेन समुत्सृजेत्। सव्यमपि धारयेत्। पुनर्दक्षिणेन पूरयित्वा सव्येन समुत्सृजेद् यथाशक्ति। त्रिःपञ्चकृत्वो वैवमभ्यस्यतः सवनचतुष्टयमपररात्रे मध्याह्ने पूर्वरात्रे ऽर्द्धरात्रे च पक्षान् मासाद्विशुद्धिर्भवति। त्रिविधः प्राणायामो रेचकः पूरकः कुम्भक इति। तदेवाह।

ईप्सितानि समभ्यस्य वाञ्छितानि यथाविधि।
प्राणायामं ततो गार्गि जितासनगतोऽभ्यसेत्॥
मृद्वासने कुशान् सम्यगास्तीर्य्याजिनमेव च।
लम्बोदरञ्च सम्पूज्य फलमोदकभक्षणैः॥
तदासने सुखासीनः सव्ये न्यस्येतरं करं।
समग्रीवशिराः सम्यक् संवृतास्यः सुनिश्चलः॥
प्राङ्मुखोदङ्मुखो वापि नासाग्रन्यस्तलोचनः।
अतिभुक्तमभुक्तञ्च वर्जयित्वा प्रयत्नतः॥
नाडीसंशोधनं कुर्य्यादुक्तमार्गेण यत्नतः।

श्वे॰उ॰ स्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥

---

श्वे॰भा॰ तृषा क्लेशो भवेत् तस्य तच्छोधनमकुर्वतः ॥
नासाग्रे शशभृद्बीजं चन्द्रातपवितानितं ।
सप्तमस्य तु वर्गस्य चतुर्थं बिन्दुसंयुतं ॥
विश्वमध्यस्थमालोक्य नासाग्रे चक्षुषी उभे ।
इडया पूरयेद्वायुं वाह्यं द्वादशमात्रकैः ॥
ततोऽग्निं पूर्ववद् ध्यायेत् स्फुरज्ज्वालावलीयुतं ।
रवर्णं बिन्दुसंयुक्तं शिखिमण्डलसंस्थितं ॥
ध्यायेद्विरेचयेद्वायुं मन्दं पिङ्गलया पुनः ।
पुनः पिङ्गलया पूर्य घ्राणं दक्षिणतः सुधीः ॥
तद्वद्विरेचयेद्वायुमिडया तु शनैः शनैः ।
त्रिचतुर्वत्सरं वापि त्रिचतुर्मासमेव वा ॥
गुरुणोक्तप्रकारेण रहस्येवं समभ्यसेत् ।
प्रातर्माध्यन्दिने सायं स्नात्वा षट्कृत्व आचरेत् ॥
सन्ध्यादिकर्म कृत्वैवं मध्यरात्रेऽपि नित्यशः ।
नाडीशुद्धिमवाप्नोति तच्चिह्नं दृश्यते पृथक् ॥
शरीरलघुता दीप्तिर्जठराग्निविवर्द्धनं ।
नादाभिव्यक्तिरित्येतच्चिह्नं तच्छुद्धिसूचनं ॥
शुध्यन्ति न अपेक्षेन: सर्वाशुद्धेर्हेतवः ।
प्राणायामं ततः कुर्याद्रेचपूरककुम्भकैः ॥
प्राणापानसमायोगः प्राणायामः प्रकीर्त्तितः ।

श्वे॰भा॰ प्रणवत्र्यात्मकं गार्गि रेचपूरककुम्भकं ॥
तदेतत् प्रणवं विद्धि तत्स्वरूपं ब्रवीम्यहं ।
यद्वेदादौ स्वरः प्रोक्तो वेदान्तेषु प्रतिष्ठितः ॥
तयोरन्तं तु यद्गार्गि वर्णपञ्चकपञ्चमं ।
रेचकं प्रथमं विद्धि द्वितीयं पूरकं विदुः ॥
तृतीयं कुम्भकं प्रोक्तं प्राणायामस्त्रिरात्मकः ॥
त्रयाणां कारणं ब्रह्म भारूपं सर्व्वकारणं ।
रेचकः कुम्भको गार्गि सृष्टिस्थित्यात्मकावुभौ ॥
कुम्भकस्तथ संहारः कारणं योगिनामिह ।
पूरयेत् षोडशैर्म्मात्रैरापादतलमस्तकं ॥
मात्रैर्द्वात्रिंशकैः पश्चाद्रेचयेत् सुसमाहितः ।
सम्पूर्णकुम्भवद्वायुर्मो यथा मूर्द्धदेशतः ॥
कुम्भकं धारणं गार्गि चतुःषष्ट्या तु मात्रया ।
ऋषयस्तु वदन्त्यन्ये प्राणायामपरायणाः ॥
पवित्रभूताः पूतात्माः प्रभञ्जनजये रताः ।
तत्रादौ कुम्भकं कृत्वा चतुःषष्ट्या तु मात्रया ॥
रेचयेत् षोडशैर्म्मात्रैर्न्नासेनैकेन सुन्दरि ।
तयोश्च पूरयेद्वायुं शनैः षोडशमात्रया ॥
प्राणस्यायमनन्त्वेवं वशं कुर्य्यात्त्रयी वशः ।
पञ्च प्राणाः समाख्याता वायवः प्राणमाश्रिताः ॥
प्राणो मुख्यतमस्तेषु सर्व्वप्राणभृतां सदा ।
आस्यनासिकयोर्म्मध्ये हृदये नाभिमण्डले ॥

श्वे०उ० प्राणान् प्रपीड्येह स युक्तचेष्टः
क्षीणे प्राणे नासिकयोच्छ्वसीत। १
दुष्टाश्वयुक्तमिव वाहमेनं
विद्वान् मनो धारयेताप्रमत्तः ॥ ९ ॥
समे शुचौ शर्करावह्निवालुका-

---

श्वे०भा० पादाङ्गुष्ठाश्रितं चैव सर्वाङ्गेषु च तिष्ठति।
नित्यं षोडशसङ्ख्याभिः प्राणायामं समभ्यसेत्॥
मनसा प्रार्थितं याति सर्वप्राणजयी भवेत्।
प्राणायामैर्दहेद् दोषान् धारणाभिश्च किल्बिषान्॥
प्रत्याहाराच्च संसर्गं ध्यानेनानीश्वरान् गुणान्।
प्राणायामशतं कृत्वा यः करोति दिने दिने॥
मातापितृगुरुघ्नोऽपि त्रिभिर्वर्षैर्व्यपोहति ॥ ८ ॥

तदेतदाह ॥ प्राणानित्यादिना ॥ प्राणान् प्रपीड्य देहयुक्तो नायम्भ्रत इति लोकोक्तचेष्टा यस्य स संयुक्तचेष्टः। क्षीणे शक्तिह्रास्या तनुत्वं गते मनसि नासिकायाः पुटाभ्यां शनैः शनैरुच्छृजेन्न मुखेन। मुखेन मुक्ताभ्यां वायुं प्रतिष्ठाप्य शनैर्नासिकयोत्सृजेदिति। दुष्टाश्वाश्वः सूतं रथान्तरमिव मनने मनो धारयेताऽप्रमत्तः प्रणिहितात्मा च॥ ९ ॥

समेति॥ समे निम्नोन्नतरहिते देशे। शुचौ शुद्धे। शर्करावह्निवालुकाविवर्जिते। शर्कराः क्षुद्रोपलाः। वालु-

उ॰ विवर्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने
गुहानिवाताश्रयणे प्रयोजयेत् ॥ १० ॥

नीहारधूमार्कानिलानलानां
खद्योतविद्युत्स्फटिकशशिनां ।
एतानि रूपाणि पुरःसराणि
ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥

---

शं॰भा॰ कालावूर्षे । तथा शब्दजलाश्रयादिभिः । शब्दः कलहादिध्वनिः । जलं सर्वप्राण्युपभोग्यं । मण्डप आश्रयः । मनोऽनुकूले मनोरमे चक्षुःपीडने प्रतिपाद्याभिमुखे। छान्दसो विसर्गलोपः । गुहानिवाताश्रयणे गुहायामेकान्ते निवाते समाश्रित्य प्रयोजयेत् प्रयुञ्जीत चित्तं परमात्मनि ॥ १० ॥

इदानीं योगमभ्यस्यतोऽभिव्यक्तिचिह्नानि वक्ष्यन्ते नीहार इत्यादिना ॥ नीहारस्तुषारः । तद्वत् प्रायैः प्रथमा चित्तवृत्तिः प्रवर्त्तते ततो धूम इवाभाति। ततोऽर्क इवाभाति। ततो वह्निरिवाऽत्युष्णो वायुः प्रकाशवद्घनः प्रवर्त्तते । वात्यावायुरिव सङ्क्षुभितो बलवान् विजृम्भते। कदाचित् खद्योतखचितमिवाम्बरमालक्ष्यते। विद्युदिव रोचिष्णु प्रवर्त्तते। शुद्धस्फटिकाकृतिः कदाचित पूर्णशशिवत । एतानि रूपाणि योगे क्रियमाणे ब्रह्म-

श्वे॰उ॰ पृथ्व्याप्यतेजोऽनिलखे समुत्थिते
पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न दुःखं
प्राप्तस्य योगाग्निमयं शरीरं ॥ १२ ॥
लघुत्वमारोग्यमलोलुपत्वं
वर्णप्रसादः स्वरसौष्ठवञ्च ।
गन्धः शुभो मूत्रपुरीषमल्पं
योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥

---

श्वे॰भा॰ प्यावि(व)च्छिद्यमाने निमित्ते पुरःसराण्यपगामीनि । तथा परमयोगसिद्धिः ॥ ११ ॥

पृथ्वीति । पृथ्व्यप्तेजोऽनिलखे पृथिव्यादीनि भूतानि द्वन्द्वैकवद्भावेन निर्दिश्यन्ते । तेषु पञ्चसु भूतेषु समुत्थितेषु पञ्चात्मके योगगुणे प्रवृत्ते इत्यस्य व्याख्यानं । कः पुनर्योगगुणः प्रवर्त्तते । पृथिव्या गन्धः । तथाऽद्भ्यो रसः । एवमन्यत्र ॥ उक्तं ।

ज्योतिष्मती स्पर्शवती तथा रसवती परा ।
गन्धवत्यपरा प्रोक्ता चतस्रस्तु प्रवृत्तयः ॥
आसां योगप्रवृत्तीनां यद्येकापि प्रवर्त्तते ।
प्रवृत्तयोगं तं प्राहुर्योगिनो योगचिन्तकाः ॥ १२ ॥

लघुत्वमिति ॥ न तस्य योगिनो रोगाज्ज्वराद् दुःखममानसं वा भवति । कस्य । प्राप्तस्य योगाग्निमयं

श्वे॰उ॰ यथैव बिम्बं मृदयोपलिप्तं
तेजोमयं भ्राजते तत् सुधातं।
तद्वात्मतत्त्वं प्रसमीक्ष्य देही
एकः कृतार्थो भवते वीतशोकः॥ १४॥
यदात्मतत्त्वेन तु ब्रह्मतत्त्वं
दीपोपमेनेह युक्तः प्रपश्येत्।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं
ज्ञात्वा देवं मुच्यते सर्वपाशैः॥ १५॥

---

श्वे॰भा॰ शरीरं। योगाग्निमयदोषकलापं शरीरं प्राप्तस्य।
स्पष्टमन्यत्॥ १३॥

किञ्च। यथैवेति॥ यथैव बिम्बं सौवर्णं राजतं वा मृदयोपलिप्तं मृदादिना मलिनीकृतं पूर्वं पश्चात् सुधातं सुधौतमित्यभिप्रेर्थे सुधातमिति छान्दसं। अग्न्यादिना विमलीकृतं तेजोमयं भ्राजते। तदा तद्वेव आत्मतत्त्वं प्रसमीक्ष्य दृष्ट्वा एको न द्वितीयः कृतार्थो भवते वीतशोकः। परेषां पाठे तद्वत्सतत्त्वं प्रसमीक्ष्य देहीति। तत्राप्ययमेवार्थः॥ १४॥

कथं ज्ञात्वा वीतशोको भवतीत्याह। यदेति॥ यदा यस्यामवस्थायामात्मतत्त्वेन स्वेनात्मना। किंविशिष्टेन दीपोपमेन दीपस्थानीयेन प्रकाशस्वरूपेण ब्रह्मतत्त्वं प्रपश्येत्। तुशब्दोऽवधारणे। परमात्मानमात्मनैव जानी-

श्वे॰उ॰ एष हि देवः प्रदिशोऽनु सर्वाः
पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजातः स जनिष्यमाणः
प्रत्यङ्जनांस्तिष्ठति सर्वतोमुखः ॥ १६ ॥

यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश । य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥ श्वेताश्वतरोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

---

श्वे॰भा॰ यादित्यर्थः । उक्तञ्च । तदात्मानमेवावेदहं ब्रह्मास्मीति । कीदृशं । अन्यस्मादजायमानं । ध्रुवं अप्रच्युतस्वरूपं सर्व्वतत्त्वैरविद्यातत्कार्य्यैर्विशुद्धं असंस्पृष्टं ज्ञात्वा देवं मुच्यते सर्व्वपाशैरविद्यादिभिः ॥ १५ ॥

परमात्मानमात्मतत्त्वेन विजानीयादित्युक्तं तदेव भावयन्नाह । एष हीति ॥ एष एव देवः प्रदिशः प्राच्याद्या दिश उपदिशश्च सर्व्वाः पूर्व्वो हि जातः सर्व्वस्माद्धिरण्यगर्भात्मना स उ गर्भे अन्तर्व्वर्त्तमानः स एव जातः शिशुः स जनिष्यमाणोऽपि स एव सर्व्वांश्च जनान् प्रत्यङ् तिष्ठति सर्व्वप्राणिगतानि मुखानि अस्येति सर्व्वतोमुखः ॥ १६ ॥

इदानीं योगवत् साधनान्तराणि नमस्कारादीनि कर्त्तव्यत्वेन दर्शयितुमाह । यो देव इति ॥ यो विश्वं भुवनं भुवनैर्विरचितं संसारमण्डलमाविवेश । य ओषधीषु

श्वे॰उ॰ य एको जालवान् ईशित ईशिनीभिः
सर्वाँल्लोकानीशित ईशनीभिः।
य एवैक उद्भवे सम्भवे च
य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥
एको हि रुद्रो न द्वितीयाय तस्थुर्य्य
इमाँल्लोकान् ईशत ईशिनीभिः।

---

श्वे॰भा॰ शाखादिषु वनस्पतिषु अश्वत्थादिषु तस्मै विश्वात्मने भुवनमूलाय परमेश्वराय नमो नमः। द्विर्वचनमादरार्थं अध्यायपरिसमाप्त्यर्थं च ॥१७॥ इति श्वेताश्वतरोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

कथमद्वितीयस्य परमात्मन ईशित्रीशितव्यादिभाव इत्याशङ्क्याह। य एक इति ॥ य एकः परमात्मा स जालवान् जालं माया दुरत्ययत्वात्। तथा चाह भगवान्। मम माया दुरत्ययेति। तद्वान् तदस्याऽस्तीति जालवान् मायावीत्यर्थः। ईशते ईष्टे मायोपाधिः सन्। कैरीशिनीभिः स्वशक्तिभिः॥ तथाचोक्तं। ईशित ईशिनीभिः परमशक्तिभिरिति। कान् सर्वांल्लोकानीशित ईशिनीभिः। कदा उद्भवे विभूतियोगसम्भवे प्रादुर्भावे च एतद्विदुरमृता अमरणधर्म्माः भवन्ति ॥ १ ॥

कस्मात् पुनर्जालवानित्याशङ्क्याह। एको हीति। हिशब्दो यस्मादर्थे। यस्मादेक एव रुद्रः स्थितो न द्वि-

श्वे॰उ॰ प्रत्यङ्जनांस्तिष्ठति सञ्चुकोपान्तकाले
संसृज्य विश्वा भुवनानि गोपाः ॥ २ ॥
विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमीं जनयन् देव एकः ॥ ३ ॥

---

श्वे॰भा॰ तीयाय वस्त्वन्तराय तस्थुर्ब्रह्मविदः परमार्थदर्शिनः ॥ उक्तञ्च । एको रुद्रो न द्वितीयाय तस्थुरिति । य इमाँल्लोकानीशते नियमयति इह ईशिनीभिः । सर्व्वांश्च जनान् प्रति अन्तरः प्रतिपुरुषमवस्थितः । रूपं रूपं प्रतिरूपो बभूवेत्यर्थः । किञ्च । सञ्चुकोपान्तकाले प्रलयकाले । किं कृत्वा संसृज्य विश्वा भुवनानि गोपा गोप्ता भूत्वा । एतदुक्तं भवति । अद्वितीयः परमात्मा । न चाऽसौ कुम्भकारवदात्मानं केवलं मृत्पिण्डस्थानीयमुपादानकारणमुपादत्ते किं तर्हि स्वशक्तिविक्षेपं कुर्व्वन् स्रष्टा नियन्ता चाभिधीयत इति उत्तरो मन्त्रः ॥ २ ॥

तस्यैव विराडात्मनावस्थानं तत्स्रष्टृत्वं प्रतिपादयति। विश्वतश्चक्षुरिति । सर्व्वप्राणिगतानि चक्षूंष्यस्येति विश्वतश्चक्षुः । अतः स्वेच्छयैव सर्व्वत्र चक्षूरूपादेः सामर्थ्यं विधत्त इति विश्वतश्चक्षुः । एवमुत्तरत्र योजनीयं ।

श्वे०उ०यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं
स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।

---

श्वे०भा०सं बाहुभ्यां धमति संयोजयतीत्यर्थः । अनेकार्थत्वाद्धातूनां । पक्षिणं धमति द्विपदो मनुष्यादींश्च पतत्रैः । किं कुर्वन् द्यावापृथिवी जनयन् देव एको विराजं सृष्टवानित्यर्थः ॥ ३ ॥

इदानीं तस्यैव स्वयंसृष्टिं प्रतिपादयन् मन्त्रदृगभिप्रेतं प्रार्थयते । यो देवानामिति ॥ यो देवानामिन्द्रादीनां प्रभवहेतुरुद्भवहेतुश्च । उद्भवे विभूतियोगः । विश्वस्याधिपो विश्वाधिपः पालयिता । महर्षिः । महांश्चासावृषिश्चेति महर्षिः सर्व्वज्ञ इत्यर्थः । हितं रमणीयमत्युज्ज्वलं ज्ञानं गर्भोऽन्तःसारो यस्य तं जनयामास पूर्वं सर्गादौ । स नोऽस्मान् बुद्ध्या शुभया संयुनक्तु परमपदं प्राप्नुयामिति ॥ ४ ॥

पुनरपि तस्य स्वरूपं दर्शयन्नभिप्रेतमर्थं प्रार्थयते मन्त्रद्वयेन । या ते रुद्र इत्यादि ॥ हे रुद्र तव या शिवा तनूरघोरा । उक्तं तथा च तस्यैते तनुवौ घोराऽन्या शिवाऽन्येति । अथवा शिवा शुद्धा अविद्यातत्कार्य्यवि-

श्वे॰उ॰तया नस्तनुवा शन्तमया गिरिशन्ताभिचा-
काशीहि ॥५॥
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्
ततः परं ब्रह्म परं बृहन्तं [॥ ६ ॥
यथा निकायं सर्वभूतेषु गूढं ।

---

श्वे॰भा॰निर्मुक्ता सच्चिदानन्दाद्वयब्रह्मरूपा न तु घोरा अपि-विभ्रमिकाह्लादिनी । अपापकाशिनी स्मृतिमात्राघना-शिनी पुण्याभिव्यक्तिकरी । तया आत्मना नोऽस्मान् शन्तमया सुखतमया पूर्णानन्दरूपया हे गिरिशन्त गिरौ स्थित्वा शं सुखं तनोतीति । अभिचाकशीहि अभिपश्य निरीक्षस्व श्रेयसा नियोजयस्वेत्यर्थः ॥ ५ ॥

किञ्च । यामिषुमिति । यामिषुं गिरिशन्त हस्ते बिभर्षि धारयसि अस्तवे जने क्षेप्तुं शिवां गिरित्र गिरिं त्रायत इति । तां कुरु मा हिंसीः पुरुषमस्मदीयं जगदपि कृत्स्नं पुरुषं साकारं ब्रह्म प्रदर्श्येत्यभिप्रेतमर्थं प्रार्थितवान् ॥ ६ ॥

इदानीं तस्यैव कारणात्मनावस्थानं दर्शयन् ज्ञाना-दमृतत्वमाह । ततः परमिति । ततः पुरुषयुक्ताज्जगतः परं कारणत्वात् कार्य्यभूतस्य प्रपञ्चस्य व्यापकमित्यर्थः । अथवा ततो जगदात्मनो विराजः परं । किं तद्ब्रह्म

श्वे॰उ॰विश्वस्यैकं परिवेष्टितारं
ईशं तं ज्ञात्वाऽमृता भवन्ति ॥ ७ ॥
वेदाहमेतं पुरुषं महान्तं
आदित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥

---

श्वे॰भा॰परं बृहन्तं ब्रह्मणो हिरण्यगर्भात् परं बृहन्तं महद्व्यापित्वात् । यथानिकायं यथाशरीरं । सर्व्वभूतेषु गूढमन्तरवस्थितं । विश्वस्यैकं परिवेष्टितारं सर्व्वमात्मनः कृत्वा स्वात्मना सर्व्वं व्याप्याऽवस्थितमीशं परमेश्वरं ज्ञात्वाऽमृता भवन्ति ॥ ७ ॥

इदानीमुक्तमर्थं द्रढयितुं मन्त्रदृगनुभवं दर्शयित्वा पूर्णानन्दाद्वितीयब्रह्मात्मपरिज्ञानादेव परमपुरुषार्थप्राप्तिर्नान्येनेति दर्शयति । वेदाहमेतमिति । वेद जाने तमेतं परमात्मानं । अथैतं प्रत्यगात्मानं साक्षिणं । किं । पुरुषं पूर्णं महान्तं सर्व्वात्मत्वात् । आदित्यवर्णं प्रकाशरूपं तमसोऽज्ञानात् परस्तात् तमेव विदित्वाऽतिमृत्युमेति मृत्युमत्येति । कस्मादन्यस्मान्नान्यः पन्था विद्यतेऽयनाय परमपदप्राप्तये ॥ ८ ॥

श्वे॰उ॰ यस्मात् परं नापरमस्ति किञ्चित्
यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्वं ॥ ९ ॥
ततो यदुत्तरतरं तदरूपमनामयं ।
य एतद्विदुरमृतास्ते भवन्त्य-
थेतरे दुःखमेवापियन्ति ॥ १० ॥

---

श्वे॰भा॰ कस्मात् पुनस्तमेव विदित्वाऽतिमृत्युमेतीत्युच्यते । यस्मादिति ॥ यस्मात् परं पुरुषात् परमुत्कृष्टमपरमन्यन्नास्ति यस्मान्नाणीयोऽणुतरन्न ज्यायो महत्तरं वास्ति वृक्ष इव स्तब्धो निश्चलो दिवि द्योतनात्मनि स्वे महिम्नि तिष्ठत्येकोऽद्वितीयः परमात्मा तेनाऽद्वितीयेन परमात्मना इदं सर्वं पूर्णं नैरन्तर्येण व्याप्तं पुरुषेण पूर्णेन सर्वमिदं सर्वं ॥ ९ ॥

इदानीं ब्रह्मणः पूर्वोक्तकार्यकारणतां दर्शयन् ज्ञानिनाममृतत्वमितरेषाञ्च संसारित्वं दर्शयति । तत इति ॥ तत इदंशब्दवाच्याज्जगत उत्तरतरं कारणं ततोऽप्युत्तरं कार्यकारणविनिर्मुक्तं ब्रह्मेत्यर्थः । तदरूपं रूपादिरहितं अनामयं आध्यात्मिकादितापत्रयरहितत्वात् । य एतद्विदुरमृतत्वेनाऽहमस्मीति अमृता

श्वे॰उ॰ सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः ।
सर्व्वव्यापी स भगवान् तस्मात् सर्व्वगतः शिवः ॥ ११ ॥
महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः ।
सुनिर्म्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः ॥ १२ ॥

---

श्वे॰भा॰ अमरणलधर्म्माणस्ते भवन्ति । अथेतरे ये न विदुर्दुःखमेवापियन्ति ॥ १० ॥

इदानीं तस्यैव सर्व्वात्मत्वं दर्शयति । सर्व्वाननेति ॥ सर्व्वाण्याननानि शिरांसि ग्रीवाश्चास्येति सर्व्वाननशिरोग्रीवः । सर्व्वेषां भूतानां गुहायां बुद्धौ शेत इति सर्व्वभूतगुहाशयः । सर्व्वव्यापी स भगवान् ऐश्वर्य्यादिसमष्टिः । उक्तञ्च ।

ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

भगवति यस्मादेवं तस्मात् सर्व्वगतः शिवः ॥ ११ ॥

किञ्च । महानिति ॥ महान् प्रभुः समर्थो वै निश्चयेन जगदुदयस्थितिसंहारे सत्त्वस्यान्तःकरणस्यैष प्रवर्त्तकः प्रेरयिता । किमर्थमुद्दिश्य सुनिर्म्मलामिमां स्वरूपावस्थानलक्षणां प्राप्तिं परमपदप्राप्तिं ईशान ईशिता । ज्योतिःपरिशुद्धो विज्ञानप्रकाशः । अव्ययोऽविनाशी ॥ १२ ॥

श्वे॰उ॰ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ।
हृदा मन्वीशो मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद् दशाङ्गुलं
॥ १४ ॥

---

श्वे॰भा॰ अङ्गुष्ठमात्रेति ॥ अङ्गुष्ठमात्रोऽभिव्यक्तिस्थानहृदयसुषिरपरिमाणापेक्षया । पुरुषः पूर्णत्वात् पुरिशयनाद्वा । अन्तरात्मा सर्व्वस्यान्तरात्मभूतः स्थितः । सदा जनानां हृदये सन्निविष्टः हृदयस्थेन मनसाऽभिगुप्तः । मन्वीशो ज्ञानेशः । य एतद्विदुरमृतास्ते भवन्ति । पुरुषोऽन्तरात्मेत्युक्तं ॥ १३ ॥

पुनरपि सर्व्वात्मानं दर्शयति । सहस्रशीर्षेति ॥ सर्व्वस्य तावदात्मत्वप्रदर्शनार्थं । उक्तञ्च । अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यत इति । सहस्राण्यनन्तानि शीर्षाण्यस्येति सहस्रशीर्षा । पुरुषः पूर्णः । एवमुत्तरत्र योजनीयं । स भूमिं भुवनं सर्व्वतोऽन्तर्बहिश्च वृत्वा व्याप्यात्यतिष्ठद् अतीत्य भुवनं समधितिष्ठति । दशाङ्गुलं अनन्तमपारमित्यर्थः । अथवा नाभेरुपरि दशाङ्गुलं हृदयं तत्राधितिष्ठति ॥ १४ ॥

श्वे०उ० पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भव्यं ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥
सर्वतः पाणिपादन्तत् सर्वतोऽक्षिशिरोमुखं ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितं ।

---

श्वे०भा० ननु सर्व्वात्मत्वे प्रपञ्चं ब्रह्म स्यात् तद्व्यतिरेकेणाभावादित्याह । पुरुष एवेदमिति ॥ पुरुष एवेदं सर्व्वं । यद्भूतं यच्च भव्यं । यदन्नेनातिरोहति । यदिदं दृश्यते वर्त्तमानं यद्भूतं यच्च भव्यं भविष्यत् । किञ्च । उतामृतत्वस्येशानो अमरणधर्म्मत्वस्य कैवल्यस्य ईशानः । यच्चान्नेनातिरोहति यदन्नेन तस्य ईशानः ॥ १५ ॥

पुनरपि निर्व्विशेषं प्रतिपादयितुं दर्शयति । सर्व्वत इति ॥ सर्व्वतः पाणयः पादाश्चेति सर्व्वतः पाणिपादं तत् । सर्व्वतोऽक्षीणि शिरांसि च मुखानि च यस्य तत् सर्व्वतोऽक्षिशिरोमुखं । श्रुतिः श्रवणमस्येति श्रुतिमत् । लोके निकाये सर्व्वमावृत्य संव्याप्य तिष्ठति । उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का माभूदित्येवमर्थमुत्तरतो मन्त्रः ॥ १६ ॥

सर्व्वेन्द्रियेति ॥ सर्व्वाणि च तानीन्द्रियाणि श्रोत्रादीनीन्द्रियाणि अन्तःकरणपर्य्यन्तानि सर्व्वेन्द्रियग्रहणेन गृह्यन्ते । अन्तःकरणबहिःकरणोपाधिभूतः सर्व्वेन्द्रिय-

श्वे॰उ॰ सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं बृहत्॥१७॥
नवद्वारे पुरे देही हंसो लेलायते बहिः।
वशी सर्व्वस्य लोकस्य स्थावरस्य चरस्य च॥१८॥
अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।

---

श्वे॰भा॰ गुणैरध्यवसायसङ्कल्पश्रवणवदाभासत इति सर्व्वेन्द्रियगुणाभासं। सर्व्वेन्द्रियैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः। ध्यायतीव लेलायतीवेति श्रुतेः। कस्मात् पुनः कारणात्तद्व्यापृतमिवेति गृह्यत इत्याह। सर्व्वेन्द्रियविवर्जितं सर्व्वकरणरहितमित्यर्थः। अतो न च करणव्यापारैर्व्यापृतं तज्ज्ञेयं। सर्व्वस्य जगतः प्रभुमीशानं। सर्व्वस्य शरणं परायणं बृहत् कारणञ्च॥१७॥

किञ्च॥ नवद्वारेति॥ नवद्वारे शिरसि सप्तद्वाराणि द्वे अवाची पुरे देही विज्ञानात्मा भूत्वा कार्य्यकारणोपाधिः सन् हंसः परमात्मा अविद्यात्मकं कार्य्यमिव लेलायते चलति बहिर्विषयग्रहणाय। वशी सर्व्वस्य लोकस्य स्थावरस्य चरस्य च। एवं तावत् सर्व्वात्मकं ब्रह्म प्रतिपादितं॥१८॥

अथेदानीं निर्व्विकारानन्दस्वरूपेणानुदितानस्तमितं ज्ञानात्मनावस्थितं परमात्मानं दर्शयितुमाह। अपाणिपाद इति॥ नास्य पाणिपादावित्यपाणिपादः। अथ

श्वे॰उ॰ स वेत्ति वेद्यं न च तस्याऽस्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तं ॥ १९ ॥
अणोरणीयान् महतो महीयान्
आत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशं ॥ २० ॥

---

श्वे॰भा॰ जवनो दूरगामी । ग्रहीता पाण्याद्यभावेऽपि सर्वव्यापी । पश्यति सर्वमचक्षुरपि सन् । शृणोत्यकर्णोऽपि । स वेत्ति वेद्यं सर्वज्ञत्वाद् अमनस्कोऽपि । न च तस्यास्ति वेत्ता नान्योऽतोऽस्ति द्रष्टेति श्रुतेः । तमाहुरग्र्यं प्रथमं सर्वकारणत्वात् पुरुषं पूर्णं महान्तं ॥१९॥

किञ्च ॥ अणोरणीयानिति॥ अणोः सूक्ष्मादप्यणीयानणुतरः । महतो महत्त्वपरिमाणान् महीयान् महत्तरः । स आत्माऽस्य जन्तोर्ब्रह्मादिस्तम्बपर्यन्तस्य प्राणिजातस्य । गुहायां हृदये निहित आत्मभूतः स्थित इत्यर्थः । तमात्मानं अक्रतुं विषयभोगसङ्कल्परहितमात्मनो महिमानं कर्मनिमित्तवृद्धिक्षयरहितमीशं पश्यत्ययमहमस्मीति साक्षाज्जानाति यः स वीतशोको भवति । केन तर्ह्येवं पश्यति । धातुरीश्वरस्य प्रसादात् । प्रसन्ने हि परमेश्वरे तद्याथात्म्यज्ञानमुत्पद्यते । अथवेन्द्रियाणि धातवः शरीरस्य धारणात् तेषां प्रसादाद्विषयदोष

श्वे॰उ॰ वेदाहमेतमजरं पुराणं
सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य
ब्रह्मवादिनोऽभिवदन्ति नित्यं ॥ २१ ॥
इति श्वेताश्वतरोपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥
॥ ॐ तत् सत् ॐ ॥

---

श्वे॰भा॰ मलापनयनात्। अन्यथा दुर्विज्ञेय आत्मा कामिभिः प्राकृतपुरुषैः ॥ २० ॥

उक्तमर्थं द्रढयितुं मन्त्रदृगनुभवं दर्शयति ॥ वेदाहमेतमिति ॥ वेद जानेऽहमेतमजरं विपरिणामधर्मवर्जितं। पुराणं पुरातनं। सर्वात्मानं सर्वेषामात्मभूतं। सर्वगतं विभुत्वाद् आकाशवद्व्यापकत्वात्। यस्य च जन्मनिरोधं उत्पत्त्यभावं प्रवदन्ति ब्रह्मवादिनो हि नित्यं। स्पष्टोऽर्थः ॥ २१ ॥ इति श्वेताश्वतरोपनिषद्भाष्ये श्रीशङ्करभगवतः कृतौ तृतीयोऽध्यायः ॥ ३ ॥ ॐ तत् सत् ॐ ॥

श्वे॰उ॰ य एकोऽवर्णो बहुधा शक्तियोगाद्
वर्णाननेकान् निहितार्थो दधाति ।
वि चैति चान्ते विश्वमादौ स देवः
स नो बुद्ध्या शुभया संयुनक्तु ॥१॥
तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म तदापस्तत् प्रजापतिः ॥२॥

---

श्वे॰भा॰ गहनत्वादस्यार्थस्य भूयो भूयो वक्तव्य इति चतुर्थोऽध्याय आरभ्यते। य एक इति॥ य एकोऽद्वितीयः परमात्मा। अवर्णो जात्यादिरहितो निर्विशेष इत्यर्थः। बहुधा नानाशक्तियोगाद्वर्णाननेकान् निहितार्थो गृहीतप्रयोजनः स्वार्थनिरपेक्ष इत्यर्थः। दधाति विदधाति आदौ। विचैति व्येति च अन्ते लयकाले च। चशब्दादेति मध्ये एति यस्मिन् विश्वं स देवो द्योतनस्वभावो विज्ञानैकरस इत्यर्थः। स नोऽस्मान् शुभया बुद्ध्या संयुनक्तु संयोजयतु। यस्मात् स एव स्रष्टा तस्मिन्नेव च लयं तस्मात् स एव सर्वं॥ १॥

न ततो विभक्तमस्तीत्याह मन्त्रत्रयेण। तदेवेति॥ तदेवात्मतत्त्वमग्निः। तदादित्यः। एवशब्दः सर्वत्र सम्बध्यते। तदेव शुक्रमिति दर्शनात्। शेषमृजु। तदेव शुक्रं शुद्धं अन्यदपि दीप्तिमन्नक्षत्रादि तद्धिरण्यगर्भ आत्मा तदापः स प्रजापतिर्विराडात्मा॥ २॥

श्वे॰उ॰ त्वं स्त्री त्वं पुमानसि त्वं
कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चयसि
त्वं जातो भवसि विश्वतो मुखः ॥ ३ ॥
नीलः पतङ्गो हरितो लोहिताक्षस्
तडिद्गर्भ ऋतवः समुद्राः ।
अनादिमत्त्वं विभुत्वेन वर्तसे
यतो जातानि भुवनानि विश्वा ॥ ४ ॥
अजामेकां लोहित*कृष्णवर्णां
बह्वीः प्रजाः सृजमानां सरूपां ।

---

श्॰भा॰ त्वमेवेति सर्वत्र सम्बध्यते स्पष्टो मन्त्रार्थः ॥ ३ ॥

नीलेति ॥ त्वमेव नीलः पतङ्गो भ्रमरः । पतनाद्गच्छतीति पतङ्गः । हरितो लोहिताक्षः शुकादिनिर्दिष्टाः प्राणिनस्त्वमेवेत्यर्थः । तडिद्गर्भो मेघः । ऋतवः समुद्राः । यस्मात्त्वमेव सर्वस्यात्मभूतस्तस्मादनादिस्त्वमेव । त्वमेवाद्यन्तशून्यः । विभुत्वेन व्यापकत्वेन यतो जातानि भुवनानि विश्वानि ॥ ४ ॥

इदानीं तेजोऽबन्नलक्षणां प्रकृतिं छान्दोग्योपनिषत्प्रसिद्धामजारूपकल्पनया दर्शयति । अजामेकामिति ॥ अजां प्रकृतिं लोहितशुक्लकृष्णां तेजोऽबन्नलक्षणां बह्वीः

---

* शुक्लकृष्णामिति शङ्कराचार्यसम्मतः पाठः ।

श्वे॰उ॰ अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोग्यामजोऽन्यः ॥ ५ ॥
द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्नन्योऽभिचाकशीति ॥ ६ ॥

---

श्वे॰भा॰ प्रजाः सृजमानामुत्पादयन्तीं ध्यानयोगानुगतदृष्टां देवात्मशक्तिं सरूपां समानाकारां । अजो ह्येको विज्ञानात्मा । अनादिकामकर्म्मविनाशितः स्वयमात्मानं मन्यमानो जुषमाणः सेवमानोऽनुशेते भजते । अन्य आचार्य्योपदेशप्रकाशावसादिताविद्यान्धकारो जहाति त्यजति ॥ ५ ॥

इदानीं सूत्रभूतौ परमार्थवस्त्ववधारणार्थमुपन्यस्येते द्वा इति ॥ द्वा द्वौ विज्ञानपरमात्मानौ । सुपर्णा सुपर्णौ शोभनपतनौ शोभनगमनौ सुपर्णौ पक्षिसामान्याद्वा । तौ पर्णौ सयुजा सयुजौ सर्व्वदा संयुक्तौ । सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ । एवम्भूतौ सन्तौ समानमेकं वृक्षं वृक्षमिवोच्छेदसामान्याद्वृक्षं शरीरं परिषस्वजाते परिष्वक्तवन्तौ समाश्रितवन्तावेतौ । तयोरन्योऽविद्याकामवासनाश्रयलिङ्गोपाधिर्व्विज्ञानात्मा पिप्पलं कर्म्मफलं सुखदुःखलक्षणं स्वादु

श्वे॰उ॰ समाने वृक्षे पुरुषो निमग्नो
अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य

---

श्वे॰भा॰ अनेकविचित्रवेदनास्वादरूपमत्ति उपभुङ्क्ते । विवेकतो ऽनश्नन्नन्यो नित्यशुद्धबुद्धमुक्तस्वभावः परमेश्वरोऽभिचाकशीति सर्व्वमपि पश्यन्नास्ते ॥ ६ ॥

तत्रैवं सति समाने वृक्षे शरीरे पुरुषो भोक्ता अविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सर्व्वो जलनिमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहं अमुष्य पुत्रो ऽस्य नप्ता कृशः स्थूलो गुणवान् निर्गुणः सुखी दुःखीत्येवंप्रत्ययो नान्योऽस्मादिति जायते म्रियते संयुज्यते च सम्बन्धिबान्धवैः। अतोऽनीशया न कस्यचित् समर्थोऽहं । पुत्रो मम नष्टो मृता मे भार्य्या किं मे जीवितेन इत्येवं दीनभावोऽनीशया शोचति सन्तप्यते मुह्यमानो ऽनेकैरनर्थप्रकारैरविवेकतया विचित्रतामापद्यमानः स एव प्रेततिर्यङ्मनुष्यादियोनिष्वापतन् दुःखमापन्नः कदाचिदनेकजन्मशुद्धधर्मसञ्चयननिमित्तं केनचित् परमकारुणिकेन दर्शितयोगमार्गोऽहिंसासत्यब्रह्मचर्यसर्व्वत्यागशमादिसम्पन्नो जुष्टं सेवितमनेकयोगमार्गैर्यदा यस्मिन् काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणादिलक्षणमसंसारिणं अश-

श्वे॰उ॰ महिमानमिति वीतशोकः ॥ ७ ॥

ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते ॥ ८ ॥
छन्दांसि यज्ञाः क्रतवो व्रतानि

---

श्वे॰भा॰ नायाद्यसंस्पृष्टं सर्व्वान्तरं परमात्मानमीशं अयमहमस्मि आत्मा सर्व्वस्य समः सर्व्वभूतान्तरस्थो नेतरो ऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानं चेति जगद्रूपमस्यैव महिमा परमेश्वरस्येति यदैवं पश्यति तदा वीतशोको भवति सर्व्वस्माच्छोकसागराद्विमुच्यते कृतकृत्यो भवतीत्यर्थः। अथवा जुष्टं यदा पश्यत्यन्यमीशं अस्यैव प्रत्यगात्मनो महिमानमिति तदा वीतशोको भवति ॥ ७ ॥

इदानीं तद्विदः कृतार्थतां दर्शयति। ऋच इति॥ वेदत्रयनिधौ वेदत्रयवेद्ये अक्षरे परमे व्योमन् व्योम्न्याकाशकल्पे यस्मिन् देवा अधि विश्वे निषेदुः आश्रितास्तिष्ठन्ति। यस्तं परमात्मानं न वेद किमृचा करिष्यति। य इत्तद्विदुस्त इमे समासते कृतार्थास्तिष्ठन्ति ॥ ८ ॥

इदानीं तस्यैवाक्षरस्य मायोपाधिकजगत्स्रष्टृत्वं तन्निमित्तत्वं भेदेन दर्शयति। छन्दांसीति॥ छन्दांसि

श्वे॰उ॰भूतं भव्यं यच्च वेदा वदन्ति ।
यस्मान् मायी सृजते विश्वमेतत्
तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ ९ ॥
मायान्तु प्रकृतिं विद्यान् मायिनन्तु महेश्वरं।

---

श्वे॰भा॰ऋग्यजुःसामाथर्व्वाङ्गिरसाख्या वेदा वेदयज्ञादयो यूपसम्बन्धरहितविहितक्रियाश्च । यज्ञा ज्योतिष्टोमादयः क्रतवः । व्रतानि चान्द्रायणादीनि । भूतं अतीतं । भव्यं भविष्यत् । यदि तयोर्म्मध्यवर्त्ति वर्त्तमानं सूचयति । चशब्दः समुच्चयार्थः । यज्ञादिसाध्ये कर्म्मणि प्रपञ्चे भूतादौ च वेदा एव मानमित्येतद् वदन्ति । यच्छब्दः सर्व्वत्र सम्बध्यते । अस्मात् प्रकृताक्षराद् ब्रह्मणः पूर्व्वोक्तं सर्व्वमुत्पद्यत इति सम्बन्धः । अविकारिब्रह्मणः कथं प्रपञ्चोपादानत्वमित्यत आह । मायीति ॥ कूटस्थव्यापिस्वशक्तिवशात् सर्व्वस्रष्टृत्वमुपपन्नमित्येतत् । विश्वं पूर्व्वोक्तप्रपञ्चं सृजते उत्पादयति । स्वमायया कल्पिते तस्मिन् भूतादिप्रपञ्चे माययैवाऽन्यो वसन् सन्निरुद्धः सम्बद्धः सन् अविद्यावशगो भूत्वा संसारसमुद्रे भ्रमतीत्यर्थः । पूर्व्वोक्तायाःप्रकृतेर्म्मायात्वं तदधिष्ठातृसच्चिदानन्दरूपब्रह्मणस्तदुपाधिवशान्मायित्वञ्च ॥ ९ ॥

चिद्रूपस्य मायावशात् कल्पितावयवभूतैः कार्य्यकारणसङ्घातैः सर्व्वं भूरादीदं परिदृश्यमानं जग-

श्वे॰उ॰ तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥१०॥
यो योनिं योनिमधितिष्ठत्येको
यस्मिन्निदं स च विचैति सर्वं ।

---

श्वे॰भा॰ ह्यात्मस्थेत्याह । मायान्त्विति ॥ जगत्प्रकृतित्वेनाधस्तात् सर्व्वत्र प्रतिपादिता प्रकृतिर्मायैवेति विद्याद्विजानीयात् । तुशब्दोऽवधारणार्थः । मायिनं मायावीश्वरश्चेति महेश्वरन्तं मायिनं मायायाः सत्तास्फूर्त्यादिप्रदतया अधिष्ठानत्वेन प्रेरयितारमेव विद्यादिति पूर्व्वेण सम्बन्धः । तस्य प्रकृतस्य परमेश्वरस्य रज्ज्वाद्यधिष्ठानेषु कल्पितसर्पादिस्थानीयैर्मायिकैः स्वावयवैरध्यासद्वारा इदं भूरादि सर्व्वं व्याप्तमेव पूर्णमित्येतत् । तुशब्दस्त्ववधारणार्थः ॥ १० ॥

मायातत्कार्य्यादियोनेः कूटस्थस्य स्वशक्तितोऽधिष्ठातृत्वं वियदादिकार्य्याणामुत्पत्तिहेतुत्वं तेनैव सर्व्वाधिष्ठातृत्वोपलक्षितसच्चिदानन्दवपुषा ब्रह्मात्मैकत्वज्ञानान्मुक्तिञ्च दर्शयति । यो योनिमिति ॥ यो मायाविनिर्मुक्तानन्दैकघनः परमेश्वरः । योनिं योनिमिति वीप्सया मूलप्रकृतिर्माया अवान्तरप्रकृतयश्च सूचिताः । ताः प्रकृतीः सत्तास्फूर्त्तिप्रदत्वेनाधिष्ठाय तिष्ठति अन्तर्य्यामिरूपेण । य आकाशे तिष्ठन्नित्यादिश्रुतेः । एकोऽद्वितीयः । यस्मिन्मायाद्यधिष्ठातरीश्वरे इदं सर्व्वं जग-

श्वे॰उ॰ तमीशानं वरदं देवमीड्यं
निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ॥
यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं
स नो बुद्ध्या शुभया संयुनक्तु ॥ १२ ॥

---

श्वे॰भा॰ दुदयसंहारकाले समेति सङ्गच्छते लयं प्राप्नोति । पुनः सृष्टिकाले विविधमेति आकाशादिरूपेण नाना भवति । तं प्रकृतमधिष्ठातारमीशानं नियन्तारं । वरदं मोक्षप्रदं । देवं द्योतनात्मकं । ईड्यं वेदादिस्तुत्यं निचाय्य निश्चयेन ब्रह्मात्मभावेनापरोक्षीकृत्य । सुषुप्त्यादौ प्रत्यक्षोक्तता या सर्व्वोपरमलक्षणा सर्व्वजनैः शान्तिर्यैरमा दर्शिता तां प्रसिद्धामिमां शान्तिं सर्व्वदुःखविनिर्मुक्तः सुखैकतानस्वरूपां मुक्तिमिति यावत् । गुरूपदिष्टतत्त्वमादिवाक्यजन्यसुखज्ञानेनाविद्यातत्कार्यादिविभ्रमायानिवृत्त्याऽत्यन्तं पुनरावृत्तिरहितं यथा भवति तथा एति एकरसो भवतीत्येतत् ॥ ११ ॥

सूत्रात्मानं प्रत्यविरतमभिमुखतया वीक्षन्तं परमेश्वरं प्रति अखण्डिततत्त्वज्ञानसिद्ध्ये प्रार्थनामाह । यो देवानामिति ॥ पूर्व्वमेवास्य प्रतिपादितोऽर्थः ॥ १२ ॥

श्वे॰उ॰ यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः ।
य ईशेऽस्य द्विपदश्चतुष्पदः कस्मै
देवाय हविषा विधेम ॥ १३ ॥
सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये
विश्वस्य स्रष्टारमनेकरूपं ।
विश्वस्यैकं परिवेष्टितारं

---

श्वे॰भा॰ ब्रह्मप्रमुखानां देवानां स्वामितामाकाशादिलोकाश्रयत्वं प्रमात्रादीनां नियन्तृत्वं बुद्धिशुद्धिद्वारा सम्यक्ज्ञानसिद्ध्यर्थं मुमुक्षुभिः प्रार्थ्यमानस्य परमेश्वरस्याह । यो देवानामधिप इति ॥ यस्तः परमेश्वरो देवानां ब्रह्मादीनामधिपः स्वामी । यस्मिन् परमेश्वरे सर्व्वकारणे भूरादयो लोका अधिश्रिता अधि उपरि श्रिता आश्रिता इति यावत् । यस्तः परमेश्वरः । अस्य द्विपदो मनुष्यादेश्चतुष्पदः पश्वादेश्चेशे ईष्टे । तकारलोपश्छान्दसः । कस्मै कायानन्दरूपाय । स्मैभावोऽपि छान्दसः । देवाय द्योतमानात्मने तस्मै हविषा चरुपुरोडाशादिद्रव्येण विधेम परिचरेम । विधेः परिचरणकर्म्मण एतद्रूपं ॥ १३ ॥

परस्यातिसूक्ष्मत्वं जगन्मध्ये साक्षित्वेनावस्थितत्वं निखिलजगत्स्रष्टृत्वं सर्व्वात्मकत्वं तत्त्वादर्शिजनानां मुक्तिहेतुत्वमेतद्ब्रह्मणोऽध्यायात् प्रतिपादितं यद्यपि तथापि बुद्धिसौकर्य्यार्थं पुनरप्याह । सूक्ष्मेति ॥ पृथिव्याद्यव्याकृतान्त-

श्वे॰उ॰ ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥

स एव काले भुवनस्यास्य गोप्ता
विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च
तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ १५ ॥

---

श्वे॰भा॰ उत्तरोत्तरं सूक्ष्मसूक्ष्मतरत्वमपेक्ष्येश्वरस्य तदपेक्षया सूक्ष्मतमत्वमाह । सूक्ष्मातीति ॥ कलिलस्याऽविद्यातत्-कार्य्यात्मकदुर्गस्य गहनस्य मध्ये अन्तःसाक्षिरूपेणाव-स्थितत्वं सनकादिभिर्ब्रह्मादिदेवैश्चाधिकारिपुरुषैरध्या-त्मतया प्राप्यत्वं साधनचतुष्टयादियुक्तास्मदादिना ॥१४॥

मोक्षसिद्धिश्चाह स एवेति ॥ स एव प्राप्तकाले अतीतकल्पेषु जीवसञ्चितकर्मपरिपाकसमये भुवनस्य गोप्ता तत्तत्कर्मानुगुणतया रक्षिता । विश्वाधिपः विश्वस्वामी । सर्व्वभूतेषु गूढो ब्रह्मादिस्तम्बपर्य्यन्तेषु साक्षिमात्रतयाऽवस्थितः । यस्मिन् चिदानन्दवपुषि परे युक्ता ऐक्यं प्राप्ताः । ते के । ब्रह्मर्षयः सन-कादयः । तमेवेश्वरं ज्ञात्वा ब्रह्माहमस्मीत्यपरोक्षी-कृत्य मृत्युपाशान् मृत्युरविद्या तमोरूपादयश्च पाशाः पशयन्त इति पाशास्तान् । मृत्युर्वै मर इति श्रुतेः । तत् कार्य्यकामकर्म छिनत्ति नाशयति ऐक्यरूपस्वप्रकाशा-ग्निना दहतीत्यर्थः ॥ १५ ॥

श्वे॰उ॰ घृतात् परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा शिवं सर्व्वभूतेषु गूढं ।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥ १६ ॥
एष देवो विश्वकर्म्मा महात्मा
सदा जनानां हृदये सन्निविष्टः ।

---

श्वे॰भा॰ परस्यात्यन्तातिसूक्ष्मत्वमानन्दातिशयवत्त्वं नि-
र्दोषवत्त्वं जीवेष्विति सूक्ष्मतया स्वरूपेणावस्थानत्वं सर्व्व-
स्यापि सत्तादिप्रदतया व्यापित्वं तदेकत्वज्ञानात् पाश-
हानिञ्च दर्शयति । घृतादिति ॥ घृतोपरि विद्यमानं
मण्डं सारस्वादुतामतिप्रीतिविषयो यथा तथा मुमुक्षूणा-
मतिसाररूपानन्दप्रदत्वेन निरतिशयप्रीतिविषयः पर-
मात्मा तद्वद्घृतसारवदानन्दरूपेणात्यन्तसूक्ष्मं ज्ञात्वा
शिवमित्येतद्व्याख्यातं । सर्व्वभूतेषु गूढं ब्रह्मादिस्तम्बपर्य्य-
न्तेषु जन्तुषु कर्म्मफलभोगसाक्षित्वेन प्रत्यक्तया वर्त्तमा-
नेऽपि नैसर्गिकत्वेनेश्वरभावं । उत्तरार्द्धं व्याख्यातं ॥१६॥
निर्भेदसुखैकतानात्मनो विश्वकर्तृत्वं तद्व्यापित्वं ब्रह्मा-
दिभिरात्मत्वमोक्षरूपत्वाद्य । एष इति ॥ एषः प्रकृतो देवो
द्योतनात्मकः । विश्वकर्म्मा महदादिविश्वं कर्म्म क्रियत
इति कर्म्म मायावेशाद् विश्वरूपकार्य्यमस्येति विश्वकर्म्मा ।
सर्व्वांश्चाप्याप्नोतीति महात्मा सर्व्वव्यापीत्यर्थः । सदा

श्वे॰उ॰ हृदा मनीषा मनसाऽभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥
यदाऽतमस्तन्न दिवा न रात्रि-
र्न्न सन्नचासच्छिव एव केवलः ।
तदक्षरं तत् सवितुर्व्वरेण्यं

---

श्वे॰भा॰ सर्व्वदा जनानां हृदये परमे व्योम्नि हृदाकाशे जलाद्यु-
पाधिषु सूर्य्यप्रतिबिम्बवत्संनिविष्टः सम्यक्स्थित इत्येतत् ।
स एव साक्षिरूपेण हृदा हृञ् हरण इति स्मरणाद्धृ-
रतीति हृत् तेन हृदा नेति नेतीतिनिषेधोपदेशेन ।
मनीषा मयं पुरुषार्थोऽयमात्मा पुरुषार्थोऽयमनात्माऽय-
मनात्मेत्येतया विवेकबुद्ध्या । मननापि विचारसाहैक-
लक्षणेन च । अभिक्लृप्तः प्रकाशितोऽखण्डैकरसत्वेना-
भिव्यक्त इत्येतत् । ये जना साधनचतुष्टयसम्पन्नाः
सन्तस्तम एतत्तत्त्वमस्यादिवाक्यप्रतिपाद्यैकलक्ष्यमख-
ण्डैकरसमिति यावत् । विदुः ब्रह्माहमस्मीत्यपरोक्षी-
कुर्य्युस्ते यथोक्तब्रह्मविदोऽमृता भवन्ति अमरणधर्म्माणः
पुनरावृत्तिरहिता भवन्तीत्यर्थः ॥ १७ ॥

कालत्रयेऽपि मुक्तौ प्रियादौ च परमात्मा कूटस्थ
इति मिथ्याध्यासतस्तयोरपि भ्रान्त्या सद्वितीयत्वा-
वभासः । वस्तुतस्तु सदा निर्भेद एवेत्याह । यदेति ॥
यदा यस्यामवस्थायामतमो न तमोऽस्तीत्यतमः तत्त-

मू॰उ॰प्रज्ञा च तस्मात् प्रसृता पुराणी ॥ १८ ॥
नैनमूर्द्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः॥१९॥
न सन्दृशे तिष्ठति रूपमस्य

---

श्वे॰भा॰मादिवाक्यजन्यज्ञानेन दीपस्थानीयेन दग्धाविद्यातत्कार्य्यरूपतमस्कत्वात् तदा तत्काले न दिवा दिवारोपोऽपि नास्ति न रात्रिस्तदारोपोऽपि नास्तीति सर्व्वथानुपपन्नः। न सन् सदारोपोऽपि। नासन् असदारोपोऽपि। तर्हि तत्त्वं सर्व्वथा शून्यमेव जातमिति बौद्धमतविशेषमाशङ्क्याह। शिव एवेति॥ शिव एव शुद्धस्वभावो निर्व्विकल्पः शून्यमेवेति निपातार्थः। केवलोऽविद्यादिविकल्पशून्यः। तदक्षरं तदुक्तस्वरूपं न क्षरतीत्यक्षरं नित्यं तत् तत्पदलक्ष्यं। सवितुरित्यादिमण्डलाभिमानिनो वरेण्यं सम्भजनीयं श्रीगुरूपदेशात् तत्त्वमादिवाक्यजा बुद्धिः। चकार एवकारार्थः। तस्माच्छुद्ध-त्वचेतोः प्रसृता नित्या विवेकादिमत्सु सत्रादिषु प्राप्ता पूर्णत्वाकारेण। पुराणी ब्रह्माणमारभ्य परम्परया प्राप्ता अनादिसिद्धा॥१८॥

कूटस्थस्य ब्रह्मण ऊर्द्ध्वादिषु दिक्षु केनाप्यपरिग्राह्यत्वमद्वितीयत्वात् केनाप्यतुलितत्वं कालदिगाद्यनवच्छिन्नयशोरूपत्वञ्चाह। नैनमिति॥ एनं प्रकृतं

श्वे०उ० न चक्षुषा पश्यति कश्चनैनं ।
हृदा हृदिस्थं मनसा य एन-
मेवं विदुरमृतास्ते भवन्ति ॥ २० ॥

---

श्वे०भा० अपरिच्छिन्नरूपत्वान्निरंशत्वान्निरवयवत्वाच्च ऊर्द्ध्वादिषु दिक्षु कश्चिदपि न परिजग्रभत् परिग्रहीतुं न शक्नुयात् । तस्य सर्व्वेश्वरस्याखण्डसुखानुभवत्वादेतादृशद्वितीयाभावात् प्रतिमा उपमा नास्ति । यस्य नाम महद्यशो यस्येश्वरस्य नाम अभिधानं महद्दिगाद्यवच्छिन्नं सर्व्वत्र परिपूर्णं यशः कीर्त्तिः ॥१९॥

ईश्वरस्येन्द्रियाद्यविषयतां प्रत्यग्रूपतां तदैक्यज्ञानं मोक्षताञ्चाह । न सन्दृश इति ॥ अस्य प्रकृतेश्वरस्य रूपं स्वरूपं रूपादिरहितं निर्व्विशेषं स्वप्रकाशाखण्डसुखानुभवं सन्दृशे चक्षुरादिग्रहणयोग्यप्रदेशे न तिष्ठति तद्विषयो न भवतीत्येतत् । इन्द्रियागोचरत्वादेवैतं प्रकृतं चक्षुरित्युपलक्षणं । सर्व्वेन्द्रियैरपि कश्चन कोऽपि न पश्यति तद्विषयतया ग्रहीतुं न शक्नुयात् । यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यतीत्यादिश्रुतेः । हृदा शुद्धबुद्ध्या । एतद्व्याख्यातं मनसेति । हृदिस्थं हृदाकाशगुहास्थं प्रत्यक्तया तत्रावस्थितं । ये साधनचतुष्टयादियुक्ताः सन्न्यासिनो योग्याधिकारिण एवं प्रकृतं प्रत्यगात्मानमेवमित्थं ब्रह्माहमस्मीत्यपरोक्षेण विदुर्जानन्ति तेनापरोक्षीकरणमहिम्नाऽमृता भवन्ति अमरणधर्म्माणो

म्°उ°अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते ।
रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यं॥२१॥
मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्रभामितोऽवधी-

श्वे°भा°भवन्ति । मरणहेतुविद्यादेस्तत्त्वज्ञानाग्निना दग्धत्वात् पुनर्देहान्तरं न भजन्तीत्यर्थः ॥ २० ॥

इदानीं तत्प्रसादादेव इष्टानिष्टप्राप्तिपरिहाराविति मत्वा तमेव परमेश्वरं प्रार्थयते मन्त्रद्वयेन । अजात इति । इतिशब्दो हेत्वर्थः । यस्मात्त्वमेवाजातो जन्मजराशनायापिपासाधर्म्मवर्ज्जितः । इतरत् सर्वं विनाशि दुःखान्वितं । तस्मात्जन्मजरामरणाशनायापिपासाशोकमोहान्वितात् संसाराद्भीरुर्भीतः सन् कश्चिदेक एव परतन्त्रस्त्वामेव शरणं प्रपद्ये मादृशो वा कश्चित् प्रपद्यत इति प्रथमपुरुषमन्वधीयते। हे रुद्र यत्ते दक्षिणं मुखं उत्साहजननं ध्यातमाह्लादकरमित्यध्याहार्य्यं । अथवा दक्षिणस्यां दिशि भवं दक्षिणं मुखं तेन मां पाहि नित्यं सर्व्वदा ॥ २१ ॥

किञ्च ॥ मा न इति ॥ मा रीरिष इति सर्व्वत्र सम्बध्यते। मा रीरिषः। रेषणं मरणं विनाशं मा कार्षीः। नोऽस्माकं तोके पुत्रे तनये पौत्रे न आयुषि । मा नो गोषु मा नो ऽश्वेषु मा रीरिषः । ये चास्माकं वीरा विक्र-

॰उ॰ हविष्मन्तः सदसि त्वा हवामहे ॥ २२ ॥

इति श्वेताश्वतरोपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥

द्वे अक्षरे ब्रह्मपरे त्वनन्ते
विद्याऽविद्ये निहिते यत्र गूढे ।
क्षरन्त्वविद्या ह्यमृतं तु विद्या
विद्याविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥

---

॰भा॰ मन्तो मत्यास्तान् हे रुद्र भावितः क्रोधितः सन्नवधीः । कस्मात् यस्माद्धविष्मन्तो हविषा युक्ताः सदसि त्वा हवामहे अस्मिन् सदसि त्वामाह्वयाम इत्यर्थः ॥ २२ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये चतुर्थोऽध्यायः ॥ ४ ॥ ॐ तत्सत् ॐ ॥

चतुर्थाध्यायशेषमपूर्वार्थं प्रतिपादयितुं पञ्चमोऽध्याय आरभ्यते । द्वे अक्षर इत्यादिना ॥ द्वे विद्याऽविद्ये यस्मिन्नक्षरे ब्रह्मणो हिरण्यगर्भात् परे ब्रह्मपरे परस्मिन् वा ब्रह्मणि । अनन्ते देशतः कालतो वस्तुतो वा अपरिच्छिन्ने । यत्र यस्मिन् द्वे विद्याऽविद्ये निहिते स्थापिते गूढेऽनभिव्यक्ते । विद्याऽविद्ये विविच्य दर्शयति । क्षरन्त्वविद्या क्षरणहेतुः संसृतिकारणं । अमृतन्तु विद्या मोक्षहेतुः । यस्तु पुनर्विद्याऽविद्ये ईशते नियमयति स ताभ्यामन्यस्तत्साक्षित्वात् ॥ १ ॥

श्वे॰उ॰ यो योनिं योनिमधितिष्ठत्येको
विश्वानि रूपाणि योनीश्च सर्वाः।
ऋषिं प्रसूतं कपिलं यस्तमग्रे

---

श्वे॰भा॰ कोऽसावित्याह। यो योनिमिति॥ यो योनिं योनिं स्थानं स्थानं यः पृथिव्यां तिष्ठन्नित्यादिनोक्तानि पृथिव्यादीनि अधितिष्ठति नियमयति। एको ऽद्वितीयः परमात्मा। विश्वानि रोहितादीनि रूपाणि योनीश्च प्रभवस्थानानि अधितिष्ठति। ऋषिं सर्व्वज्ञमित्यर्थः। कपिलं कनकं कपिलवर्णं प्रसूतं स्वेनैवोत्पादितं। हिरण्यगर्भं जनयामास पूर्व्वमित्यस्यैव जन्मश्रवणात्। अन्यस्य वा श्रवणात्। उत्तरत्र। यो ब्रह्माणं विदधाति पूर्व्वं। यो वै वेदांश्च प्रहिणोति तस्मा इति वक्ष्यमाणत्वात्। कपिलोऽग्रज इति पुराणवचनात्। कपिलो हिरण्यगर्भो वा निर्द्दिश्यते।

कपिलर्षिर्भगवतः सर्व्वभूतस्य वै किल।
विष्णोरंशो जगन्मोहनाशाय समुपागतः॥
कृते युगे परं ज्ञानं कपिलादिस्वरूपधृक्।
ददाति सर्व्वभूतात्मा सर्व्वस्य जगतो हितं॥
त्वं शक्रः सर्व्वदेवानां ब्रह्मा ब्रह्मविदामसि।
वायुर्बलवतां देवो योगिनां त्वं कुमारकः॥
ऋषीणाञ्च वसिष्ठस्त्वं व्यासो वेदविदामसि।
साङ्ख्यानां कपिलो देवो रुद्राणामसि शङ्करः॥

श्वे॰उ॰ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत् ॥ २ ॥
एकैकं जालं बहुधा विकुर्व्व-
न्नस्मिन् क्षेत्रे संहरत्येष देवः ।
भूयः सृष्ट्वा यतयस्तथेशः
सर्व्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥
सर्व्वा दिश ऊर्द्धमधश्च तिर्य्यक्
प्रकाशयन् भ्राजते यद्वनड्वान् ।

---

श्वे॰भा॰इति परमर्षिः प्रसिद्धः । तमस्तदाभीस्तु भुवनमस्मिन् प्रवर्त्तते कपिलं कवीनां । स षोडशाख्यो पुरुषश्च विश्वो-र्विराजमानं तमसः परस्तादिति । श्रूयते मुण्डकोपनि-षदि स एव वा कपिलः प्रसिद्धः । अग्रे सृष्टिकाले यो ज्ञानैर्धर्म्मज्ञानवैराग्यैश्वर्य्यैर्बिभर्त्ति बभार जायमानञ्च पश्येदपश्यदित्यर्थः ॥ २ ॥

किञ्च । एकैकमिति ॥ सुरनरतिर्य्यगादीनां सृजति जालमेकैकं प्रत्येकं बहुधा नानाप्रकारं विकुर्व्वन् सृष्टि-कालेऽस्मिन् मायात्मके क्षेत्रे । संहरत्येष देवः । भूयः पुनर्यो लोकानां तयोर्मरीच्यादयस्तान् सृष्ट्वा तथा । यथा पूर्व्वस्मिन् कल्पे सृष्टवानीशः सर्व्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥

किञ्च ॥ सर्व्वा दिश इति ॥ सर्व्वा दिशः प्राच्याद्या ऊर्द्धमुपरिष्टादधश्चाधस्तात् तिर्य्यक् पार्श्वदिशश्च प्रकाश-

श्वे॰उ॰ एवं स देवो भगवान् वरेण्यो
योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥
यच्च स्वभावं पचति विश्वयोनिः
पाच्यांश्च सर्वान् परिणामयेद्यः ।
सर्वमेतद्विश्वमधितिष्ठत्येको
गुणांश्च सर्वान् विनियोजयेद्यः ॥ ५ ॥

---

श्वे॰भा॰ यत् स्वात्मचैतन्यज्योतिषा प्रकाशते भ्राजते दीप्यते ज्योतिषा यत् च अनन्तरम् यददित्यर्थः । यथाऽनड्वानादित्यो जगत्प्रकाशनभावने युक्तः । एवं स देवो द्योतनस्वभावो भगवानैश्वर्य्यादिसमन्वितः । वरेण्यो वरणीयः सम्भजनीयः । निष्कारणं कृत्स्नजगतःस्वभावान् स्वात्मभूतान् पृथ्व्यादीन् भावान् अथवा कारणस्वभावान् पृथिव्यादीनधितिष्ठति नियमयति । एकोऽद्वितीयः परमात्मा ॥ ४ ॥

यच्च स्वभावमिति ॥ यच्च यश्चेति लिङ्गव्यत्ययः । स्वभावं यद्धर्म्मैराप्यं पचति निष्पादयति विश्वस्य जगतो योनिः । पाच्यांश्च पाकयोग्यान् पृथिव्यादीन् परिणामयेद्यः । सर्व्वमेतद्विश्वमधितिष्ठति नियमयत्येकः । गुणांश्च सत्त्वरजस्तमोरूपान् विनियोजयेद्यः । एवंलक्षणः ॥ ५ ॥

श्वे॰उ॰ तद्वेदगुह्योपनिषत्सु गूढं
तद्ब्रह्मा वेदते ब्रह्मयोनिं ।
ये पूर्वदेवा ऋषयश्च तद्विदुस्
ते तन्मया अमृता वै बभूवुः ॥ ६ ॥
गुणान्वयो यः फलकर्म्मकर्त्ता
कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
प्राणाधिपः सञ्चरति स्वकर्म्मभिः ॥ ७ ॥

---

श्वे॰भा॰ किञ्च ॥ वेदगुह्य इति ॥ तत् प्रकृतमात्मस्वरूपं वेदानां गुह्योपनिषदो वेदगुह्योपनिषदस्तासु वेदगुह्योपनिषत्सु गूढं संवृतं ब्रह्मा हिरण्यगर्भो वेदते जानाति ब्रह्मयोनिं वेदप्रमाणकमित्यर्थः । अथवा ब्रह्मणो हिरण्यगर्भस्य योनिं वेदस्य वा ये पूर्वदेवा रुद्रादय ऋषयश्च वामदेवादयस्ते तद्विदुस्ते तन्मयास्तदात्मभूताः सन्त अमृता अमरणधर्माणो बभूवुः । तथेदानीन्तनोऽपि तमेव विदित्वाऽमृतो भवतीति वाक्यशेषः । एतावत्पदार्थ उपवर्णितः ॥ ६ ॥

अथेदानीं त्वंपदार्थमुपवर्णयितुमुत्तरे मन्त्राः प्रस्तूयन्ते । गुणान्वय इति ॥ गुणैः कर्मज्ञानकृतवासनामयैरन्वयो यस्य सोऽयं गुणान्वयः । फलार्थस्य कर्मफलस्य स एवोपभोक्ता । स विश्वरूपो नानारूपः कार्यकार-

श्वे॰उ॰ अङ्गुष्ठमात्रो रवितुल्यरूपः
सङ्कल्पाहङ्कारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव
आराग्रमात्रोऽप्यपरोऽपि दृष्टः ॥ ८ ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥

---

श्वे॰भा॰ पौरुषितत्वात् । त्रयः सत्त्वादयो गुणा अस्येति त्रिगुणः । त्रयो देवयानादयो मार्गभेदा अस्येति त्रिवर्त्मा । धर्माधर्मज्ञानमार्गभेदा अस्येति प्राणस्य पञ्चवृत्तेरधिपः सञ्चरति । कैः । स्वकर्मभिः ॥ ७ ॥

अङ्गुष्ठमात्रोऽङ्गुष्ठपरिमितहृदयसुषिरापेक्षया । रवितुल्यरूपो ज्योतिःस्वरूप इत्यर्थः । सङ्कल्पाहङ्कारादिना समन्वितः । बुद्धेर्गुणेनात्मगुणेन च जरादिना । उक्तं जरामृत्यू शरीरस्येति । आराग्रमात्रः प्रतोदाग्रप्रोतलोहकण्टकाग्रमात्रोऽपरोऽपि ज्ञानात्मा दृष्टोऽवगतः । अपिशब्द एकः सम्भावनायां अपरोऽप्यौपाधिको जलसूर्य इव जीवात्मा सम्भावित इत्यर्थः ॥ ८ ॥

पुनरपि दृष्टान्तान्तरेण दर्शयति ॥ वालाग्रेति ॥ वालाग्रस्य शतकृत्वो भेदमापादितस्य यो भागस्तस्यापि शतधा कल्पितस्य भागो जीवः स विज्ञेयः । लिङ्ग-

श्वे•उ•नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते ॥ १० ॥
सङ्कल्पनस्पर्शनदृष्टिमोहै-
र्ग्रासाम्बुवृष्ट्यात्मविवृद्धजन्म ।
कर्म्मानुगान्यनुक्रमेण देही
स्थानेषु रूपाण्यभिसम्प्रपद्यते ॥ ११ ॥

---

श्वे•भा•ख्यातिसत्त्वात् । तत्परिमाणेनाऽयं व्यपदिश्यते । स च जीवस्वरूपेणानन्त्याय कल्प्यते स्वतः ॥ ९ ॥

किञ्च । नैव स्त्रीति ॥ स्वतोऽद्वितीयपरोक्षब्रह्मात्मस्वभावत्वान्नैव स्त्री न पुमानेष नैव चाऽयं नपुंसकः । यद्यत् स्त्रीशरीरं पुरुषशरीरं वाऽऽदत्ते तेन तेन स च विज्ञानात्मा रक्ष्यते संरक्ष्यते । तत्तद्धर्मानात्मन्यध्यस्याभिमन्यते । स्थूलोऽहं कृशोऽहमहं पुमानहं स्त्री अहं नपुंसक इति ॥ १० ॥

केन तर्ह्यसौ शरीराण्यादत्त इत्याह ॥ सङ्कल्पनेति ॥ प्रथमं सङ्कल्पनं । ततः स्पर्शनं त्वगिन्द्रियव्यापारः । ततो दृष्टिविधानं । ततो मोहः । तैः सङ्कल्पनस्पर्शनदृष्टिमोहैः शुभाशुभानि कर्म्माणि निष्पद्यन्ते । ततः कर्म्मानुगानि कर्म्मानुसारीणि स्त्रीपुंनपुंसकलक्षणानि अनुक्रमेण परिपाकापेक्षया । देही मर्त्यः । स्थानेषु देवतिर्यङ्मनुष्यादिष्वभिसम्प्रपद्यते । तत्र दृष्टान्तमाह ।

श्वे॰उ॰ स्थूलानि सूक्ष्माणि बहूनि चैव
रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां
संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥
अनाद्यनन्तं कलिलस्य मध्ये
विश्वस्य स्रष्टारमनेकरूपं ।

---

श्वे॰भा॰ ग्रासाम्बुनोरन्नपानयोरनियतयोः संहिरासेचनं निदानमात्मनः शरीरस्य वृद्धिर्जायते यथा तद्वदित्यर्थः ॥११॥

स्थूलानीति ॥ स्थूलान्यश्मादीनि । तानि च सूक्ष्माणि तैजसधातुप्रभृतीनि । बहूनि देवादिशरीराणि । देही विज्ञानात्मा स्वगुणैर्विहितप्रतिषिद्धविषयानुभवसंस्कारैर्वृणोति आवृणोति । ततस्तत्क्रियागुणैरात्मगुणैश्च स देही अपरोऽपि देहान्तरसंयुक्तो भवतीत्यर्थः ॥१२॥

स एवमविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रजलनिमग्नो निश्चयेन देहाहंभावमापन्नः प्रेततिर्य्यङ्मनुष्यादियोनिष्वाजवंजवी जवीभावमापन्नः कथञ्चित् पुण्यवशादीश्वरार्थकर्मानुष्ठानेनापगतरागादिमलो नित्यादिदर्शनेनोत्पन्नेहामुत्रार्थफलभोगविरागः शमदमादिसाधनसम्पन्न आत्मानं ज्ञात्वा मुच्यत इत्याह ॥ अनाद्यनन्तमिति ॥ अनाद्यनन्तं आद्यन्तरहितं कलिलस्य मध्ये गहनगभीरसंसारस्य

मू०उ०विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥
भावग्राह्यमनीडाख्यं भावाभावकरं शिवं ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुं ॥ १४ ॥
इति श्वेताश्वतरोपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥
॥ ॐ तत् सत् ॐ ॥

---

श्वे०भा०मध्ये विश्वस्य स्रष्टारमुत्पादयितारं । अनेकरूपं । विश्वस्यैकं परिवेष्टितारं स्वात्मना संव्याप्याऽवस्थितं । ज्ञात्वा देवं ज्योतीरूपं परमात्मानं मुच्यते सर्वपाशैरविद्याकामकर्मभिः ॥ १३ ॥

केन पुनरसौ गृह्यत इत्याह ॥ भावग्राह्यमिति ॥ भावेन विशुद्धान्तःकरणेन गृह्यत इति भावग्राह्यं । अनीडाख्यं नीडं शरीरं अशरीराख्यं । भावाभावकरं शिवं शुद्धं अविद्यातत्कार्य्यविनिर्मुक्तमित्यर्थः । कलानां षोडशानां प्राणादिनामान्तानां स प्राणमसृजतेत्यादीनामाथर्वणोक्तानां सर्गकरं देवं ये विदुरहमस्मीति ते जहुः परित्यजेयुस्तनुं शरीरं ॥ इति श्रीगोविन्द-भगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये पञ्चमोऽध्यायः ॥ ५ ॥ ॐ तत् सत् ॐ ॥

॥ ॐ तत् सत् हरिः ॐ ॥

श्वे॰उ॰ स्वभावमेके कवयो वदन्ति
कालं तथान्ये परिमुह्यमानाः ।
देवस्यैष महिमा तु लोके
येनेदं भ्राम्यते ब्रह्मचक्रं ॥ १ ॥
येनावृतं नित्यमिदं हि सर्वं
ज्ञः कालकारो गुणी सर्वविद्यः ।
तेनेशितं कर्म्म विवर्त्तते ह
पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यं ॥ २ ॥

---

श्वे॰भा॰ नन्वन्ये कालादयः कारणमिति मन्यन्ते तत् कथं पुनरीश्वरस्य कलासर्गकर्तृत्वमित्याशङ्क्याह । स्वभावमिति ॥ स्वभावमेके कवयो मेधाविनो वदन्ति । कालं तथान्ये । कालस्वभावयोर्ग्रहणं प्रथमाध्याये निर्दिष्टानामन्येषामप्युपलक्षणार्थं । परिमुह्यमाना अविवेकिनो विपर्यासमार्गं न सम्यग् जानन्ति । तुशब्दोऽवधारणे । देवस्यैव महिमा माहात्म्यं । येनेदं भ्राम्यते परिवर्त्त्यते ब्रह्मचक्रं ॥ १ ॥

महिमानं प्रपञ्चयति । येनेति ॥ येनेश्वरेणावृतं व्याप्तमिदं जगत् नित्यं नियमेन । ज्ञः कालकारः कालस्यापि कर्त्ता । गुणी अपहतपाप्मादिमान् । सर्वं वेत्तीति सर्वविद्यः । तेनेश्वरेणेशितं प्रेरितं कर्म्म क्रियत इति सजीव पाणौ । हशब्दः प्रसिद्धिद्योतकः । प्रसिद्धं परे-

श्वे॰उ॰तत् कर्म्म कृत्वा विनिवर्त्य भूय-
स्तत्त्वस्य तत्त्वेन समेत्य योगं ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा
कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥
आरभ्य कर्म्माणि गुणान्वितानि
भावांश्च सर्व्वान् विनियोजयेद्यः ।

---

श्वे॰भा॰तदीश्वरप्रेरकं कर्म्म विवर्त्तत इति । जगदात्मना यत् पुनस्तत् कर्म्म पृथ्व्याप्तेजोऽनिलखानि पृथिव्यादिभूतपञ्चकं यत् प्रथमाध्याये चिन्त्यमित्युक्तं ॥ २ ॥

एतदेव प्रपञ्चयति । तदिति ॥ तत् कर्म्म पृथिव्यादि सृष्ट्वा विनिवर्त्य प्रत्यवेक्षणं कृत्वा भूयः पुनस्तस्यात्मनस्तत्त्वेन भूम्यादिना योगं समेत्य सङ्गमय्य । विलोपो द्रष्टव्यः । कतिविधैः प्रकारैः । एकेन द्वाभ्यां त्रिभिरष्टभिर्व्वा प्रकृतिभूतैस्तत्त्वैः । तदुक्तं ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति कालेन चैवात्मगुणैश्चान्तःकरणगुणैः कामादिभिः सूक्ष्मैः ॥ ३ ॥

इदानीं कर्म्मणां मुख्यविनियोगं दर्शयति । आरभ्येति ॥ आरभ्य कृत्वा कर्म्माणि गुणैः सत्त्वादिभिरन्वितानि योजयेदीश्वरे समर्पयेद् यस्तेषामीश्वरे समर्पितत्वादात्म-

मं॰उ॰तेषामभावे कृतकर्म्मनाशः
कर्म्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥
आदिः स संयोगनिमित्तहेतुः
परस्त्रिकालादकालोऽपि दृष्टः ।

---

शं॰भा॰सत्त्वस्याभावस्तदभावे पूर्व्वकृतकर्म्मणां नाशः । उक्तञ्च ॥

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणं ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः ।
ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ॥
योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥

इति च कर्म्मक्षये विशुद्धसत्त्वो याति ततोऽन्यस्तत्त्वेभ्यः प्रकृतिभूतेभ्योऽव्यैद्याविद्यातत्कार्य्यविनिर्मुक्तस्सत्‌मद्वानन्दाऽद्वितीयब्रह्मात्मत्वेनावगच्छन्नित्यर्थः । अन्यदिति पाठे तत्त्वेभ्यो यदन्यद् ब्रह्म तद्यातीति ॥ ४ ॥

उक्तस्यार्थस्य दृढिम्न उत्तरे मन्त्राः प्रस्तूयन्ते कथं नाम विषयविषान्धाः कथं नाम ब्रह्म जानीयुरित्यत आह । आदिरिति ॥ आदिः कारणं सर्व्वस्य शरीरसंयोगनिमित्तानामविद्यानां हेतुः । उक्तञ्च । एष एव साधु कर्म्म कारयति च । परस्त्रिकालादतीतानागतवर्त्तमा-

श्वे॰उ॰तं विश्वरूपं भवभूतमीड्यं
देवं स्वचित्तस्थमुपास्य पूर्वं ॥ ५ ॥
स वृक्षकालाकृतिभिः परोऽन्यो
यस्मात् प्रपञ्चः परिवर्त्तते यं ।
धर्म्मावहं पापनुदं भगेशं
ज्ञात्वात्मस्थममृतं विश्वधाम ॥ ६ ॥

---

श्वे॰भा॰न्नात्। उक्तञ्च। यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्त्तते। तद्देवाः ज्योतिषां ज्योतिः। आयुर्होपासते। इतं कस्मात्। यस्मादकालोऽसौ न विद्यन्ते कालाः प्राणादिनामान्ता अस्येत्यकालः। कालवद्धि कालत्रयपरिच्छिन्नमुत्पद्यते विनश्यति च। अयं पुनरकालो निष्प्रपञ्चः। तस्मान्न कालत्रयपरिच्छिन्नमुत्पद्यते विनश्यति च। तं विश्वानि रूपाण्यस्येति विश्वरूपं। भवत्यस्मादिति भवः। भूतमवितथस्वरूपं। ईड्यं देवं स्वचित्तस्थं उपास्यायमहमस्मीति समाधाय ज्ञात्वेत्यर्थः ॥ ५ ॥

पूर्ववाक्यार्थज्ञानोदयात् पुनरपि तमेव दर्शयति। स वृक्षेति ॥ स वृक्षाकारेभ्यः कालाकारेभ्यः परो वृक्षकालाकृतिभिः परो वृक्षः संसारवृक्षः। उक्तञ्च।

ऊर्द्धमूलो ह्यवाक्शाख एषोऽश्वत्थः सनातन इति। अन्यः प्रपञ्चासंस्पृष्ट इत्यर्थः। यस्मादीश्वरात् प्रपञ्चः परिवर्त्तते। धर्म्मावहं पापनुदं। भगस्यैश्वर्यादेरीशं स्वामिनं

श्वे॰उ॰ तमीश्वराणां परमं महेश्वरं
तं देवतानां परमञ्च दैवतं ।
पतिं पतीनां परमं परस्ताद्
चिदाम देवं भुवनेशमीडं ॥ ७ ॥
न तस्य कार्य्यं करणञ्च विद्यते
न तत् समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥

---

श्वे॰भा॰ ह्याला । आत्मस्थं आत्मनि बुद्धौ स्थितं । अमृतममरणधर्माणं । विश्वधाम विश्वस्याधारभूतं यतति ततोऽन्य इति सर्व्वेव सम्बध्यते ॥ ६ ॥

इदानीं विद्वदनुभवं दर्शयन्नुक्तमर्थं दृढीकरोति । तमीश्वराणामिति ॥ तमीश्वराणां वैवस्वतादीनां परमं महेश्वरं । तं देवतानामिन्द्रादीनां परमञ्च दैवतं । पतिं पतीनां प्रजापतीनां परमं । परस्तात् परतोऽक्षरात् । विदाम देवं द्योतनस्वभावं । भुवनानामीशं भुवनेशं । ईड्यं स्तुत्यं ॥ ७ ॥

कथं महेश्वरमित्याह । न तस्येति ॥ न तस्य कार्य्यं शरीरं करणं चक्षुरादि विद्यते । न तत् समश्चाभ्यधिकश्च दृश्यते श्रूयते वा । पराऽस्य शक्तिर्विविधैव श्रूयते सा च स्वाभाविकी ज्ञानबलक्रिया च । ज्ञान-

श्वे०उ०न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गं ।
स कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥
यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः ।
स्वभावतो देव एकः स्वमावृणोत् ।
स नो दधाद्ब्रह्माप्ययं ॥ १० ॥

---

श्वे०भा०क्रिया च बलक्रिया च ज्ञानक्रिया सर्व्वविषयज्ञानप्रवृत्तिः बलक्रिया स्वसन्निधिमात्रेण सर्व्वं वशीकृत्य नियमनं। यस्मादेवं तस्मात् ॥ ८ ॥

न तस्येति ॥ न तस्य कश्चित् पतिरस्ति लोके। अत एव न तस्येशिता नियन्ता। नैव च तस्य लिङ्गं चिह्नं धूमस्थानीयं येनानुमीयेत। स सकारणं सर्व्वस्य कारणं। करणाधिपाधिपः परमेश्वरः। यस्मादेवं तस्मात् न तस्य कश्चिज्जनिता जनयिता न चाधिपः ॥ ९ ॥

इदानीं मन्त्रदृगभिप्रेतमर्थं प्रार्थयते ॥ यस्तूर्णनाभ इति ॥ यथोर्णनाभिरात्मप्रभवैस्तन्तुभिरात्मानमेव समावृणोत् तथा प्रधानजैरव्यक्तप्रभवैर्नामरूपकर्मभिः स्वस्थानीयैः स्वमात्मानमावृणोद् आवृणोति सच्छादितवान् सः नो मह्यं ब्रह्माप्ययं ब्रह्माप्ययं एकीभावं दधात् ददात्वित्यर्थः ॥ १० ॥

श्वे०उ० एको देवः सर्व्वभूतेषु गूढः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा ।
कर्म्माध्यक्षः सर्व्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥
एको वशी निष्क्रियाणां बहूना-
मेकं वीजं बहुधा यः करोति ।

---

श्वे०भा० पुनरपि तमेव करतलन्यस्तामलकवत् साक्षाद्दर्शयन् तद्विज्ञानादेव परमपुरुषार्थप्राप्तिर्नान्येनेति दर्शयति मन्त्रद्वयेन । एको देव इति ॥ एकोऽद्वितीयो देवः द्योतनस्वभावः । सर्व्वभूतेषु गूढः सर्व्वप्राणिषु संवृतः । सर्व्वव्यापी सर्व्वभूतान्तरात्मा स्वरूपभूत इत्यर्थः । कर्म्माध्यक्षः सर्व्वप्राणिकृतविचित्रकर्म्माधिष्ठाता । सर्व्वभूताधिवासः सर्व्वप्राणिषु वसतीत्यर्थः । सर्व्वेषां भूतानां साक्षी सर्व्वद्रष्टा । साक्षाद्द्रष्टरि सञ्ज्ञायामिति स्मरणात् । चेता चेतयिता । केवलो निरुपाधिकः । निर्गुणः सत्त्वादिगुणरहितः ॥ ११ ॥

एको वशीति ॥ एको वशी स्वतन्त्रः । निष्क्रियाणां बहूनां । जीवानां सर्व्वा हि क्रिया नात्मनि समवेताः किन्तु देहेन्द्रियेषु । आत्मा तु निष्क्रियो निर्गुणः सत्त्वादिगुणरहितः कूटस्थः तथानात्मधर्म्मा नात्मन्यध्यस्या ऽभिमन्यते कर्त्ता भोक्ता सुखी दुःखी कृशः स्थूलो मनुष्योऽमुष्य पुत्रोऽस्य नप्तेति ॥ उक्तञ्च ॥

श्वे०उ०तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषां ॥ १२ ॥
नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
तत् कारणं साङ्ख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥

---

शां०भा० प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्व्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥
तत्त्ववित्तु महाबाहो गुणकर्म्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्म्मसु । इति ॥

एकं बीजं बीजस्थानीयं सूक्ष्मभूतं। बहुधा यः करोति तमात्मस्थं बुद्धौ स्थितं येऽनुपश्यन्ति साक्षाज्जानन्ति ते धीरा बुद्धिमन्तस्तेषामात्मविदां सुखं शाश्वतं नेतरेषामनात्मविदां ॥ १२ ॥

किञ्च । नित्य इति ॥ नित्यो नित्यानां जीवानां मध्ये तन्नित्यत्वेन तेषामपि नित्यत्वमित्यभिप्रायः । अथवा पृथ्व्यादीनां मध्ये । तथा चेतनश्चेतनानां प्रमातॄणां मध्ये । एको बहूनां जीवानां यो विदधाति प्रयच्छति कामान् कामनिमित्तान् भोगान् । सर्व्वस्य सांख्ययोगाधिगम्यं ज्ञात्वा देवं ज्योतिर्मयं मुच्यते सर्व्वपाशैरविद्यादिभिः ॥ १२ ॥

श्वे॰उ॰ न तत्र सूर्य्यो भाति न चन्द्रतारकं ।
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं ।
तस्य भासा सर्वमिदं विभाति ॥ १४ ॥
एको हंसो भुवनस्यास्य मध्ये

---

श्वे॰भा॰ कथं चेतनमचेतनानामित्युच्यते । न तत्रेति ॥ तत्र तस्मिन् परमात्मनि सर्व्वावभासकोऽपि सूर्य्यो न भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्व्वात्मनो रूपजातं प्रकाशयति । न तु तस्य स्वतः प्रकाशनसामर्थ्यं । तथा न चन्द्रतारकं । नेमा विद्युतो भान्ति । कुतोऽयमग्निरस्मद्गोचरः । किं बहुना । यदिदं जगद्भाति तमेव स्वतो भारूपत्वाद् भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा लोहादिवदग्निं दहन्तमनुदहति न स्वतः । तस्यैव भासा दीप्त्या सर्व्वमिदं सूर्य्यादि भाति । उक्तञ्च । येन सूर्य्यस्तपति तेजसेद्धः । न तद्भासयते सूर्य्यो न शशाङ्को न पावक इति । ज्ञात्वा देवं मुच्यत इत्युक्तं ॥ १४ ॥

कस्मात् पुनरेतमेव विदित्वा मुच्यते नान्येनेत्यत आह । एक इति ॥ एकः परमात्मा हन्त्यविद्यादिबन्धकारणमिति हंसः । भुवनस्याऽस्य त्रैलोक्यस्य मध्ये नान्यः कश्चित् । कस्मात् । यस्मात् स एवाग्निः । अग्निरिवाऽग्निरविद्यातत्कार्य्यस्य दाहकत्वात् । उक्तञ्च । व्योमातीतोऽग्निरीश्वर इति । सलिले देहात्मना परिणते । उक्तस्येति तु पद्य-

श्वे॰उ॰ स एवाग्निः सलिले सन्निविष्टः ।
तमेव विदित्वाऽतिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥
स विश्वकृद्विश्वविदात्मयोनिः
कालकारो गुणी सर्व्वविद् यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥

---

श्वे॰भा॰ स्यामाऊतावापः पुरुषवचसो भवन्तीति । सन्निविष्टः सम्यगात्मत्वेन । यथा सलिले सलिल इव स्वच्छे । यज्ञदानादिना विमलीकृतेऽन्तःकरणे सन्निविष्टो वेदान्तवाक्यार्थः सम्यग् ज्ञानफलकारूढोऽविद्यातत्कार्य्यस्य दाहक इत्यर्थः । तस्मात् तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय परमपदप्राप्तये ॥ १५ ॥

पुनरपि विशेषतो दर्शयति ॥ स विश्वकृदिति ॥ स विश्वकृद्विश्वस्य कर्त्ता । विश्वं वेत्तीति विश्ववित् । आत्मा चासौ योनिश्चेत्यात्मयोनिः । सर्व्वस्यात्मा सर्व्वस्य च योनिश्चैतन्यं ज्योतिरित्यर्थः। कालकारः कालस्य कर्त्ता । गुणी अपहतपाप्मादिमान् विश्वविदित्यस्य प्रपञ्चः । प्रधानमव्यक्तं । क्षेत्रज्ञो विज्ञानात्मा । तयोः पतिः पालयिता । गुणानां सत्त्वरजस्तमसामीशः । संसारमोक्षस्थितिबन्धानां हेतुः कारणं ॥ १६ ॥

श्वे॰उ॰ स तन्मयो ह्यमृत ईशसंस्थो
ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशेऽस्य जगतो नित्यमेव
नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥
यो ब्रह्माणं विदधाति पूर्वं
यो वै वेदांश्च प्रहिणोति तस्मै ।

---

श्वे॰भा॰ स तन्मय इति ॥ स तन्मयो विश्वात्मा । अथवा तन्मयो ज्योतिर्मय इति । तस्य भासा सर्वमिदं विभातीत्येतदपेक्षयोच्यते । अमृतोऽमरणधर्मा । ईशे स्वामिनि सम्यक् स्थितिर्यस्यासावीशसंस्थः । जानातीति ज्ञः । सर्वत्र गच्छतीति सर्वगः । भुवनस्यास्य गोप्ता पालयिता । य ईशे ईष्टे । अस्य जगतो नित्यमेव नियमेन नान्यो हेतुः समर्थो विद्यते ईशनाय जगदीशनाय ॥ १७ ॥

यस्मात् स एव संसारमोक्षस्थितिबन्धहेतुस्तस्मात् तमेव मुमुक्षुः सर्वात्मना शरणं प्रपद्येत गच्छेदिति प्रतिपादयितुमाह । यो ब्रह्माणमिति ॥ यो ब्रह्माणं हिरण्यगर्भं विदधाति सृष्टवान् पूर्वं सर्गादौ । यो वै वेदांश्च प्रहिणोति तस्मै । तं ह शब्दोऽवधारणे । तमेव परमात्मानं । उक्तञ्च ।

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥

श्वे॰उ॰ तꣳह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥
निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनं ।
अमृतस्य परꣳ सेतुं दग्धेन्धनमिवानलं॥ १९॥

---

श्वे॰भा॰ तमेवैकं जानथ आत्मानमिव देवं ज्योतिर्मयं । आत्मनि या बुद्धिस्तस्याः प्रसादकरी । प्रसन्ने हि परमेश्वरे बुद्धिरपि तद्विषया प्रमा निष्प्रपञ्चाकारब्रह्मात्मनाऽवतिष्ठते वर्त्तते । आत्मबुद्धिप्रकाशमित्यन्येऽधीयते । आत्मबुद्धिप्रकाशिनीत्यात्मबुद्धिप्रकाशं । अथवा आत्मैव बुद्धिरात्मबुद्धिः सैव प्रकाशः । सैव प्रकाशोऽस्येति आत्मबुद्धिप्रकाशं मुमुक्षुर्वै वैशब्दोऽवधारणे मुमुक्षुरेव सन् न फलान्तरमिच्छन् शरणमहं प्रपद्ये । एवं तावत् सृष्ट्यादिना प्रपञ्चस्वरूपमुपदर्शितं ॥ १८ ॥

अथेदानीं स्वस्वरूपेण दर्शयति । निष्कलमिति । कला अवयवा निर्गता यस्मात् तन्निष्कलं निरवयवमित्यर्थः । निष्क्रियं स्वमहिमप्रतिष्ठितं कूटस्थमित्यर्थः । शान्तमुपसंहृतसर्व्वविकारं । निरवद्यं अगर्हणीयं । निरञ्जनं निर्लेपं । अमृतस्य अमृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः संसारमहोदधेरुत्तारणोपायत्वात् तं । अमृतस्य परं सेतुं दग्धेन्धनानलमिव देदीप्यमानं प्रटप्रटायमानं ॥ १९ ॥

श्वे॰उ॰ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥२०॥

---

शंभा॰ किमिति तमेव विदित्वा मुच्यते नान्येनेति तत्राह । यदेति ॥ यदा चर्म सङ्कोचयिष्यति तददाकाशं मूर्तं व्यापिनं यदि वेष्टयन्ति संवेष्टयिष्यन्ति मानवास्तदा देवं ज्योतिर्मयमनुदितानस्तमितज्ञानात्मनाऽवस्थितमशनायाद्यसंस्पृष्टं परमात्मानमविज्ञाय दुःखस्याध्यात्मिकाधिभौतिकाधिदैविकस्यान्तो विनाशो न भविष्यति । आत्माज्ञाननिमित्तत्वात् संसारस्य । यावत् परमात्मानमात्मत्वेन न जानाति तावत् तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततः कृष्यमाणः प्रेततिर्यङ्मनुष्यादियोनिष्वजस्रं जीवीभावमापन्नो मुह्यमानः संसरति । यदा पुनरपूर्वमनपरं नेति नेतीत्यादिलक्षणमशनायाद्यसंस्पृष्टमनुदितानस्तमितज्ञानात्मनावस्थितं पूर्णानन्दं परमात्मानमात्मत्वेन साक्षाज्जानाति तदा निरस्ताज्ञानतत्कार्यः पूर्णानन्दो भवतीत्यर्थः । उक्तञ्च ।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥
तेषामादित्यवत् ज्ञानं प्रकाशयति तत् परं ।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१०॥

श्वे॰उ॰ तपःप्रभावाद्वेदप्रसादाच्च
ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।

---

श्वे॰भा॰ सम्प्रदायपरम्परया ब्रह्मविद्याया मोक्षप्रदत्वं प्रदर्शयितुं सम्प्रदायं विद्याधिकारिणश्च दर्शयति । तपःप्रभावादिति॥ तपसः कृच्छ्रचान्द्रायणादिलक्षणस्य । तच्च तपःशब्दस्य रूढिलाभित्यादीनां विधिवदनुष्ठितानां कर्म्मणां मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमन्तप इति स्मरणात् । तस्य च सर्व्वस्य तपसस्तस्मिन् श्वेताश्वतरे नियमेन सत्वात् तत्प्रभावात् तत्सामर्थ्याद् वेदप्रसादाच्च कैवल्यमुद्दिश्य तदधिकारसिद्धये सङ्गजन्मसु सम्यगाराधितपरमेश्वरस्य प्रसादाच्च ब्रह्मापरिच्छिन्नं सत्यत्वं । ह इति प्रसिद्धिद्योतनार्थः। श्वेताश्वतरो नाम ऋषिर्व्विद्वान् यथोक्तं ब्रह्म परम्पराप्राप्तं गुरुमुखाच्छ्रुत्वा मननिदिध्यासनादरनैरन्तर्य्यसत्काराद्भिर्ब्रह्माहमस्मीत्यपरोक्षीकृताखण्डसाक्षात्कारवान् । अथ स्वानुभवदार्ढ्यानन्तरं अत्याश्रमिभ्यः । अति पूजायामिति स्मरणात् । अत्यन्तं पूज्यतमाश्रमिभ्यः साधनचतुष्टयसम्पत्तिमद्भिरा स्वेषु देहादिष्वपि जीवनभोगादिष्वनास्थावद्भ्यः । अत एव वैराग्यपुष्कलवद्भ्यः । तदुक्तं ।

वैराग्यं पुष्कलं न स्यान्निष्फलं ब्रह्मदर्शनं ।
तस्माद्रचेत विरतिं सुधी यत्नेन सर्व्वदेति ॥

श्वे॰उ॰ अत्याश्रमिभ्यः परमं पवित्रं
प्रोवाच सम्यगृषिसङ्घजुष्टं ॥ २१ ॥
वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितं ।

---

शं॰भा॰ स्मृत्यन्तरे च ॥

यदा मनसि वैराग्यं जायते सर्व्ववस्तुषु ।
तदैव सन्यसेद् विद्वानन्यथा पतितो भवेत् ॥

इति परमहंससन्यासिनस्त एवात्याश्रमिणः। तथा च श्रूयते। न्यास इति ब्रह्म। ब्रह्मा हि परः परो हि। तानि वा एतान्यवराणि तपांसि। न्यास एवात्यरेचयदिति ॥

चतुर्विधा भिक्षवस्तु बहूदककुटीचकौ ।
हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ॥

इति स्मरणाच्च। तेभ्योऽत्याश्रमिभ्यः परमं प्रकृतं ब्रह्म। तदेव परममुत्कृष्टतमं निरस्तसमस्ताविद्यातत्कार्य्यंनिरतिशयसुखैकरसं पवित्रं शुद्धं प्रकृतिप्राकृतादिमलविनिर्मुक्तं। ऋषिसङ्घजुष्टं वामदेवसनकादीनां सङ्घैः समूहैर्जुष्टं सेवितमात्मत्वेन सम्यक् परिभावितं प्रियतमानन्दत्वेनाश्रितं। आत्मनस्तु कामाय सर्वं प्रियम्भवतीति श्रुतेः। सम्यगात्मतयाऽपरोक्षीकृतं यथा भवति तथा। सम्यगिति काकाक्षिन्यायेन उभयत्रानुषङ्गः कर्त्तव्यः। प्रोवाच उक्तवान्। तयोरत्याश्रमिभ्यपरीक्षणपूर्व्वकं विद्या वक्तव्या तद्विहायोक्तो दोषः ॥ २१ ॥

विद्याया वैदिकत्वं गुह्यत्वं सम्प्रदायपरम्परया प्रति-

श्वे॰उ॰ तपःप्रभावाद्वेदप्रसादाच्च
ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।

---

श्वे॰भा॰ सम्प्रदायपरम्परया ब्रह्मविद्याया मोक्षप्रदत्वं प्रदर्शयितुं सम्प्रदायं विद्याधिकारिणश्च दर्शयति । तपःप्रभावादिति॥ तपसः कृच्छ्रचान्द्रायणादिलक्षणस्य । तत्र तपःशब्दस्य कठिनान्नित्यादीनां विधिवदनुष्ठितानां कर्म्मणां मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमन्तप इति स्मरणात् । तस्य च सर्व्वस्य तपसस्तस्मिन् श्वेताश्वतरे नियमेन सत्त्वात् तत्प्रभावात् तत्सामर्थ्याद् वेदप्रसादाच्च कैवल्यमुद्दिश्य तदधिकारसिद्धये बहुजन्मसु सम्यगाराधितपरमेश्वरस्य प्रसादाच्च ब्रह्मापरिच्छिन्नं महत्तत्वं । ह इति प्रसिद्धिद्योतनार्थः । श्वेताश्वतरो नाम ऋषिर्व्विद्वान् यथोक्तं ब्रह्म परम्परायातं गुरुमुखाच्छ्रुत्वा मनननिदिध्यासनादरनैरन्तर्य्यसत्कारादिभिर्ब्रह्माहमस्मीत्यपरोक्षीकृताखण्डसाक्षात्कारवान् । अथ स्वानुभवादर्व्वागनन्तरं अत्याश्रमिभ्यः । अति पूजायामिति स्मरणात् । अत्यन्तं पूज्यतमाश्रमिभ्यः साधनचतुष्टयसम्पत्तिमद्भ्यः स्वेषु देहादिष्वपि जीवनभोगादिष्वनास्थावद्भ्यः । अत एव वैराग्यपुष्कलवद्भ्यः । तदुक्तं ।

वैराग्यं पुष्कलं न स्यान्निष्फलं ब्रह्मदर्शनं ।
तस्माद्रक्षेत विरतिं बुधो यत्नेन सर्व्वदेति ॥

श्वे॰उ॰अत्याश्रमिभ्यः परमं पवित्रं
प्रोवाच सम्यगृषिसङ्घजुष्टं ॥ २१ ॥
वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितं ।

---

श्वे॰भा॰ स्मृत्यन्तरे च ॥

यदा मनसि वैराग्यं जायते सर्व्ववस्तुषु ।
तदैव सन्यसेद् विद्वानन्यथा पतितो भवेत् ॥

इति परमहंससन्यासिनस्त एवात्याश्रमिणः। तथा च श्रू-यते। न्यास इति ब्रह्म। ब्रह्मा हि परः परो हि। तानि वा एतान्यवराणि तपांसि। न्यास एवात्यरेचयदिति ॥

चतुर्व्विधा भिक्षवस्तु बहूदककुटीचकौ ।
हंसः परमहंसश्च यो यः पश्चात् स उत्तमः ॥

इति स्मरणाच्च। तेभ्योऽत्याश्रमिभ्यः परमं प्रकृतं ब्रह्म। तदेव परममुत्कृष्टतमं निरस्तसमस्ताविद्यातत्कार्य्यनि-रतिशयसुखैकरसं पवित्रं शुद्धं प्रकृतिप्राकृतादिमलवि-निर्मुक्तं। ऋषिसङ्घजुष्टं वामदेवसनकादीनां सङ्घैः समू-हैर्जुष्टं सेवितमात्मत्वेन सम्यक् परिभावितं प्रियतमान-न्दत्वेनाश्रितं। आत्मनस्तु कामाय सर्व्वं प्रियम्भवतीति श्रुतेः। सम्यगात्मतयाऽपरोक्षीकृतं यथा भवति तथा। सम्यगिति काकाक्षिन्यायेन उभयत्रानुषङ्गः कर्त्तव्यः। प्रोवाच भगवान्। तथोक्तशिष्यपरीक्षणपूर्व्वकं विद्या प्रक्तव्या तदितरायोक्तौ दोषः ॥ २१ ॥

विद्याया वैदिकत्वं गुप्तत्वं सम्प्रदायपरम्परया प्रति-

श्वे॰उ॰नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

श्वे॰भा॰ पादितलक्षणाह । वेदान्त इति ॥ वेदान्त इति-आर्थेकवचनं । सकलास्वपनिषत्सु परं परमपुरुषार्थस्वरूपं गुह्यं गोप्यानामपि गोप्यतमं पुराकल्पे प्रचोदितं पूर्वकल्पे चोदितमुद्दिष्टमिति सम्प्रदायप्रदर्शनं कृतमिति । एतत् प्रशान्ताय पुत्राय प्रकर्षेण शान्तं सकलरागादिमलरहितचित्तं यस्य तस्मै तादृशपुत्राय तादृशशिष्याय वा दातव्यं वक्तव्यमिति यावत् । तद्विपरीतायाशिष्याय वा स्नेहादिना ब्रह्मविद्या न वक्तव्या । अन्यथा प्रत्यवायापत्तेरिति पुनःशब्दार्थः । अत एव ब्रह्मविद्याविदुषा गुरुणा चिरकालं परीक्ष्य शिष्यगुणान् ज्ञात्वा ब्रह्मविद्या वक्तव्येति भावः ॥ तथा च श्रुतिः । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं परीक्षेत । श्रुत्यन्तरे च । शतं वर्षं प्रजापतौ मघवान् ब्रह्मचर्यमुवासेति च । एतच्च बहुधा प्रपञ्चितमुपदेशसहस्रिकायामित्यत्र सङ्कोचः कृतः ॥ २२ ॥

अथापि देवतागुरुभक्तिमतामेव गुरुणा प्रकाशिता विद्या ऽनुभवाय भवतीति प्रदर्शयति । यस्येति ॥ यस्य पुरुषस्याधिकारिणो देवे द्योतते स्वयमेव दर्शिताऽखण्डैकरसे सच्चिदानन्दपरज्योतिःस्वरूपिणि परमेश्वरे परा

श्वे०उ०तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः प्रकाशन्ते महात्मनः ॥ २३ ॥ इति श्वेताश्वतरोपनिषत्सु षष्ठोऽध्यायः ॥ ॐ तत् सत् ॐ ॥

---

श्वे०भा०उत्कृष्टा निरुपचरिता भक्तिः। एतदुपलक्षणं। स्वाचार्य्यत्वं श्रद्धा चोभे यथा तथा ब्रह्मविद्योपदेष्टृगुरावपि तदुभयं यस्य वर्त्तते तस्य तद्यथाग्निरसो जठराग्न्यन्वेषणं विहाय यथा साधनान्तरं नास्ति। यथा च बुभुक्षितस्य भोजनादन्यत्र साधनान्तरं न। एवं गुरुकृपां विहाय ब्रह्मविद्या दुर्लभेति त्वरान्वितस्य मुख्याधिकारिणो महात्मन उत्तमस्य एते कथिता अर्थाः श्वेताश्वतरोपनिषदि श्वेताश्वतरेण महात्मना कविना उपदिष्टाः प्रकाशन्ते स्वानुभवाय भवन्ति। द्विर्वचनं मुमुक्षुशिष्यतत्साधनादिदुर्लभप्रदर्शनार्थमध्यायपरिसमाप्त्यर्थमादरार्थञ्च ॥ २३ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ॐ तत्सत् हरिः ॐ ॥

इति श्वेताश्वतरोपनिषत् समाप्ता ॥

